उद्दीप्तैः स्वप्रकाशैरुपचितमहिमामन्मथारेरुदारो ॥
मध्यो मिथ्यार्थसध्यङ् मम दिशतु सदा संगतिं मंगलानां ॥ २१ ॥
नाभीचक्रालवालान्नवनवसुषमादोहदश्रीपरीता–
दुद्गच्छंती पुरस्तादुदरपथमतिक्रम्य वक्षः प्रयांती ॥
श्यामा कामागमार्थप्रकथनलिपिवद्भासते या निकामं ॥
सा मा सोमार्धमौलेः सुखयतु नितरां रोमवल्लीमतल्ली ॥ २२ ॥
आश्लेषेष्वद्रिजायाः कठिनकुचतटीलिप्तकाश्मीरपंक–
व्यासंगादुद्यदर्कद्युतिभिरुपचितस्पर्द्धमुद्दामहृद्यं ॥
दक्षारातेरुदूढप्रतिनवमणिमालावलीभासमानं ॥
वक्षो विक्षोभिताघं सततनतिजुषां रक्षतादक्षतं नः ॥ २३ ॥
वामांके विस्फुरंत्याः करतलविलसच्चारुरक्तोत्पलायाः ॥
कांताया वामवक्षोरुहभरशिखरोन्मर्दनव्यग्रमेकं ॥
अन्यांस्त्रीनप्युदारान् वरपरशुमृगालंकृतानिंदुमौले–
र्बाहूनाबद्धहेमांगदमणिकटकानंतरालोकयामः ॥ २४ ॥
संभ्रांतायाः शिवायाः पतिविलयभयात्सर्वलोकोपतापात् ॥
सिंहग्रस्थापि विष्णोः सरभसमुभयोर्वारणप्रेरणाभ्यां ॥
मध्ये त्रैशंकवीयामनुभवति दशां यत्र हालाहलोष्मा ॥
सोऽयं सर्वापदां नः शमयतु निचयं नीलकंठस्य कंठः ॥ २५ ॥
हृद्यैरद्रींद्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्री–
रुद्योतंत्या नितांतं धवलधवलया मिश्रितो दंतकांत्या ॥
मुक्तामाणिक्यजालव्यतिकरसदृशा तेजसा भासमानः ॥
सद्योजातस्य दद्यादधरमणिरसौ संपदां संचयं नः ॥ २६ ॥
कर्णालंकारनानामणिनिचयरुचां संचयैरंचितायां ॥
वर्ण्यायां स्वर्णपद्मोदरपरिविलसत्कर्णिकासन्निभायां ॥
पद्धत्यां प्राणवायोः प्रणतजनहृदंभोजवासस्य शंभो–
र्नित्यं नश्चित्तमेतद्विरचयतु सुखेनासिकां नासिकायां ॥ २७ ॥
अत्यंतं भासमाने रुचिरतररुचां संगमात्सन्मणीना–
मुद्यच्चंडांशुधामप्रसराति रसनस्पष्टदृष्टापदानि ॥
भूयास्तां भूतये नः करिवरजयिनः कर्णपाशावलंबे ॥

२२ निकामं=अत्यंतं. २३ मतल्ली=श्रेष्ठा, उत्तमा. २४ वक्षोरुहः=स्तनः. २५ त्रैशंकवी=त्रिशंकुसदृशी (त्रिशंकुः=हरिश्चंद्रपिता) अत्रापवादोऽस्तीति भाति. २६ सन्निभा=सदृशी. २७ चंडांशुः=सूर्यः.

भक्तालीभालसज्जज्जनिमरणलिपेः कुंडले कुंडले ते ॥ २८ ॥
याम्यां कालव्यवस्था भवति तनुमतां यो मुखं देवतानां ॥
येषामाहुः स्वरूपं जगति मुनिवरा देवतानां त्रयीं तां ॥
रुद्राणीवक्त्रपंकेरुहसततविहारोत्सुकेंदीदिरेभ्य-
स्तेभ्यः स्त्रिभ्यः प्रणामांजलिमुपरचये त्रीक्षणस्येक्षणेभ्यः ॥
वामं वामांकगाया वदनसरसिजव्यालगद्वल्लभाया
व्यानम्रेष्वन्यदन्यत्पुनरलिकभवं वीतनिःशेषरौक्ष्यं ॥
भूयोभूयोऽपि मोदान्निपतदतिदयाशीतलं चूतबाणे ॥
दक्षारेरीक्षणानां त्रयमपहरतादाशु तापत्रयं नः ॥ ३० ॥
यस्मिन्नर्धेंदुमुग्धद्युतिनिचयतिरस्कारनिस्तंद्रकांतौ ॥
काश्मीरक्षोदसंकल्पितमिव रुचिरं चित्रकं भाति नेत्रं ॥
तस्मिन्नुल्लोलचिल्लीनटवरतरुणीलास्यरंगायमाणे ॥
कालारेः फालदेशे विहरतु हृदयं वीतचिंतांतरं नः ॥ ३१ ॥
स्वामिन् गंगामिवांगीकुरु तव शिरसा मामपीत्यर्थयंतीं ॥
धन्यां कन्यां खरांशोः शिरसि वहति किंन्वेष कारुण्यशाली ॥
इत्थं शंकां जनानां जनयदतिघनं [53]कैशिकं कालमेघ-
च्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥ ३२ ॥
शृंगाराकल्पयोग्यैः शिखरिवरसुतासत्सखीहस्तलूनैः ॥
सूनैराबद्धमालावलिपरिविगलत्सौरभाकृष्टभृंगं ॥
तुंगं माणिक्यकांत्या परिहसितसुरावासशैलेंद्रशृंगं ॥
संघं नः संकटानां विघटयतु सदा कांकटीकं किरीटं ॥ ३३ ॥
वक्राकारः कलंकी जडतनुरहमप्यग्रिसेवानुभावा-
दुत्तंसत्वं प्रयातः सुलभतरघृणास्यंदिनश्चंद्रमौलेः ॥
तत्सेवंतां जनौघाः शिवमिति निजयाऽवस्थयैव ब्रुवाणं ॥
वंदे देवस्य शंभोर्मुकुटसुघटितं मुग्धपीयूषभानुं ॥ ३४ ॥
कांत्या संफुल्लमल्लीकुसुमधवलया व्याप्य विश्वं विराजन् ॥
वृत्ताकारो वितन्वन्मुहुरपि च परां [56]निर्वृतिं पादभाजां ॥
सानंदं नंदिदोष्णा मणिकटकवता वाह्यमानः पुरारेः ॥
श्वेतच्छत्राख्यशीत[57]द्युतिरपहरतादापदस्तापदा नः ॥ ३५ ॥

---

४८ याम्यां कालव्यवस्था भवति=सूर्याचे द्रमसौ. ४९ देवतानां मुखं=अग्निः ५० त्रयी=वेदत्रितयं. ५१ रुद्राणी=भवानी. ५२ खरांशोः कन्या=यमुना. ५३ कैशिक=केशसबंधि. ५४ आकल्पः=रचना, भूषण. ५५ पीयूषभानु=चंद्रः. ५६ निर्वृतिः=सौख्य. ५७ शीतद्युतिः=चंद्रः

दिव्याकल्पोज्वलानां शिवगिरिसुतयोः पार्श्वयोराश्रितानां ॥
रुद्राणीसत्स्त्रीनां मदतरलकटाक्षांचलैरंचितानां ॥
उद्वेलद्बाहुवल्लीविवलनसमये चामरांदोलिनीना-
मुद्भूतः कंकणालिवलनकलकलो वारयेदापदो नः ॥ ३६ ॥
स्वर्गौकःसुं[58]दरीणां सुललितवपुषां स्वामिसेवापराणां ॥
वल्गद्भूपाणि यन्मांबुजपरिविगलन्मुग्धगीतामृतानि ॥
नित्यं नृत्तान्युपासे भुजविधुतिपदन्यासभावावलोक-
प्रत्युद्यत्प्रीतिमाद्यत्प्र[59]मथनटनटीदत्तसंभावनानि ॥ ३७ ॥
स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यंजयन्मंजुवीणा-
स्वानावच्छिन्नतालक्रममममृतमिवास्वाद्यमानं शिवाभ्यां ॥
नानारागातिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धम् ॥
गानं वीणामहर्षेः कलमतिललितं कर्णपूरायतान्नः ॥ ३८ ॥
चेतो जातप्रमोदं सपदि विदधती प्राणिनां वाणिनीनां[60] ॥
पाणिद्वंद्वाग्रजाग्रत्सुललितरणितस्वर्णतालानुकूला ॥
स्वीयारावेण पाथोधररवपटुना नादयंती मयूरीं॥
मायूरीमंदभावं मणिमुरवभवा मार्जना मार्जयेन्नः ॥ ३९॥
देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः ॥
साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जा[61]तिकीटादिकेभ्यः ॥
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये संति तेभ्यः ॥
सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥ ४० ॥
इत्थं ध्यायन्प्रभाते प्रतिदिवसमिदं स्तोत्ररत्नं पठेद्यः ॥
किंवा ब्रूमस्तदीयं सुचरितमथवा कीर्तयामः समा[62]सात् ॥
संपज्जातं समग्रं सदसि बहुमतिं सर्वलोकप्रियत्वं ॥
संप्राप्यायुः शतांते पदमयं[63]ति परब्रह्मणो मन्मथारेः ॥ ४१ ॥
इति श्रीमद्गोविंदभगवत्पूज्यपादशिष्यश्रीमच्छंकराचार्यस्वामिविरचितं श्रीपा-
दादिकेशस्तोत्रं संपूर्णम् ॥

---

५८ स्वर्गौकःसुदरी=अप्सरा. ५९ प्रमथा=गणाः. ६० वाणिनी=नर्तकी. ६१ पतज्जा-
तिः=पक्षी. ६२ समासः=संक्षेपः ६३ अयति=गच्छति.

श्रीशंकराचार्यकृतः

# प्रबोधसुधाकरः

नित्यानंदैकरसं सच्चिन्मात्रं स्वयंज्योतिः ॥
पुरुषोत्तममजमीशं वंदे श्रीयादवाधीशम् ॥ १ ॥
यं वर्णयितुं साक्षाच्छ्रुतिरपि मूकेव मौनमावहति[1] ॥
सोऽस्माकं मनुजानां किं वाचां गोचरो[2] भवति ॥ २ ॥
यद्यप्येवं विदितं तथापि परिभाषितं[3] भवेदेव ॥
अध्यात्मशास्त्रसारं हरिचिंतनकीर्तनाभ्यासैः ॥ ३ ॥
क्लृप्तैर्[4]बहुभिरुपायैरभ्यासज्ञानभक्त्याद्यैः ॥
पुंसो विना विरागं मुक्तेरधिकारिता[5] न स्यात् ॥ ४ ॥
वैराग्यमात्मबोधो भक्तिश्चेति त्रयं गदितं[6] ॥
मुक्तेः साधनमादौ तत्र विरागो वितृष्णता[7] प्रोक्ता ॥ ५ ॥
सा चाहंममताभ्यां[8] प्रच्छन्ना सर्वदेहेषु ॥
तत्राहंता देहे ममता भार्यादिविषयेषु ॥ ६ ॥
देहः किमात्मकोऽयं कः संबंधोऽथवा विषयैः ॥
एवं विचार्यमाणेऽहंता ममता निवर्तेते[9] ॥ ७ ॥
स्त्रीपुंसोः संयोगात्संपाते[10] शुक्रशोणितयोः[11] ॥
प्रविशन् जीवः शनकैः स्वकर्मणा गर्भमालभते ॥ ८ ॥
मातृगुरूदर्यां[12] कफमूत्रपुरीषपूर्णायाम् ॥
जठराग्निज्वालायां नवमासं पच्यते जंतुः ॥ ९ ॥
दैवात्प्रसूतिसमये शिशुस्तिरश्चीनतां[13] यदा याति ॥
शस्त्रैर्विखंड्य स तदा बहिरिह निष्काश्यतेऽतिबलात् ॥ १० ॥
अथवायं तच्छिद्राद्यदा तु निःसार्यते प्रबलैः ॥
प्रसवसमीरैश्च तदा यः क्लेशः सोप्यनिर्वाच्यः ॥ ११ ॥
आधिव्याधिवियोगाद्यात्मीयविपत्कलहदीर्घदारिद्र्यैः ॥
जन्मानंतरमपि यः क्लेशः किं शक्यते वक्तुम् ॥ १२ ॥
नरपशुविहंगतिर्यग्योनीनां[14] चतुरशीतिलक्षाणि ॥

---

१ आवहति=अङ्गीकरोति. २ वाचांगोचरः=वाग्विषयः, वर्णयितुं शक्यः ३ परिभाषितम् =वर्णितम्. ४ क्लृप्तैः=शास्त्रविहितैः. ५ अधिकारिता=योग्यता. ६ गदितम्=कथितम्. ७ वितृष्णता=विषयेष्वनासक्तिः ८ अहंममताभ्याम्=अहंता ममता च ताभ्याम्. ९ निवर्तेते=नश्यतः. १० संपात.=एकत्रपतनम्, संमेलनम्. ११ शुक्रम्=वीर्यम्. १२ गुरूदरदरी=महती उदररूपा दरी. १३ तिरश्चीनता=वक्रस्थितिः. १४ तिर्यङ्=पशुपक्ष्यादिः, वृक्षादिरिति जैनमतम्.

कर्मनिबद्धो जीवः परिशमन्यातनां भुंक्ते ॥ १३ ॥
चरमस्तत्र नृदेहस्तत्राग्रजन्मान्वयोत्पत्तिः ॥
स्वकुलाचारविचारः श्रुतिप्रचारस्तत्रापि ॥ १४ ॥
आत्मानात्मविवेको देहस्य विनाशिताज्ञानं ॥
एवं सति स्वमायुः प्राज्ञैरपि नीयते मिथ्या ॥ १५ ॥
आयुः क्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि ॥
तच्चेद्गच्छति सर्वं मृषा ततः काधिका हानिः ॥ १६ ॥
नरदेहातिक्रमणात् प्राप्तौ पश्वादिदेहानां ॥
स्वतनोरप्यज्ञाने परमार्थस्यापि का वार्ता ॥ १७ ॥
सततं प्रवाह्यमानैर्वृषभैरश्वैः खरैर्गजैर्महिषैः ॥
हा कष्टं क्षुत्क्षामैः श्रांतैर्नो शक्यते वक्तुम् ॥ १८ ॥
रुधिरत्रिधातुमज्जामेदोमांसास्थिनिर्मितो देहः ॥
सबहिस्त्वचा पिनद्धस्तस्मान्नो भक्ष्यते काकैः ॥ १९ ॥
नासाग्राद्वदनाद्वा कफं मलं पायुतो विसृजन् ॥
स्वयमेवैति जुगुप्सामंतःप्रसृतं च नो वेत्ति ॥ २० ॥
पथि पतितमस्थि दृष्ट्वा स्पर्शभयादन्यमार्गतो याति ॥
नो पश्यति निजदेहमस्थिसहस्रावृतं परितः ॥ २१ ॥
केशावधि हि नखाग्रादिदमंतःपूतिगंधसंपूर्णम् ॥
बहिरपि जानंश्चंदनकर्पूराद्यैर्विलेपयति ॥ २२ ॥
यत्नादस्य पिधत्ते स्वाभाविकदोषसंघातं ॥
औपाधिकगुणनिवहं[29] प्रकाशयञ्श्लाघते मूढः ॥ २३ ॥
क्षतमुत्पन्नं देहे यदि न प्रक्षाल्यते त्रिदिनं ॥
तत्रोत्पतंति बहवः कृमयो दुर्गंधिसंकीर्णे[30] ॥ २४ ॥
यो देहः सुप्तोऽभूत्सुपुष्पशय्योपशोभिते तल्पे ॥
संप्रति स रज्जुकाष्ठैर्नियंत्रितैः क्षिप्यते वह्नौ ॥ २५ ॥
सिंहासनोपविष्टं यं दृष्ट्वा मुदमवाप लोकोऽयं ॥

---

१५ चरमः=अन्त्यः १६ अग्रजन्मान्वयः=ब्राह्मणवंशः १७ मिथ्या=मृषा=व्यर्थम्. १८ अतिक्रमणम्=उल्लंघनम्. १९ प्रवाह्यमानैः=भारवहने नियोजितैः. २० क्षुत्क्षामैः=क्षुधापीडितैः २१ त्रिधातु=कफवातपित्तम्. २२ पायुः,=मलविसर्जनद्वारम्, गुदम. २३ जुगुप्सा=कुत्सा, निंदा. २४ केशावधि=केशाग्रपर्यन्तम्. २५ पूतिगंधः=दुर्गन्धः २६ पिधत्ते=आच्छादयति. २७ संघातः=समूहः. २८ औपाधिकः=उपचारजन्यः २९ निवहः=समुदायः ३० संकीर्णे=व्याप्ते. ३१ नियंत्रितः=बद्धः. ३२ मुद्=आनंदः

तं कान्ताकृष्टतनुं विलोक्य नेत्रे निमीलयति ॥ २६ ॥
एवं विधमतिमलिनं देहं यस्तत्तया चलति ॥
तं विस्मृत्य परेशं वहंत्यहंतामनित्ये[33]ऽस्मिन् ॥ २७ ॥
क्वात्मा सच्चिद्रूपः[34] क्व मांसरुधिरास्थिनिर्मितो देहः ॥
इति यो लज्जति धीमानितरशरीरं स किं मनुते ॥ २८ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे देहनिंदाप्रकरणं प्रथमम् ॥ १ ॥
मूढः कुरुते विषयजकर्दम[35]संमार्जनं[36] मिथ्या ॥
दूरादुष्टजलवृष्टिभिरसंदेहं पतत्येव ॥ १ ॥
भार्या रूपविहीना मनसः खेदाय जायते पुंसाम् ॥
अतिरूपवती हि यदा सा परपुरुषैर्वशीक्रियते ॥ २ ॥
यः कश्चित्परपुरुषो मित्रं भृत्योऽथवा भिक्षुः ॥
पश्यति स साभिलाषं विवक्षितो[37]दारिरूपवतीम् ॥ ३ ॥
यं कंचित्पुरुषवरं स्वभर्तुरतिसुंदरं दृष्ट्वा ॥
न मृगयति किं मृगाक्षी मनसैव परास्त्रियं पुरुषः ॥ ४ ॥
एवं सुरूपनार्या भर्ता कोपात्प्रतिक्षणं क्षीणः ॥
नो लभते सुखलेशं बलिमिव बलिभु[38]ग्बहुव्येकः ॥
वनिता नितांत[39]मेवा स्वाज्ञामुल्लङ्घ्य वर्तते यदि सा ॥
शत्रोरप्यधिकतरा पराभिलाषिण्यसौ किमुत ॥ ६ ॥
लोकोऽपुत्रस्यास्तीति श्रुत्या कः प्रभाषितो लोकः ॥
मुक्तिः संसरणं[40] वा तदन्यलोकोऽथवा नाद्यः* ॥ ७ ॥
सर्वेऽपि पुत्रभा[41]जस्तन्मुक्तौ संहति[42]र्भवति ॥
श्रवणादयोऽप्युपाया मृषा भवेयुस्तृतीयेऽपि ॥ ८ ॥
[illegible] ।
[illegible] ॥ ९ ॥
नानाशरीरकष्टैर्धनव्ययैः साध्यते पुत्रः ॥
उत्पन्नमात्रपुत्रे जीवितचिंता गरीयसी तस्य ॥ १० ॥
जीवन्नपि किं मूर्खः प्राज्ञः किं शीलभाग्भवति ॥

---

३३ अनित्ये=अशाश्वते. ३४ सच्चिद्रूपः=सत् सत्यं चित् चैतन्य तद्रूपं यस्यासौ परमेश्वरः ३५ कर्दमः=पङ्कः ३६ समार्जनम्=शोधनम्, क्षालनम्. ३७ विवक्षिता=वक्तुमिच्छुः. ३८ बलिभुक्=काकः. ३९ नितांतम्=अत्यतम्. ४० ससरणम्=संसारः. *. अत्रदुर्बोधता. ४१ पुत्रभाजः=पुत्रवन्तः. ४२ संहतिः=संहारः, प्रतिबन्धः ४३ सत्वम्=सद्भावः, अस्तित्वम्. ४४ पुत्रेष्टिः=पुत्रप्राप्तिनिमित्तो यज्ञः. ४५ वेदवादः=वेदोक्तिः.

जारश्चोरः पिशुनः पतितो[४६] द्यूतप्रियः क्रूरः ॥ ११ ॥
पितृमातृज्ञातीनां मनसः खेदाय जायते पुत्रः ॥
चिंतयति तातनिधनं[४७] पुत्रो द्रव्याद्यर्थागताहेतोः ॥ १२ ॥
सर्वगुणैरुपपन्नः पुत्रः कस्यापि कुत्रचिद्भवति ॥
सोऽप्यायु रुग्णो वा ह्यनपत्यो वा तथापि खेदाय ॥ १३ ॥
पुत्रात्सद्गतिरितिचेत्तदपि प्रायोऽस्ति युक्त्यसहम्[४८] ॥
इत्थं शरीरकष्टैर्दुःखं संप्रार्थ्यते मूढैः ॥ १४ ॥
पितृमातृबंधुभगिनीपितृव्यजामातृमुख्यवर्गाणाम् ॥
मार्गस्थानामिव युति[४९]रनेकयोनिभ्रमात्क्षणिका ॥ १५ ॥
दैवं यावद्विपुलं यावत्प्रचुरः परोपकारश्च ॥
तावत्सर्वे सुहृदो व्यत्ययतः[५०] शत्रवः सर्वे ॥ १६ ॥
अश्नंति चेदनुदिनं बंदिनै[५१] इव वर्णयंति संतृप्ताः ॥
तच्चेद्द्वित्रिदिनांतरमभिनिंदंतः प्रकुप्यंति ॥ १७ ॥
दुर्भरजठरनिमित्तं समुपार्जयितुं प्रवर्तते चित्तं ॥
लक्षावधि बहुवित्तं तथाप्यलभ्यं कपर्दिको[५२]भिन्नम्[५३] ॥ १८ ॥
लब्धश्चेदधिकोर्थः पत्न्यादीनां भवेत्स्वार्थः ॥
नृपचोरतोप्यनर्थस्तस्माद्द्रव्योद्यमो व्यर्थः ॥ १९ ॥
अन्यायमर्थभाजां[५४] पश्यति[५५] भूपोऽध्वगामितां चोरः ॥
पिशुनो व्यसनप्राप्तिं दायादानां गणः कलहम् ॥ २० ॥
पातकभरैरनेकैरर्थं समुपार्जयंति राजानः ॥
अश्वमतंगजहेतोः प्रतिक्षणं नश्यते सोऽर्थः ॥ २१ ॥
राज्यांतराभिगमनाद्रोगाद्वा मंत्रिभृत्यदोषाद्वा ॥
विषशस्त्रगुप्तघातान्मग्नाश्चितार्णवे भूपाः ॥ २२ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे विषयनिंदाप्रकरणं द्वितीयम् ॥ २ ॥
हसति कदाचिद्रौति भ्रांतं सहसा दिशो भ्रमति ॥
हृष्टं कदापि रुष्टं शिष्टं दुष्टं च निंदति स्तौति ॥ १ ॥
कमपि द्वेष्टि सरोषं ह्यात्मानं श्लाघते कदाचिदपि ॥
चित्तं पिशाचमभवद्राक्षस्या तृष्णया व्याप्तम् ॥ २ ॥

---

४६ पतितः=पापः ४७ निधनम्=मृत्युः ४८ युक्त्यसहम्=न सयुक्तिकम्. ४९ युतिः=समागमः ५० व्यत्ययः=विपरीतभावे:. ५१ बंदिनः=स्तुतिपाठकाः. ५२ कपर्दिका=वराटिका ( कवडी ) ५३ भिन्नम्=शकलम्. ५४ अर्थभाजः=धनिनः. ५५ पश्यति=प्रतीक्षते.

दंभाभिमानलोभैः कामक्रोधोरु[56]मत्सरैश्चेतः ॥
आकृष्यते समभितैः[57] श्वभिरिव पतितास्थिवन्मार्गे ॥ ३ ॥
तस्माच्छुद्धविरागो[58] मनोभिलषितं त्यजेदर्थम् ॥
तदनभिलषितं कुर्यान्निर्व्यापारं[59] ततो भवति ॥ ४ ॥

इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे मनोनिंदाप्रकरणं तृतीयम् ॥ ३ ॥

संसृतिपारावारे[60] ह्यगाधविषयोदकेन संपूर्णे ॥
नृशरीरमंबुसरणं[61] कर्मसमीरैरितस्ततश्चलति ॥ १ ॥
छिद्रैर्नवभिरुपेतं जीवो नौकापति[62]र्महानलसः ॥
छिद्राणामनिरोधाज्जलपरिपूर्णं पतत्यधः सततम् ॥ २ ॥
छिद्राणां तु निरोधात्सुखेन पारं[63] परं याति ॥
तस्मादिंद्रियनिग्रहमृते न कश्चित्तरत्यनृतम्[64] ॥ ३ ॥
पश्यति परस्य युवतिं सकाममपि तन्मनोरथं कुरुते ॥
ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजोऽति पापभाग्भवति ॥ ४ ॥
स्वपरापवादमनृतं रसना[65] वदति प्रतिक्षणं तेन ॥
परहानिर्लब्धिः का व्यर्थं मनुजोऽति पापभाग्भवति ॥ ५ ॥
पिशुनैः प्रकाम[66]मुदितां परस्य निंदां शृणोति कर्णाभ्याम् ॥
तेन परः किं म्रियते व्यर्थं मनुजोऽतिपापभाग्भवति ॥ ६ ॥
विषयेंद्रिययोर्योगे[67] निमेषसमयेन यत्सुखं भवति ॥
विषये नष्टे दुःखं यावज्जीवं च तत्तयोर्मध्ये ॥ ७ ॥
देयमुपादेयं[68] वा प्रतिचार्य सुनिश्चितं तस्मात् ॥
अल्पसुखस्य त्यागादन्यद्दुःखं जहाति सुधीः ॥ ८ ॥
धीवरदत्तमहामिष[69]मश्नन् वैसारिणो[70] म्रियते ॥
तद्वद्विषयान् भुंजन् कालाकृष्टो नरः पतति ॥ ९ ॥
उरगग्रस्तार्धतनुर्भेकोऽश्नातीह मक्षिकाः शतशः ॥
एवं गतायुरपि सन् विषयान् समुपार्जयत्यंधः ॥ १० ॥

इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे विषयनिंदाप्रकरणं चतुर्थम् ॥ ४ ॥

स्वीयोद्गमात्तोयवहो[71] सागरमुपयाति नीचमार्गेण ॥

---

५६ उरुः=बहुलः. ५७ समभितः=इतस्ततः. ५८ शुद्धविरागः=निर्मलविरक्तिमान्. ५९ निर्व्यापारम्=निश्चलम्, निष्क्रियम्. ६० संसृतिपारावार=संसाररूपः समुद्रः. ६१ अंबुसरणम्=नौका. ६२ नौकापतिः=नौनायकः (नावाडी). ६३ पारम्=परतीरम् ६४ अनृतम्=असत्यस्वरूपं संसारम्. ६५ रसना=जिव्हा. ६६ प्रकामम्=यथेष्टम्. ६७ योगः=संयोगः, संबंधः ६८ उपादेयम्=ग्राह्यम्. ६९ आमिषम्=मांसम्. ७० वैसारिणः=मत्स्यः ७१ तोयवाहः=नदी.

सा चेद्दूरम् एव स्थिरा सती किं न याति वार्धित्वम्[७२] ॥ १ ॥
एवं मनः स्वहेतुं विचारयत्सुस्थिरं भवेदंतः ॥
न बहिर्वेत्ति तदा किं तन्मात्मत्वं स्वयं याति ॥ २ ॥
वर्षास्वंभःप्रचयै[७३]त्कूपे गुरुनिर्झरैः परं क्षारम् ॥
ग्रीष्मेणैव तु शुष्के माधुर्यं भजति तत्रांभः ॥ ३ ॥
तद्वद्विषयोद्रिक्तं[७४] तमः[७५]प्रधानं मनः कलुषम् ॥
तस्मिन् विरागशुष्के शनकैराविर्भवेत्सत्त्वम्[७६] ॥ ४ ॥
यं विषयमभिलषित्वा धावति बाह्येंद्रियद्वारा ॥
तस्याप्राप्तौ खिद्यति तथा यथा [७७]स्वं गतं किंचित् ॥ ५ ॥
[७८]शैलनगरदुर्गदुर्गमसरितः परितः परिभ्रमच्चेतः ॥
यदि नो लभते विषयं विषयंत्रितमेव खेदमायाति ॥ ६ ॥
तुंबीफलं जलांतर्बलादधःक्षिप्तमप्युपैत्यूर्ध्वम् ॥
तद्वन्मनः स्वरूपे निहितं यत्नाद्बहिर्याति ॥ ७ ॥
इह वा [७९]पूर्वभवे वा स्वकर्मणैवार्जितं फलं यद्यत् ॥
शुभमशुभं वा तत्तद्भोगोऽप्यप्रार्थितो भवति ॥ ८ ॥
मोहेयं मोहेयं मित्रममित्रं मृषा मनुषे ॥
शर्मिमशर्मि वासत्यः सदसत्कर्मार्जितो भोगः ॥ ९ ॥
भानुं वा हिमभानुं ग्रसति स्वर्भानुरासुरः सुचिरम् ॥
तत्तत्पीडाहेतुः खचरांतरकल्पनं किं स्यात् ॥ १० ॥
चेतः शुभमशुभपथं प्रधावमानं निराकर्तुम् ॥
वैराग्यमेकमुचितं गल[८०]काष्ठं निर्मितं धात्रा ॥ ११ ॥
गुप्ते युवत्यवयवे तु यथा दिदृक्षा ॥
स्त्रैणात्मनां नहि तथा प्रकटे किलास्ति ॥
संदृष्ट एव सहजो मनसः स्वभाव-
स्तच्छांतये नहि विरागमृतेऽस्त्युपायः ॥ १२ ॥
निद्रावसरे यत्सुखमेतत्किं विषजयं यस्मात् ॥
वीतेंद्रिय[८१]प्रदेशावस्थानं चेतसो निद्रा ॥ १३ ॥
चेतश्चंचलया वृत्त्या चिंतानिचयपंजरे ॥

---

७२ वार्धित्वम्=समुद्रत्वम्. ७३ प्रचयः=संचय.. ७४ उद्रिक्तम्=व्याप्तम्. ७५ तमः-प्रधानम्=तमोगुणबहुलम्. ७६ सत्वम्=सत्वगुणः, शुद्धिः. ७७ स्वम् = धनम्. ७८ नगः= पर्वतः. ७९ पूर्वभवः=पूर्वजन्म. ८० गलकाष्ठम्=गवादेः स्वैरगतिप्रतिबन्धाय गले बद्धः काष्ठखण्डः ( लोंढणें ) ८१ वीतेंद्रियः=इंद्रियरहितः.

धृतिं बध्नाति नैकत्र पंजरे केसरी यथा ॥ १४ ॥
अद्वारतुंगकुड्ये गृहेऽवरुद्धो यथा व्याघ्रः ॥
बहुनिर्गमप्रयत्नैः श्रांतस्तिष्ठत्यनुपतन्सन् ॥ १५ ॥
सर्वेंद्रियावरोधादुद्योगशतैरनिर्गमं[83] वीक्ष्य ॥
श्रांतं तिष्ठति चेतो निरुद्यमत्वं तदा याति ॥ १६ ॥
प्राणस्पंदनिरोधात्सत्संगाद्वासनात्यागात् ॥
हरिचरणभक्तियोगान्मनः स्ववेगं जहाति शनैः ॥ १७ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे मनोनिग्रहप्रकरणं पंचमम् ॥ ५ ॥
परगृहगृहिणीपुत्रद्रविणागमे विनाशे वा ॥
अतिथेर्हर्षविषादौ किं वा स्यातां क्षणं स्यातुः ॥ १ ॥
दैवात्स्थितं गतं वा यं कंचिद्विषयमाद्यमन्यं वा ॥
नो हृष्यन्नचसीदन्वीक्षन् गृहेष्वतिथिवन्निवसेत् ॥ २ ॥
ममताभिमानशून्यो विषयेषु पराङ्मुखः पुरुषः ॥
तिष्ठन्नपि निजसदने न बध्यते कर्मभिः क्वापि ॥ ३ ॥
रे जीव जागृहि गृहीत इवासि नूनम् ॥
कालेन ते शिशुकिशोरदशाः क्व संति ॥
श्वः किं करिष्यसि मरिष्यसि चेदकस्मा-
च्छीर्णं शरीरमरिभिः परिभूतमेतत् ॥ ४
दृष्ट्वाऽऽगतं कालकिरातमुच्चैर्हंसे शरीरद्रुमतो यियासौ ॥
वृक्षान्तरं द्रष्टुमिवेंद्रियाणि पूर्वं वयांसीव वयांसि चेयुः ॥ ५ ॥
कुत्राप्यरण्यदेशे सुनीलतृणवालुकोपचिते[86] ॥
शीतलतरुतलभूमौ सुखं शयानस्य पुरुषस्य ॥ ६ ॥
तरवः पक्वफलाढ्याः सुगंधशीतानिलाः परितः ॥
कैलकूजितवरविहगाः सरितो मित्राणि किं न स्युः ॥ ७ ॥
वैराग्यभाग्यभाजः प्रसन्नमनसो निराशस्य ॥
अप्रार्थितफलभोक्तुः पुंसो जननं कृतार्थं स्यात् ॥ ८ ॥
द्रव्यं पल्लवतश्च्युतं पादेभवेत्क्वापि प्रमादात्तदा

---

८२ कुड्यम्=भित्तिः. ८३ अनिर्गमं=बहिर्गमनासमर्थत्वम्. ८४ द्रविणम्=द्रव्यम्. ८५ सीदन्=विषादं कुर्वन्. ८६ उपचितः=पूर्णः. ८७ कलम्=मधुरम्. ८८ कूजितम्=पक्षिणां विरावः. ८९ प्रसन्नम्=निष्कल्मषम्, सुशांतम्, आनंदवृत्ति. ९० अप्रार्थितम्=यदृच्छयाप्राप्तम्, असंकल्पितम्. ९१ जननम्=जन्म. ९२ पल्लवतः=पल्लवात्.

शोकायाय तद्दार्पितं श्रुतवते तोपाय च श्रेयसे ॥
स्वातंत्र्याद्विपयाः प्रयांति यदमी शोकाय ते स्युश्चिरम्
संत्यक्ताः स्वयमेव चेच्छमसुखं निःश्रेयसं तन्वते ॥ ९ ॥
विस्मृत्यात्मनिवासमुत्कटभवाटव्यां चिरं पर्यटन्
संतापत्रयदीर्घदावदहनज्वालावलिव्याकुलः ॥
वल्गत्फल्गुसुखप्रदीप्तनयनश्चेतःकुरंगोबला-
दाशापाशवशीकृतोविषयव्याघ्रैर्मृषा हन्यते ॥ १० ॥
वियोगो वियोगो यथा दृश्यते वै ॥
तथा चंचलाक्षिप्रचारोऽप्रसारः ॥
इदं दृश्यजातं समस्तासमस्तम् ॥
विजानीहि चित्ते विजातीयभेदः ॥ १२ ॥

इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे वैराग्यप्रकरणं षष्ठम् ॥ ६ ॥

उत्पन्नेपि विरागे विना प्रबोधं सुखं नस्यात् ॥
स भवेद्गुरूपदेशात्तस्माद्गुरुमाश्रयेत्प्रथमम् ॥ १ ॥
यद्यपि जलधेरुदकं यद्यपि वा प्रेरकोऽनिलस्तत्र ॥
तदपि पिपासाकुलितः प्रतीक्षते चातको मेघम् ॥ २ ॥
त्रेधा प्रतीतिरुक्ता शास्त्राद्गुरुतस्तथात्मनस्तत्र ॥
शास्त्रप्रतीतिरादौ यद्वन्मधुरो गुडोऽस्तीति ॥ ३ ॥
अग्रे गुरुप्रतीतिर्दूराद्गुडदर्शनं यद्वत् ॥
आत्मप्रतीतिरस्माद्गुडभक्षणजं सुखं यद्वत् ॥ ४ ॥
रसगंधरूपशब्दस्पर्शा अन्येपदार्थाश्च ॥
कस्मादनुभूयंते नो देहान्नेंद्रियग्रामात् ॥ ५ ॥
मृतदेहेंद्रियवर्गो यतो न जानाति दाहजं दुःखम् ॥
प्राणश्चेन्निद्रायां तस्करबाधां स किं वेत्ति ॥ ६ ॥
मनसो यदि वा विषयास्तद्युगपत्किं न जानाति ॥
तस्य पराधीनत्वाद्यतः प्रसादस्य कस्त्राता ॥ ७ ॥
गाढध्वांतगृहांततः क्षितितले दीपं निधायोज्ज्वलम्

१३ श्रुतवान्=विद्वान्. १४ श्रेयः=कल्याणम्. १५ उत्कटा=विशाला. १६ भवाटवी=संसाररूपमरण्यम्. १७ संतापत्रयम्=आधिभौतिकाधिदैविकाध्यात्मिकरूपम्. १८ आवलिः=पंक्तिः. १९ वल्गन्=चचलः. १०० फल्गु=निःसारम्. १ प्रबोधः=आत्मज्ञानम्. २ अनिलः=वायुः. ३ पिपासा=तृष्णा. ४ त्रेधा=त्रिविधा. ५ प्रतीतिः=यथार्थज्ञानम्. ६ ग्रामः=समुदायः. ७ वर्गः=समूहः. ८ गाढध्वांतम्=निबिडोऽधकार , अधतमसम्.

पंचच्छिद्रमधोमुखं हि कलशं तस्योपरि स्थापयेत् ॥
तद्बाह्ये परितोनुरंध्रममलां[9] वीणां चकस्तूरिकां
सद्रत्नं व्यजनं न्यसेच्चकलशाच्छिद्राध्वना निर्गतम् ॥ ८ ॥
तेजोंशेन पृथक्पदार्थनिवहज्ञानं च यज्जायते
तद्रंध्रैः कलशेन चापि नु मृदा भांडेन तैलेन वा ॥
किं सूत्रेण न चैतदस्ति सुकरं प्रत्यक्षबोधादिति-
दीपज्योतिरिहैकमेव शरणं देहे तथात्मा स्थितः ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे आत्मस्थितिप्रकरणं सप्तमम् ॥ ७॥

चिन्मात्रः परमात्मा ह्यपश्यदात्मानमात्मतया ॥
अभवत्सोऽहंनामा तस्मादासीद्भिदो[10] मूलम् ॥ १ ॥
द्विधैव भाति तस्मात्पतिश्च पत्नी तदाभवताम् ॥
तस्मादयमाकाशस्त्रिधैव परिपूर्यते सततम् ॥ २ ॥
सोऽयं वीक्षांचक्रे ततो मनुष्या अजायंत ॥
इत्युपनिषदः प्राहुर्दयितां प्रति याज्ञवल्क्योक्तिम् ॥ ३ ॥
चिरमानंदानुभवात्सुषुप्ति[11]रिवकाप्यवस्थाऽभूत् ॥
परमात्मनस्तुतस्यां स्वप्नवदेवोत्थिता माया ॥ ४ ॥
सदसद्विलक्षणासौ परात्मनः सत्तयाऽनादिः ॥
सा च गुणत्रय[12]रूपा सूते सचराचरं विश्वम् ॥ ५ ॥
इत्थं मुकुंदराजो मायारूपं निरूपयांचक्रे ॥
निजरूपविस्मृतिरिति प्रपयांचक्रुस्तथान्येऽपि ॥ ६ ॥
माया तावददृश्या दृश्यं कार्यं कथं जनयेत् ॥
तंतुभिरदृश्यरूपैः पटोऽत्र दृश्यः कथं भवति ॥ ७ ॥
स्वप्ने सुरतानुभवा[13]च्छुक्रद्रावो यथा वसने ॥
अनृतं रतं प्रबोधे वसनोपहति[14]र्भवेत्सत्या ॥ ८ ॥
स्वप्ने पुरुषः सत्यो योषिदसत्या तयोश्च युतिः ॥
शुक्रद्रावः सत्यस्तद्वत्प्रकृते[15]ऽपि संभवति ॥ ९ ॥
एवमदृश्या माया तत्कार्यं जगदिदं दृश्यम् ॥
माया तावदियं स्याद्या स्वनाशेन हर्षदा भवति ॥ १० ॥
रजनीवाति दुरंता न लक्ष्यते तु स्वभावोऽस्याः ॥

९ अमला-सिता, शर्करा. १० भिद्-भेदः. ११ सुषुप्तिः-गाढनिद्रा. १२ गुणत्रयम्=सत्वं, रजः, तमः. १३ अनुभावः=अनुभव.. १४ उपहतिः=दूषणम्, मालिन्यम्. १५ प्रकृते=प्रस्तुतविषये.

सौदामिनीव नश्यति मुनिभिः संप्रेक्ष्यमाणेव ॥ ११ ॥
माया ब्रह्मोपगताऽविद्या जीवाश्रया प्रोक्ता ॥
चिदचिद्ग्रंथिश्चैतैस्तदक्षयं ज्ञेयमामोक्षात् ॥ १२ ॥
घटमठकुंजैरावृतमाकाशं तत्तदाह्वयं भवति ॥
तद्वदविद्यावृतमिह चैतन्यं जीव इत्युक्तम् ॥ १३ ॥
ननु कथमावरणं स्यादज्ञानं ब्रह्मणो विशुद्धस्य ॥
सूर्यस्येव तमिस्रं[19] रात्रिभवं स्वप्रकाशस्य ॥ १४ ॥
दिनकरकिरणोत्पन्नैर्मेघैराच्छाद्यते यथा सूर्यः ॥
न खलु दिनस्य दिनत्वं रविकृतमिव वाद्रिसंघातैः ॥ १५ ॥
आज्ञानेन तथात्मा शुद्धोपि च्छाद्यते सुचिरम् ॥
न परंतु लोकसिद्धा प्राणिषु तच्चेतनाशक्तिः ॥ १६ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे मायासिद्धिप्रकरणमष्टमम् ॥ ८ ॥
स्थूलशरीरस्यांतर्लिंगशरीरं च तस्यांतः ॥
कारणमस्याप्यंतस्ततो महाकारणं तुर्यम् ॥ १ ॥
स्थूलं निरूपितं प्रागधुना सूक्ष्मादितो ब्रूमः ॥
अंगुष्ठमात्रपुरुषः श्रुतिरिति यत्प्राह तत्सूक्ष्मम् ॥ २ ॥
सूक्ष्माणि पंचभूतान्यसवः पंचेंद्रियाणि पंचैव ॥
षोडशमंतःकरणं तत्संघातो हि लिंगतनुः ॥ ३ ॥
तत्कारणं स्मृतं यत्तस्यांतर्वासनाजालम् ॥
तस्य प्रवृत्तिहेतुर्बुद्ध्याश्रयमत्रतुर्यं[23] स्यात् ॥ ४ ॥
तत्सारभूतबुद्धौ यत्प्रतिफलितं तु शुद्धचैतन्यम् ॥
जीवः स उक्त आद्योऽहमिति स्फूर्तिकृद्वपुषि ॥ ५ ॥
चलतरतरंगसंगात्प्रतिफलितभास्करे चलत्वं स्यात् ॥
अस्तु तथा चंचलता चैतन्ये चित्तचांचल्यात् ॥ ६ ॥
नन्वर्कः प्रतिबिंबः सलिलादिषु योऽवभासयते ॥
किमितरपदार्थनिवहं प्रतिबिंबोऽप्यात्मनस्तद्वत् ॥ ७ ॥
प्रतिफलितं यत्तेजः सवितुः कांस्यादिपात्रेषु ॥
तदनुप्रविष्टमंतर्गृहमन्यार्थान्प्रकाशयति ॥ ८ ॥

---

१६ सौदामिनी=विद्युत्. १७ चिदचिद्ग्रंथिः=ज्ञानाज्ञानरूपयोर्ब्रह्ममाययोरेकत्रबंधनम्. १८ कुंजम्=लतागृहम्. १९ तमिस्रम्=अंधकारः. २० स्वप्रकाशः=स्वयं प्रकाशतेऽसौ. २१ संघातः=समुदायः. २२ जालम्=समूहः. २३ तुर्यम्=चतुर्थम्. २४ प्रतिफलितम्=प्रतिबिंबितम्.

चित्प्रतिबिंबै[२५]स्तद्वद्बुद्धिषु यो जीवतां प्राप्तः ॥
नेत्रादींद्रियमार्गैर्बहिरर्थानसौऽवभासयते ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे जीवनिरूपणं नाम प्रकरणं नवमम् ॥ ९ ॥

तदिदं य एवमार्यो वेद ब्रह्माहमस्मीति ॥
स इदं सर्वं स्यात्तस्य देवाश्च नेशते भूत्यै ॥ १ ॥
येषां स भवत्यात्मा योऽन्यामथ देवतामुपास्ते सः ॥
अहमन्योऽसावन्यश्चेत्थं यो वेद पशुवत्सः ॥ २ ॥
इत्युपनिषदामुक्तिस्तथा श्रु[२६]तिर्भगवदुक्तिश्च ॥
ज्ञानी त्वात्मैवेयं मतिर्ममेत्यत्र यु[२७]क्तिरपि ॥ ३ ॥
ऋजु वक्रं वा काष्ठं हुताशदग्धं सदग्नितां याति ॥
तत्किं हस्तग्राह्यमृ[२८]जुवक्राकारसत्त्वेऽपि ॥ ४ ॥
एवं यश्चात्मनिष्ठो ह्यात्माकारश्च जायते पुरुषः ॥
देहीव दृश्यतेऽसौ परं त्वसौ केवलो ह्यात्मा ॥ ५ ॥
प्रतिफलति भानुरेकोऽनेकश[२९]रावोदकेषु यथा ॥
तद्वदसौ परमात्मा ह्येकोऽनेकेषु देहेषु ॥ ६ ॥
दैवादेकशरावे भग्ने किं वा विलीयते सूर्यः ॥
प्रतिबिंबचंचलत्वादर्कः किं चंचलो भवति ॥ ७ ॥
स व्यापारं कुरुते यथैकसवितुः प्रकाशेन ॥
तद्वच्चरा[३०]चरमिदमेकात्मसत्तया चलति ॥ ८ ॥
येनोदकेन कदलीचंपकजा[३१]त्यादयः प्रवर्धंते ॥
मू[३२]लकप[३३]लांडुल[३४]शुनास्तेनैवैते विभिन्नरसगंधाः ॥ ९ ॥
एको हि सूत्रधारः काष्ठप्रकृ[३५]तीरनेकशो युगपत् ॥
स्तंभाग्रपट्टिकायां नर्तयतीह प्रगूढतया ॥ १० ॥
गुडखंडशर्करा[३६]द्या भिन्नाः स्युर्विकृ[३७]तयो यथैकेक्षोः ॥
केयूरकंकणाद्या यथैकहेम्नो भिदाश्च पृथक् ॥ ११ ॥
एवं पृथक्स्वभावं पृथगाकारं पृथग्वृत्ति ॥
जगदुच्चाव[३८]चमुच्चैरेकेनैवात्मना चलति ॥ १२ ॥

---

२५ चित्प्रतिबिंबः=चैतन्यस्य प्रतिबिंब. २६ श्रुतिः=वेदवचनम्. २७ युक्तिः=प्रमाणम्, उदाहरण २८ ऋजु=सरलम्. २९ शरावः=पात्रभेदः (परळ). ३० चराचरम्=चलाचलवस्तुजातम्, विश्वम्. ३१ जातिः=पुष्पलताभेदः (जाई). ३२ मूलकः=(मुळा). ३३ पलांडुः=(कांदा). ३४ लशुनः=(लसूण). ३५ प्रकृतिः=प्रतिकृतिः! मूर्तिः! ३६ खडशर्करा=(खडीसाखर). ३७ विकृतिः=विकारः, रूपांतरम्. ३८ उच्चावचम्=उत्तमानुत्तमम्.

स्कंधोद्धृतयदन्नं यावन्नाश्नाति मार्गगस्तावत् ॥
स्पर्शभयात्क्षुत्पीडा तस्मिन्भुक्ते न सा भवति ॥ १३ ॥
मानुषमतंगैर्[39]महिषश्वसूकरादिष्वनुस्यूतम्[40] ॥
यः पश्यति जगदीशं भुंक्ते सोत्राद्वयानंदम् ॥ १४ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरेऽद्वैतप्रकरणं दशमम् ॥ १० ॥
यद्वत्सूर्येऽभ्युदिते स्वव्यवहारं जनः कुरुते ॥
तं न करोति विवस्वान्[41] न कारयति तद्वदात्मापि ॥ १ ॥
लोहे हुतभुग्व्याप्ते लोहांतरैस्ताड्यमानेऽपि ॥
तस्यांतरगतवह्नेः किंस्यान्निर्घातजं[42] दुःखम् ॥ २ ॥
निष्ठुर[43]कुठारघातैः काष्ठे संच्छेद्यमानेऽपि ॥
अंतरवर्ती वह्निः किं घातैश्छेद्यते तद्वत् ॥ ३ ॥
तनुसंबंधाज्जातैः सुखदुःखैर्लिप्यते नात्मा ॥
ब्रूते श्रुतिरपि भूयोऽनश्नन्नभिचाकशीत्यादि[44] ॥ ४ ॥
निशि वेश्मनि प्रदीपे दीप्यति चोरस्तु वित्तमपहरति ॥
ईरयति[45] वारयति वा न च तं दीपस्तथात्मापि ॥ ५ ॥
गेहांते दैववशात्कर्मिश्चित्समुदिते[46] विपन्ने[47] वा ॥
दीपस्तुष्यत्यथवा खिद्यति किंतद्वदात्मापि ॥ ६ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे कर्तृत्वभोक्तृत्वप्रकरणमेकादशम् ॥ ११ ॥
रविचंद्रवह्निदीपप्रमुखाः स्वपरप्रकाशास्युः ॥
यद्यपि तथाप्यमीभिः प्रकाश्यते क्वापि नैवात्मा ॥ १ ॥
चक्षुर्द्वारैवस्यात्परात्मनो भानमेतेषाम् ॥
यद्वा तेपि पदार्था न ज्ञायंतेऽथ केवलालोकात् ॥ २ ॥
तत्राप्यक्षिद्वारा सहायभूतो भवेदात्मा ॥
नोचेत्सत्यालोके पश्यत्यंधः कथं नार्थान्[48] ॥ ३ ॥
सत्यात्मन्यपि किन्नो ज्ञानं तच्चेंद्रियांतरेण स्यात् ॥
अंधे दृक्प्रतिबंधे करसंबंधे पदार्थमानं[49] हि ॥ ४ ॥
जानाति येन सर्वं केन च तं वा विजानीयात् ॥
इत्युपनिषदा मुक्तिर्बध्यत आत्मात्मना तस्मात् ॥ ५ ॥
इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे स्वप्रकाशताप्रकरणं द्वादशम् ॥ १२ ॥

---

३९ मतंगः=गजः. ४० अनुस्यूतः=अविच्छिन्नतया ग्रथितः, अंतर्गतः. ४१ विवस्वान्=रविः. ४२ निर्घातः=आघातः. ४३ निष्ठुरः=तीव्रः, गुरुः. ४४ अभिचाकशीति=उदासीनवत् पश्यति. ४५ ईरयति=प्रेरयति. ४६ समुदितः=प्राप्ताभ्युदयः जातः वा. ४७ विपन्नः=दुर्दशांगतः मृतः वा. ४८ अर्थः=विषयः वस्तु. ४९ मानम्=ज्ञानम्.

यावत्क्षणं क्षणार्द्धं स्वरूपपरिचिंतनं क्रियते ॥
तावद्दक्षिणकर्णे त्वनाहतः श्रूयते शब्दः ॥ १ ॥
सिद्धारंभस्थिरता विश्रमविश्वासबीजशुद्धानाम् ॥
उपलक्षणं हि मनसः परमं नादानुसंधानम् ॥ २ ॥
चित्तं विषयोपरमाद्यथा यथा याति नैश्चल्यम् ॥
वेणोरिव दीर्घतरस्तथा तथा श्रूयते नादः ॥ ३ ॥
भेरीमृदंगशंखाद्याहतनादे मनः क्षणं रमते ॥
किंपुनरनाहतेऽस्मिन् मधुमधुरेऽखंडिते स्वच्छे ॥ ४ ॥
नादाभ्यंतरवर्ति ज्योतिर्यद्वर्तते हि चिरम् ॥
तत्र मनो लीनं चेन्नपुनः संसारबंधाय ॥ ५ ॥
परमानंदानुभवात्सुचिरं नादानुसंधानात् ॥
श्रेष्ठश्चित्तलयोऽयं सत्स्वन्यलयेष्वनेकेषु ॥ ६ ॥
इति श्रीमच्छंकराचार्यवि० प्रबोधसुधाकरे नादानुसंधानप्रकरणं त्रयोदशम् ॥ १३ ॥
संसारतापतप्तं नानायोनिभ्रमात्परिश्रांतम् ॥
लब्ध्वा परमानंदं न चलति चेतः कदा क्वापि ॥ १ ॥
अद्वैतानंदभरात्किमिदं कोऽहं च कस्याहम् ॥
इति मंथरतां यातं यदा तदा मूर्च्छितं चेतः ॥ २ ॥
चिरतरमात्मानुभवादात्माकारं प्रजायते चेतः ॥
सरिदिव सागरयाता समुद्रभावं प्रयात्युच्चैः ॥ ३ ॥
आत्मन्यनुप्रतिष्ठं चित्तं नापेक्षते पुनर्विषयान् ॥
क्षीरादुद्धृतमाज्यं यथा पुनः क्षीरतां न यातीह ॥ ४ ॥
दृष्टौ द्रष्टरि दृश्ये यदनुस्यूतं भानमात्रं स्यात् ॥
तत्रोपक्षीणं चेच्चेतस्तन्मूर्च्छितोभवति ॥ ५ ॥
यातः स्वसंमुखत्वं दृङ्मात्रे वा यदा तदा भवति ॥
दृश्यद्रष्टृविभेदो ह्यसंमुखेऽस्मिन्न तद्भवति ॥ ६ ॥
एकस्मिन् दृङ्मात्रे त्रेधा द्रष्ट्रादिकं हि समुदेति ॥
त्रिविधे तस्मिन् लीने दृङ्मात्रमवशिष्यते पश्चात् ॥ ७ ॥
दर्पणतः प्राक् पश्चादस्ति मुखत्वं तदाभासे ॥

---

५०. अनाहतः=विनाऽऽघातमुत्पन्नः. ५१. उपलक्षणम्=लक्षणम्, ज्ञापकम्. ५२. उपरमः=विरक्तता, त्यागः. ५३. अखंडितः-अविच्छिन्नः, अविरतः. ५४. स्वच्छः=स्पष्टः. ५५. अद्वैतानंदः=अद्वितीयानंदः, परमानंदः. ५६. अनुप्रतिष्ठम्=प्रतिष्ठितम्, स्थिरीभूतम्. ५७. प्राक्=पुरतः.

आदर्शेऽपि च नष्टे मुखमस्ति मुखे तथैवात्मा ॥ ८ ॥

इति श्रीमच्छंकराचार्यविरचिते प्रबोधसुधाकरे मनोलयप्रकरणं चतुर्दशम् ॥ १४ ॥

माधुर्यं गुडपिंडे यत्तस्यांशेऽणुमात्रेऽपि ॥
एवं न पृथग्भावो गुडत्वमधुरत्वयोरस्ति ॥ १ ॥
अथवा न भिन्नभावः कर्पूरामोदयोरेवम् ॥
आत्मस्वरूपमनसां पुंसां जगदात्मतां याति ॥ २ ॥
यद्वानानुभवः स्यान्निद्रादौ जागरस्यांते ॥
अंतः स चेत्स्थिरः स्यात्तदाश्नुते ह्यद्वयानंदम् ॥ ३ ॥
अतिगंभीरेऽपारे ज्ञानचिदानंदसागरे स्फारे ॥
कर्मसमीरणतरला जीवतरंगावलिः स्फुरति ॥ ४ ॥
खरतरकरैः प्रदीप्तेऽप्युदिते चैतन्यतिग्मांशौ ॥
स्फुरति मृषैव समंतादनेकविधजीवमृगतृष्णा ॥ ५ ॥
अंतरदृष्टे यस्मिन् जगदिदमारात्परिस्फुरति ॥
दृष्टे यस्मिन् सकृदपि विलीयते क्वाप्यसद्रूपम् ॥ ६ ॥
बाह्याभ्यंतरपूर्णः परमानंदार्णवे निमग्नो यः ॥
चिरमाप्लुत इव कलशो महाह्रदे जन्हुकन्यायाः ॥ ७ ॥
संपूर्णात्वरणांबुतैलनिवहे ब्रह्मांडभांडोदरे
सूत्रे सन्निगुणात्मके समुदिते शश्वत्परंज्योतिषः ॥
अज्ञानांधतमिस्रवारणपटौ बोधप्रदीपोदये
शुद्धज्ञानवतां पतत्यनुदिनं चेतः पतंगा इव ॥ ८ ॥
पूर्णात्पूर्णतरे परात्परतरेऽप्यज्ञानपारे हरौ
संवित्स्फारसुधार्णवे विरहिते वीचीतरंगादिभिः ॥
भास्वत्कोटिविकाशसोज्ज्वलदिगाकाशावकाशांतरे
आनंदैकरसे निमग्नमनसां तत्त्वं न चाहं जगत् ॥ ९ ॥

इति श्रीमच्छंकराचार्यवि० प्रबोधसु० आत्मब्रह्मैक्यत्वनिरूपणं प्रकरणं पंचदशम् ॥ १५ ॥

चित्ते सत्त्वोत्पत्तौ तडिदिव बोधोदयो भवति ॥
तर्ह्येव स स्थिरः स्याद्यदि चित्तं शुद्धिमुपयाति ॥ १ ॥
शुध्यति हि नांतरात्मा कृष्णपदांभोजभक्तिमृते ॥
वसनमिव क्षीरोदैर्भक्त्या प्रक्षाल्यते चेतः ॥ २ ॥

---

५८. प्रतिमुखम्=मुखप्रतिबिम्बम्. ५९. आमोदः=सुगंधः. ६०. स्फारः=महान्, विस्तीर्णः. ६१. तरला=चंचला. ६२. खरः=तीक्ष्णः प्रखरः. ६३. तिग्मांशुः=सूर्यः. ६४. मृगतृष्णा=मृगजलम्.

यद्वद्वृषमलादर्शो सुचिरं भस्मादिना शुद्धे ॥
प्रतिफलंति वक्त्रमुच्चैः शुद्धे चित्ते तथा ज्ञानम् ॥ ३ ॥
ज्ञानं तत्र हि बीजं हरिभक्ता ज्ञानिनो ये स्युः ॥
मूर्तं चैवामूर्तं द्वेधा च ब्रह्मणो रूपम् ॥ ४ ॥
इत्युपनिषत्तयोर्वा द्वौ भक्तौ भगवदुपदिष्टौ ॥
क्लेशादक्लेशाद्वा मुक्तिः स्यादेतयोर्मध्ये ॥ ५ ॥
स्थूला सूक्ष्मा चेति द्वेधा हरिभक्तिरुद्दिष्टा ॥
प्रारंभे स्थूला स्यात् सूक्ष्मा तस्याः सकाशाच्च ॥ ६ ॥
स्वाश्रमधर्माचरणं कृष्णप्रतिमोत्सवो नित्यम् ॥
विविधोपचारकरणैर्हरिदासैः संगमः शश्वत् ॥ ७ ॥
कृष्णकथासंश्रवणे महोत्सवः सत्यवादश्च ॥
परयुवतौ द्रविणे वा परापवादे पराङ्मुखता ॥ ८ ॥
ग्राम्यकथासूद्वेगः सुतीर्थगमनेषु तात्पर्यम् ॥
यदुपतिकथावियोगे व्यर्थं गतमायुरिति चिंता ॥ ९ ॥
एवं कुर्वति भक्तिं कृष्णकथानुग्रहोत्पन्ना ॥
समुदेति सूक्ष्मभक्तिर्यस्यां हरिरंतराविशति ॥ १० ॥
स्मृतिसत्पुराणवाक्यैर्यथा श्रुतायां हरेर्मूर्तौ ॥
मानसपूजाभ्यासो विजननिवासेऽपितात्पर्यम् ॥ ११ ॥
सत्यं समस्तजंतुषु कृष्णस्यावस्थितेर्ज्ञानम् ॥
अद्रोहो भूतगणे ततस्तु भूतानुकंपा स्यात् ॥ १२ ॥
प्रमितयदृच्छालाभे संतुष्टिर्दारपुत्रादौ ॥
ममताशून्यत्वमतो निरहंकारत्वमक्रोधः ॥ १३ ॥
मृदुभाषिता प्रसादो निजनिंदायां स्तुतौ समता ॥
सुखदुःखशीतलोष्णद्वंद्वसहिष्णुत्वमापदो न भयम् ॥ १४ ॥
निद्राहारविहारेष्वनादरः संगराहित्यम् ॥
वचनेऽप्यनवकाशो नृहरिस्मरणेन शाश्वती शांतिः ॥ १५ ॥
केनापि गीयमाने हरिगीते वेणुनादे वा ॥
आनंदाविर्भावादुगपत्स्यात्सात्विकोद्रेकः ॥ १६ ॥

---

६५. आश्रमाः=ब्रह्मचर्यादयः चत्वारः. ६६. शश्वत्=निरंतरम्. ६७. ग्राम्यकथा=ग्राम्यगोष्ठी. ६८. तात्पर्यम्=तत्परता. ६९. यदुपतिः=कृष्णः. ७०. विजनम्=एकांतः. ७१. अनुकंपा=दया. ७२. प्रमितम्=अल्पम्. ७३. द्वंद्वम्=विरुद्धधर्मि युग्मम्. ७४. सहिष्णुत्वम्=सहनशीलत्व. ७५. अनादरः=अनासक्तिः.

तस्मिन्ननुभवति मनः प्रगृह्यमाणं परात्मसुखम् ॥
स्थिरतां याते तस्मिन् याति मदोन्मत्तदंतिदशाम् ॥ १७ ॥
यश्छेत्तुं समुपागतोस्त्यथ पुनः संवर्धितो येन वा
नानोपायशतैस्तयोरपहरत्यार्तिं तरुश्छायया ॥
पुष्पैर्वा मधुपल्लवैः फलभरैर्यद्वत्तथा ज्ञानवान्–
शांतो भूतसुहृत्तमः सुमतिमान्मित्रेष्वमित्रेष्वपि ॥ १८ ॥
जंतुषु भगवद्भावं भगवति भूतानि पश्यति क्रमशः ॥
एतादृशी दशा चेत्तदैव हरिदासवर्यः स्यात् ॥ १९ ॥
इति श्रीमच्छंकराचार्यवि० प्रबोध० द्विधाभक्तिनिरूपणं प्र० षोडशम् ॥ १६ ॥
यमुनातटनिकटस्थितवृंदावनकानने रम्ये ॥
कल्पद्रुमतलभूमौ चरणं चरणोपरि स्थाप्य ॥ १ ॥
तिष्ठंतं घननीलं स्वतेजसा भासयंतमिह विश्वम् ॥
पीतांबरपरिधानं चंदनकर्पूरलिप्तसर्वांगम् ॥ २ ॥
आकर्णपूरनेत्रं कुंडलयुगमंडितश्रवणम् ॥
मंदस्मितमुखकमलं सकौस्तुभोदारमणिहारम् ॥ ३ ॥
वलयांगुलीयकाद्यानुज्ज्वलयंतं स्वलंकारान् ॥
गलविलुलितवनमालं स्वतेजसा तोडरे न्यस्तकलिकालम् ॥ ४ ॥
गुञ्जारवालिकलितं गुञ्जापुञ्जान्विते मुकुटे ॥
भुञ्जानं सह गोपैः कुञ्जांतर्वर्तिनं हरिं स्मरत ॥ ५ ॥
मंदारपुष्पवासितमंदानिलसेवितं परानंदम् ॥
मंदाकिनीधृतपादं परमानंदप्रदं महापुरुषम् ॥ ६ ॥
सुरभीकृतदिग्वलयं सुरभीशैरावृतं परितः ॥
सुरभीतिहरणमिहासुरभीमं यादवं नमत ॥ ७ ॥
कंदर्पकोटिसुभगं वाञ्छितफलदं दयार्णवं कृष्णम् ॥
त्यक्त्वा कमन्यविषयं नेत्रयुगं द्रष्टुमुत्सहते ॥ ८ ॥
पुण्यतमामतिसुरसां मनोभिरामां हरेः कथां त्यक्त्वा ॥
श्रोतुं श्रवणद्वंद्वं ग्राम्यकथास्वादरं वहति ॥ ९ ॥
दौर्भाग्यमिंद्रियाणां कृष्णे विषयेषु सत्सु सर्वेषु ॥

---

७६. दन्ती=गजः. ७७. पीतांबरपरिधान=पीतांबरं परिदधानं. ७८. आकर्णपूरनेत्र=आकर्णपर्यंतं नेत्रे यस्य तं. ७९. तोडर='तोरडो' इति महाराष्ट्र भाषायाम्. ८०. मंदाकिनीधृतपाद=स्वर्गंगाधारयंतौ चरणौ यस्य तं ८१. सुरभीशैः=देवानां ईशैः. ८२. सुरभीतिहरणं=देवानां भयस्य नाशक. ८३. कंदर्पः=मदनः.

क्षणिकेषु पापकरणेष्वपि सज्जते ऽन्यविषयेषु ॥ १० ॥

इति श्रीमच्छंक० प्रबो० ध्यानविधिप्रकरणं सप्तदशम् ॥ १७ ॥

श्रुतिभिर्महापुराणैः सगुणगुणातीतयोरैक्यम् ॥
यत्प्रोक्तं गूढतया तदहं वक्ष्ये ऽतिविशदार्थम् ॥ १ ॥
प्रेयः पुत्राद्वित्तात्प्रेयोन्यस्माच्च सर्वस्मात् ॥
अंतरतरोयमात्मेत्युपनिषदैः सत्यता महिता ॥ २ ॥
भूतेष्वंतर्यामी ज्ञानमयः सच्चिदानंदः ॥
प्रकृतेः परः परात्मा यदुकुलतिलकः स एवायम् ॥ ३ ॥
वक्षसि पदा जघान श्रीवत्सः श्रीपतेस्तु किं द्वेष्यः ॥
भक्तानामसुराणामन्येषां वा फलं सदृशम् ॥ ४ ॥
तस्मान्न कोपि शत्रुर्नो मित्रं नाप्युदासीनः ॥
नृहरेः सन्मार्गस्थः सफलः शाखीव यदुनाथः ॥ ५ ॥
लोहशलाकानिवहैःस्पर्शाश्मनि भिद्यमाने ऽपि ॥
स्वर्णत्वमेति लोहं द्वेषादपि विद्विषां तथा प्राप्तिः ॥ ६ ॥

इति श्रीमच्छंक० प्रबो० सगुणनिर्गुणैक्यप्र० अष्टादशम् ॥ १८ ॥

आश्रितमात्रं पुरुषं स्वाभिमुखं कर्षति श्रीशः ॥
लोहमपि चुंबकाश्मा सम्मुखमात्रं जडं यद्वत् ॥ १ ॥
अयमुत्तमोऽयमधमो जात्या रूपेण संपदा वयसा ॥
श्लाघ्योऽश्लाघ्यो वेत्थं नवेत्ति भगवाननुग्रहावसरे ॥ २ ॥
अंतस्थभावभोक्ता यतोंतरात्मा यथा मेघः ॥
खदिरश्चंपक इति वा प्रवर्षणे किं विचारयति ॥ ३ ॥
यद्यपि सर्वत्र समस्तथापि नृहरिर्निजाश्रिते पुरुषे ॥
ममताभिमानमुच्चैर्वहति विवस्वान्यथोत्पले जगति ॥ ४ ॥
साक्षान्न किमपि दत्ते न वदति मिष्टं तथाप्येते ॥
भक्ताः परमानंदे रमन्ति सदयावलोकेन ॥ ५ ॥
सुतरामनन्यशरणाः क्षीराद्याहारमंतरा यद्वत् ॥
केवलया स्नेहदृशा कूर्मीतनयाः प्रजीवन्ति ॥ ६ ॥
यद्यपि गगनं शून्यं तथापि जलदोऽमृतांशुरूपेण ॥

---

८४. उपनिषद्=वेदान्तः. ८५. यदुकुलतिलकः=यादवकुलश्रेष्ठः. ८६. जघान=ताडितवान्. ८७. शाखी=वृक्षः. ८८. लोहशलाकानिवहैः=लोहशलाकासमूहैः. ८९. स्पर्शाश्मनि='परीस' इति महाराष्ट्र भाषायाम्. १०. विवस्वान्=वायुः. ११. उत्पलम्=कमलम्. १२. कूर्मी='कासवीण' इति महारा० भा०. १३. अमृतांशुः=चन्द्रः.

चातकचकोरनाम्नोर्दृढभावात्पूरयत्याशाम् ॥ ७ ॥
तद्वद्व्रजतां पुंसां वाङ्मनसयोरगोचरोपीशः ॥
कृपया फलत्यकस्मात्सत्यानंदेन विपुलेन ॥ ८ ॥
इति श्रीमच्छंक० प्रबो० अनुग्रहप्रकरणं नवदशम् ॥ १९ ॥
मायाहस्तेऽर्पयित्वा भरणकृतिकृतेर्मोहशूलोद्भवं माम्
मातः कृष्णाभिधाने चिरसमयमुदासीनभावं गतासि ॥
कारुण्यैकाधिवासे सकृदपि वदनं नेक्षसे यन्मदीयम्
तत्सर्वज्ञे न कर्तुं प्रभवति भवती किंतु मूलस्य शांतिम् ॥ १ ॥
उदासीनः स्तब्धः सततमगुणः संगरहितो ॥
भवांस्तातः कांतः परमिह भवेज्जीवनगतिः ॥
अकस्मादस्माकं यदि न कुरुषे स्नेहमयतद्-
वहस्व स्वीयांस्तान्विमलजठरेऽस्मान्पुनरपि ॥ २ ॥
लोकाधीशे त्वयीशे किमिति भवभवा वेदनास्ताः श्रितानाम्
संकोचः पंकजानां किमिह समुदिते मंडले चंडरश्मेः ॥
भोगः पूर्वार्जितानां भवति भुवि नृणां कर्मणां चेदवश्यम्
तन्मे दुष्टैरदुष्टैर्ननु दनुजरिपो ह्यूर्जितं निर्जितं तत् ॥ ३ ॥
नित्यानंदसुधोदधेराधिगतः सच्चीलमेघः सता-
मौत्कंठ्यप्रबलप्रभंजनभरैराकर्षितो वर्षति ॥
विज्ञानामृतमद्भुतं निजवचोधाराभिराराादिदम्
चेतश्चातकवन्न वाञ्छसि तृषाक्रांतोसि सुप्तोसि किम् ॥ ४ ॥
चेतश्चंचलतां विहाय पुरतः संधाय कोटिद्वयम्
तत्रैकत्र निधेहि सर्वविषयानन्यत्र च श्रीपतिम् ॥
विश्रांतिर्हितमप्यहो क्व नु तयोर्मध्ये तदालोच्यताम्
युक्त्या वानुभवेन यत्र परमानंदश्च तत्सेव्यताम् ॥ ५ ॥
काम्योपासनयेप्सितं फलमलं कांक्षन्तु केचिज्जनाः
केचित्स्वर्गमथापवर्गमपरे योगादियज्ञादिभिः ॥
अस्माकं यदुनायकांघ्रियुगुलध्यानावधानार्थिनाम्
किं लोकेन धनेन किं नृपतिना स्वर्गापवर्गैश्च किम् ॥ ६ ॥
परोपकारार्थमुदाहृतेन यद्वाग्विसर्गेण रसोज्ज्वलेन ॥

१४. अधिवासः=भुवनं-आलयः. १५. संधाय=अनुलक्ष्य. १६. कोटिद्वयम्=पक्षद्वय. १७. अपवर्गः=मोक्षः. १८. अवधानं=लक्षं. १९. विसर्गः=उत्पत्तिः, प्रकाशः.

शब्दाभिधं ब्रह्म यतः प्रवृत्तं स प्रीयतां यादवराजसिंहः ॥ ७ ॥
इति श्रीमच्छंकराचार्यकृते प्रबोधसुधाकरे प्रकरणम् विंशम् ॥ २० ॥
इति श्रीमच्छंकराचार्यकृतः प्रबोधसुधाकरः समाप्तः

---

## अथ वेदांतसारः

कस्ते बोद्धुं प्रभवति परं देवदेव प्रभावम्
यस्मादित्थं विविधरचना सृष्टिरेषा बभूव ॥
भक्तिग्राह्यस्त्वमिति भगवंस्त्वामहं भक्तिमात्रा-
त्स्तोतुं वांछाम्यतिमहदिदं साहसं मे सहस्व ॥ १ ॥
सर्वस्यानित्यत्वे सावयवत्वेन सर्वथा सिद्धे ॥
वैकुंठादिषु नित्यत्वमतिर्भ्रम एव मूढबुद्धीनाम् ॥ २ ॥
कुक्षौ स्वमातुर्मलमूत्रमध्ये स्थितिं तथा विट्कृमिदशनं च ॥
तदीयकौक्षेयकवह्निदाहं विचार्य कोवा विरतिं न याति ॥ ३ ॥
स्वकीयविण्मूत्रनिमज्जनं यद्योत्तानगत्या शयनं तदार्तिः ॥
बालग्रहव्याहतिशालि शैशवं विचार्य कोवा विरतिं न याति ॥ ४ ॥
स्वीयैः परैस्ताडनमज्ञभावमत्यंतचापल्यमसत्क्रियां च ॥
कुमारभावे प्रतिषिद्धवृत्तिं विचार्य कोवा विरतिं न याति ॥ ५ ॥
मदोद्धतिं मान्यतिरस्कृतिं च कामातुरत्वं समयातिलंघनम् ॥
तां तां युवत्योदितदुष्टचेष्टां विचार्य कोवा विरतिं न याति ॥ ६ ॥
विरूपतां सर्वजनादवज्ञां सर्वत्र दैन्यं निजबुद्धिहैन्यम् ॥
वृद्धत्वसंभावितदुर्दशां तां विचार्य कोवा विरतिं न याति ॥ ७ ॥
पित्तज्वरार्शःक्षयगुल्मशूलश्लेष्मादिरोगोदिततीव्रदुःखम् ॥
दुर्गंधमस्वास्थ्यमनूनचिंतां विचार्य कोवा विरतिं न याति ॥ ८ ॥
यमावलोकोदितभीतिकंपं मर्मव्यथोच्छ्वासगतीश्च वेदनाम् ॥
प्राणप्रयाणे परिदृश्यमानां विचार्य कोवा विरतिं न याति ॥ ९ ॥

---

१००, यादवराजसिंहः=यदुकुलश्रेष्ठः श्रीकृष्णः. १. अनित्यत्वम्=नश्वरत्वम्. २. सावयवत्वम् अवयवसहितत्वम्. ३. सिद्धम्=प्रतिपादित. ४. विरतिः=वैराग्यम्. ५. आर्तिः=दुःखम्. ६. बालग्रहव्याहतिशालि=केशग्रहणं ताडनं च ताभ्यां युक्तम्. ७. प्रतिषिद्धवृत्तिः=निषिद्धकर्मकरणेमनोवृत्तिर्यस्य. ८. मदोद्धतिः=उन्मत्तता. ९. समयातिलंघनम्=प्राप्तकालस्य उल्लंघनम्. १० हैन्यम्=हीनत्वम्. ११. सम्भावित=उत्पादित. १२. अर्शस्=अर्शोरोगः 'मूळव्याध' इति महाराष्ट्र भाषायाम्. १३. उदित=उत्पन्न.

अङ्गारनद्यां[14] तपने च कुंभीपाके च वीच्यां[15]मसिपत्रकानने[16] ॥
दूतैर्यमस्य क्रियमाणबाधां विचार्य कोवा विरतिं न याति ॥ १० ॥
पुण्यक्षये पुण्यकृतैर्नभस्थैर्निपात्यमानाञ्शिथिलीकृताङ्गान् ॥
नक्षत्ररूपेण दिवश्च्युतांस्तान् विचार्य कोवा विरतिं न याति ॥ ११ ॥
वाय्वर्कवह्नीन्द्रमुखान् सुरेंद्रानीशोग्रभीत्या व्यथितांतरंगान् ॥
विपक्ष[17]लोकैः परिभूयमानान् श्रुत्वात्र कोवा विरतिं न याति ॥ १२ ॥
श्रुत्वा निरुक्तं[18] सुखतारतम्यं[19] ब्रह्मादिमारभ्य महामहीशाम् ॥
औपाधिकं[20] तत्तु न वास्तवं[21] चेत्यालोच्य कोवा विरतिं न याति ॥ १३ ॥
सालोक्य[22]सामीप्यसरूपतादिभेदस्तु सत्कर्मविशेषसिद्धः ॥
न कर्मसिद्धस्य तु नित्यतेति विचार्य कोवा विरतिं न याति ॥ १४ ॥
यत्रास्ति लोके गतितारतम्यमुच्चावचत्वा[23]न्वितमत्र तत्कृतम् ॥
यथेह तद्वत्खलु दुःखमस्तीत्यालोच्य कोवा विरतिं न याति ॥ १५ ॥
को नाम लोके पुरुषो विवेकी विनश्वरे तुच्छसुखे गृहादौ ॥
कुर्याद्रतिं[24] नित्यमवेक्षमाणो वृथैव मोहान्म्रियमाणजन्तून् ॥ १६ ॥
सुखं किमस्त्यत्र विचार्यमाणे गृहेषु वा योषिति वा पदार्थे ॥
मायातमोधीकृतचक्षुषो ये त एव मुह्यंति विवेकशून्याः ॥ १७ ॥
अविचारितरमणीयं सर्वमुदुंबरफलोपमं भोग्यम् ॥
अज्ञानामुपभोग्यं नतु तज्ज्ञानामुदुंबरं क्वापि ॥ १८ ॥
गतोऽपि तोये सुषिरे[25] कुलीरो[26] हातुं[27] ह्यशक्तो म्रियते विमोहात् ॥
यथा तथा गेहसुखानुषक्तो विनाशमायाति नरो भ्रमेण ॥ १९ ॥
कोशक्रिमि[28]स्तंतुभिरात्मदेहमावेष्ट्य चावेष्ट्य च गुप्तिमिच्छन् ॥
स्वयं विनिर्गंतुमशक्त एव ततस्तदंतर्म्रियतेऽवलग्नः ॥ २० ॥
यथा तथा पुत्रकलत्रमित्रस्नेहानुबंधैर्ग्रथितो गृहस्थः ॥
कदापि वा तान्परिभाव्य[29] गेहान् गंतुं न शक्तो म्रियते मुधैव[30] ॥ २१ ॥

---

१४. अङ्गारनदी=यमलोकप्रसिद्धा अंगारप्रचुरा नदी. १५. वीचिः=नरकविशेषः. १६. असिपत्रकाननम्=यमलोकप्रसिद्धं खड्गरूपपर्णयुक्तवृक्षप्रचुरवनम्. १७. विपक्षलोक=शत्रुलोकः. १८. निरुक्तम्=अत्यन्तमुक्तम्. १९. तारतम्यम्=न्यूनाधिक्यम्. २०. औपाधिक=बाह्यप्रयोगजन्य. २१. वास्तवम्=यथार्थम् सत्यम्. २२. सालोक्यसामीप्यसरूपतादि=सलोकता, समीपता, सरूपता सायुज्यमित्येतन्मुक्तिचतुष्टयम्. २३. उच्चावचत्वम्=न्यूनाधिक्यम्.
२४. रतिः=प्रीतिः. २५. सुषिरम्=बिलम्. २६. कुलीरः='खेकडा' इति महाराष्ट्रभाषायाम्. २७. हातुम्=त्यक्तुम्. २८. कोशक्रिमिः='सुरवट' इति महा॰ २९. परिभाव्य=तिरस्कृत्य. ३०. मुधा=व्यर्थम्.

कारागृह[31]स्यास्य च नो विशेषः प्रदृश्यते साधु[32] विचार्यमाणे ॥
मुक्तेः प्रतीप[33]त्वमिहास्ति पुंसः कांतासुखादुत्थितमोहपाशैः ॥ २२ ॥
गृहरक्षा पादनिबद्धशृंखला कांतासुखाशा पटुकंठपाशः ॥
शीर्षे पतद्वज्रसमानिर्हि साक्षात्प्राणांतहेतुः प्रबला धनाशा ॥ २३ ॥
आशापाशशतेन पा[34]शितपदो नोत्थातुमेव क्षमः
कामक्रोधमदादिभिः प्रतिभटैः[35] † संरक्ष्यमाणोऽनिशम् ॥
संमोहावरणेन गोपनवतः संसारकारागृहा-
न्निर्गंतुं त्रिविधै[36]षणापरिवृतः कः शक्नुयाद्रा[37]गिषु ॥ २४ ॥
कामांधकारेण निरुद्धदृष्टिर्मुह्यत्यसत्यप्यबलास्वरूपे ॥
न ह्यंधदृष्टेरसतः सतो वा सुष्ठुत्वदुष्टत्वविचारणास्ति ॥ २५ ॥
श्लेष्मो[38]द्गारि मुखं स्रवन्मलवती नासाऽश्रुमल्लोचनं
स्वेदस्रावि मलाभिपूर्णमभितो दुर्गंधिदुष्टं § वपुः ॥
अन्यद्वक्तुमशक्यमेव मनसा मंतुं क्वचिन्नार्हति
स्त्रीरूपं कथमीदृशं सुमनसां पात्री[39]भवेन्नेत्रयोः ॥ २६ ॥
दूरादवेक्ष्याग्निशिखां पतंगो रम्यत्वबुद्ध्या विनिपत्य नश्यति ॥
कामेन कांतां परिगृह्य तद्वज्जनोऽप्ययं नश्यति नष्टदृष्टिः ॥ २७ ॥
मांसास्थिमज्जामलमूत्रपात्रं स्त्रियं स्वयं रम्यतयैव पश्यति ॥
यतस्ततो नष्टदृगेष सूक्ष्मं कथं निरीक्षेत विमुक्तिमार्गम् ॥ २८ ॥
कामएव यमः साक्षात्कांता वैत[40]रणी नदी ॥
विवेकिनां मुमुक्षूणां नि[41]लयस्तु यमालयः ॥ २९ ॥
यमालये वापि गृहेऽपि नो नृणां *तापत्रयक्लेशनिवृत्तिरस्ति ॥
किंचित्समालोक्य तु तद्विरामं सुखात्मना पश्यति मूढलोकः ॥ ३० ॥
यमस्य कामस्य च तारतम्यं विचार्यमाणे महदस्ति लोके ॥
हितं करोत्यस्य यमोऽप्रियः सन् कामस्त्वनर्थं कुरुते प्रियः सन् ॥ ३१ ॥
यमोऽसतामेव करोत्यनर्थं सतां तु सौख्यं कुरुते हितः सन् ॥
कामः सतामेव गतिं निरुंधन् करोत्यनर्थं ह्यसतां तु का कथा ॥ ३२ ॥

---

३१. कारागृहम्=बन्धनालयम्. ३२. साधु=सम्यक्. ३३. प्रतीपत्वम्=प्रतिकूलत्वम्. ३४. पाशित=बद्ध. ३५. प्रतिभटैः=वीरैः † संरक्ष्यमाणः=परिवेष्ट्यमाणः. ३६. त्रिविधैषणा=वित्तैषणादि इच्छात्रयम्. ३७. रागिन्=विषयांधः. ३८. श्लेष्मन्=कफः. § दुष्टम्=दूषितम्. ३९. नेत्रयोः पात्रीभू=दर्शनार्हम्. ४०. वैतरणी=यमलोकप्रसिद्धा विगततरणीका मांसपूयपुरीषप्रचुरा नदी. ४१. निलयः=गृहम्. * तापत्रयम्=आधिभौतिकाधिदैविकाध्यात्मिकरूपम्.

विश्वस्य वृद्धिं स्वत एव कांक्षन् प्रवर्धकं काममजः ससर्ज ॥
तेनैव लोकः परिमुह्यमाणः प्रवर्द्धते चंद्रमसेव वार्धिः ॥ ३३ ॥
कामो नाम महान् जगद्भ्रमयिता स्थित्वांतरंगे स्वयं
स्त्रीपुंसोरितरेतरांगकगुणैर्हावैश्च भावैः स्फुटम् ॥
अन्योन्यं परिमोह्य नैजतमसा प्रेमानुबंधेन तौ
बध्वा भ्रामयति प्रपंचरचनां संवर्धयन् ब्रह्मणः ॥ ३४ ॥
अतोंतरंगस्थितकामवेगाद्भोग्ये प्रवृत्तिः स्वत एव सिद्धा ॥
सर्वस्य जंतोर्ध्रुवमन्यथा चेदबोधि[४२]तार्थेषु कथं प्रवृत्तिः ॥ ३५ ॥
तेनैव सर्वजंतूनां कामना बलवत्तरा ॥
जीर्यत्यपि च देहेऽस्मिन् कामना नैव जीर्यति ॥ ३६ ॥
कामस्य विजयोपायं सूक्ष्मं वक्ष्याम्यहं सताम् ॥
संकल्पस्य परित्याग उपायः सुलभो मतः ॥ ३७ ॥
श्रुते दृष्टेऽपि वा भोग्ये यस्मिन्कस्मिश्च वस्तुनि ॥
[४३]समीचीनत्वधीत्यागात्कामो नोदेति कर्हिचित् ॥ ३८ ॥
कामस्य बीजं संकल्पः संकल्पादेव जायते ॥
बीजे नष्टेऽकुर इव तस्मिन्नष्टे विनश्यति ॥ ३९ ॥
न कोपि सम्यक्त्वधिय विनैव भोग्यं नरः कामयितुं समर्थः ॥
यतस्ततः कामजयेच्छुरेतां सम्यक्त्वबुद्धिं विषये निहन्यात् ॥ ४० ॥
संकल्पानुदये हेतुर्यथाभूतार्थदर्शनम् ॥
अनर्थचिंतनं चाभ्यां नावकाशोऽस्य विद्यते ॥ ४१ ॥
रत्ने यदि शिलाबुद्धिर्जायते वा भयं ततः ॥
समीचीनत्वधीर्नैति नोपादेय[४४]त्वधीरपि ॥ ४२ ॥
यथार्थदर्शनं वस्तुन्यनर्थस्यापि चिंतनम् ॥
संकल्पस्यापि कामस्यानुदयोऽपा[४५]यायिष्यते ॥ ४३ ॥
धनं भयनिबंधनं सततदुःखसंवर्धनं
प्रचंडतर[४६]गर्धनं घटितबंधुसंस्पर्शनम्[४७] ॥
विशिष्टगुण[४८]बाधनं कृपणधीसमा[४९]राधनं
न मुक्तिगतिसाधनं भवति नापि हृच्छोधनम्[५०] ॥ ४४ ॥

४२. अबोधितार्थः=अज्ञातार्थः. ४३. समीचीनत्वधीः=सम्यक्त्वबुद्धिः. ४४. उपादेयत्वम्=ग्राह्यत्वम्. ४५. अपाययिष्यते=अकल्याण करोति. ४६. गर्धनम्=लोभनम्. ४७. संस्पर्शनम्=संमेलकम्. ४८. बाधनम्=प्रतिबंधकारि. ४९. समाराधनम्=आनंदयितृ. ५०. हृच्छोधनम्=मनःशुद्धिकरम्.

राज्ञो भयं चोरभयं प्रमादाद्भयं तथा ज्ञातिभयं च वस्तुनः ॥
धनं भयग्रस्तमनर्थमूलं यतः सतां तन्न सुखाय कल्पते ॥ ४५ ॥
सतामपि पदार्थस्य लाभाल्लोभः प्रवर्तते ॥
विवेको लुप्यते लोभात्तस्मिँल्लुप्ते विनश्यति ॥ ४६ ॥
दहत्यलाभे निःस्वत्वं लाभे लोभो दहत्यमुम् ॥
तस्मात्संतापकं वित्तं कस्य सौख्यं प्रयच्छति ॥ ४७ ॥
भोगेन ममता जंतोर्दानेन पुनरुद्भवः ॥
उभयथाप्यथा वित्तं नास्त्येव गतिरन्यथा ॥ ४८ ॥
धनेन मदवृद्धिः स्यान्मदेन स्मृतिनाशनम् ॥
स्मृतिनाशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ४९ ॥
सुखयति धनमित्येवांतराशापिशाची दृढतरमुपगूढो मूढलोको जडात्मा ॥
निवसति तदुपांते संततं प्रेक्षमाणो व्रजति तदपि पश्चात्प्राणमेतस्य हृत्वा ॥ ५० ॥
संपन्नोऽन्धवदेव किंचिदपरं नो वीक्षते चक्षुषा
सद्भिर्वर्जितमार्ग एव चरति प्रोत्सारितस्तादृशैः ॥
तस्मिन्नेव मुहुःस्खलन्प्रतिपदं गत्वांधकूपे पत-
त्यस्यांधत्वनिवर्तकौषधमिदं दारिद्र्यमेवांजनम् ॥ ५१ ॥
लोभः क्रोधश्च दंभश्च मदो मत्सर एव च
वर्द्धंते वित्तसंप्राप्त्या कथं तच्चित्तशोधनम् ॥ ५२ ॥
नित्यार्तिदेन वित्तेन भयचिंतानपायिना
चित्तस्वास्थ्यं कुतो जंतोर्गृहस्थेनाहिना यथा ॥ ५३ ॥
कांतारे विजने वने जनपदे सेतौ विरीतौ* च वा
चोरैर्वापि तथेतरैरपि नरैर्युक्तो वियुक्तोऽपि वा ॥
निःस्वैः स्वस्थतया सुखेन वसति ह्याद्रीयमाणो जनैः
क्लिश्नात्येव धनी सदाकुलमतिर्भीतः स्वपुत्रादपि ॥ ५४ ॥
तस्मादनर्थस्य निदानमर्थः पुमर्थसिद्धिर्न भवत्यनेन ॥
अतो वनांते निवसंति संतः संन्यस्य सर्वं प्रतिकूलमर्थम् ॥ ५५ ॥
श्रद्धाभक्तिमतीं ‡ सतीं गुणवतीं पुत्रान् सतां संमता-
नक्षय्यं वसु दानभोगविभवैः श्रीसुंदरं मंदिरम् ॥

५१. निःस्वत्वम्=द्रव्यरहितत्वम् ५२. पुनरुद्भवः=वृद्धिः. ५३. उभयथा=उभयप्रकारेण. ५४. उपगूढः=नियन्त्रितः. ५५. प्रोत्सारितः=तिरस्कृतः. ५६. अनपायि=अविनाशकारि, पर्धकम्. * विरीतिः=निर्जनप्रदेशभवा नदी. ५७. निःस्व:=निर्धनः. ५८. क्लिश्नाति=क्लेशं प्राप्नोति. ५९. संन्यस्य=त्यक्त्वा. ‡ सतीं=स्त्रियं.

सर्वं नैश्वरमित्यवेत्य कवयः श्रुत्युक्तिभिर्युक्तिभिः
संन्यस्यंत्यपरे तु तत्सुखमिति भ्राम्यंति दुःखार्णवे ॥ ५६ ॥

सत्कर्मक्षतपाप्मनां श्रुतिमतां श्रद्धात्मनां धीमतां
नित्यानित्यपदार्थशोधनमिदं युक्त्या मुहुः कुर्वताम् ॥
तस्मादुत्थमहाविरक्त्यसिमतां मोक्षैककांक्षावतां
धन्यानां सुलभं समस्तविषयेच्छाशालताच्छेदनम् ॥ ५७ ॥

संसारमृत्योर्बलिनः प्रवेशद्वाराणि तु त्रीणि महांति लोके ॥
कांता च जिव्हा कनकं च तानि रुणद्धि यस्तस्य भयं न मृत्योः ॥५८॥

मुक्तिश्रीनगरस्य दुर्जयतरं द्वारं यदस्त्यादिमं
तस्य द्वे अररे धनं च युवती ताभ्यां पिनद्धं दृढम् ॥
कामाद्यर्गलदारुणा बलवता चांतस्तदेतत्त्रयं
धीरो यस्तु भिनत्ति सोऽर्हति सुखं भोक्तुं विमुक्तिश्रियः ॥ ५९ ॥

आरूढस्य विवेकाश्वं तीव्रवैराग्यखड्गिनः ॥
तितिक्षोरुपशांतस्य प्रतियोगी न दृश्यते ॥ ६० ॥

विवेकजां तीव्रविरक्तिमेव मुक्तेर्निदानं निगदंति संतः ॥
तस्माद्विवेकी पुरुषो मुमुक्षुः संपादयेत्तामतुलप्रयत्नैः ॥ ६१ ॥

मनः प्रसादस्य निदानमेतन्निरोधनं यत्सकलेंद्रियाणाम् ॥
बाह्येंद्रिये साधु निरुध्यमाने बाह्यार्थभोगो मनसो वियुज्यते ॥ ६२ ॥

तेन स्वदौष्ट्यं परिमुच्य चित्तं शनैः शनैः शांतिमुपाददाति ॥
चित्तस्य बाह्यार्थविमोक्षमेव मोक्षं विदुर्मोक्षणलक्षणज्ञाः ॥ ६३ ॥

दमं[70] विना साधु मनःप्रसादहेतुं न विद्मः सुखदं मुमुक्षोः ॥
दमेन चित्तं निजदोषजातं विसृज्य शांतिं समुपैति शीघ्रम् ॥ ६४ ॥

प्राणायामाद्भवति मनसो निश्चलत्वं प्रसादो
यद्यप्यस्य प्रति नियतदिग्देशकालाद्यपेक्षा ॥
सम्यग्दृष्ट्या क्वचिदपि तथा नेदमस्यास्ति तस्मात्
कुर्याद्धीमान् दममनलसश्चित्तशांत्यै प्रयत्नात् ॥ ६५ ॥

सर्वेंद्रियाणां गतिनिग्रहेण भोग्येषु दोषाद्यवमर्शनेन ॥
ईशप्रसादाच्च गुरुप्रसादाच्छांतिं समायात्यचिरेण चित्तम् ॥ ६६ ॥

---

६०. क्षत=नाशित. ६१. असिमान्=खड्गवान्. ६२. आदिमम्=प्रथमम्. ६३. अररम्=कपाटम् 'कवाड' इति म० भा०. ६४ पिनद्धम्=नियन्त्रितम्, बद्धम्. ६५. कामाद्यर्गलदारुणा=कामरूपि यद्बलवद्द्वारावष्टम्भकं काष्ठ तेन. ६६. धीरः=ज्ञानवान् ६७ तितिक्षुः=प्रशान्तः. ६८. निदानम=आदिकारणम्. ६९. दौष्ट्यम्=दुष्टता. ७०. दमः=इन्द्रियनिग्रहः. ७१. अवमर्शनम्=आरोपणम्.

ब्रह्मचर्यमहिंसा च साधूनामप्यगर्हणम् ॥
परासेपादिसहनं तितिक्षेरिय सिध्यति ॥ ६७ ॥
उपरमयति कर्माणीत्युपरतिशब्देन कथ्यते न्यासः ॥
न्यासेन हि सर्वेषां प्रोक्तः श्रुत्यापि कर्मणां न्यासः ॥ ६८ ॥
प्रत्यगब्रह्मविचारपूर्वमुभयोरेकत्वबोधाद्विना
कैवल्यं पुरुषस्य सिध्यति परब्रह्मात्मतालक्षणम् ॥
न स्नानैरपि कीर्तनैरपि जपैर्नो कृच्छ्रचांद्रायणै-
र्नैवाप्यध्वरयज्ञदानिनिगमैर्नो मंत्रतंत्रैरपि ॥ ६९ ॥
नित्यानित्यपदार्थबोधरहितो यश्चोभयत्र स्रगा-
द्यर्थानामनुभूतिलम्पटहृदयोऽनिर्विण्णबुद्धिर्जनः ॥
तस्यैवास्य जडस्य कर्म विहितं श्रुत्या विरज्याभितो
मोक्षेच्छोर्न विधीयते तु परमानंदार्थिनो धीमतः ॥ ७० ॥
मोक्षेच्छया यदहरेव विरज्यतेऽसौ
न्यासस्तदैव विहितो विदुषो मुमुक्षोः ॥
श्रुत्या तयैव परया च ततः सुधीभिः
प्रामाणिकोयमिति चेतसि निश्चितव्यम् ॥ ७१ ॥
अत्यंततीव्रवैराग्यं फललिप्सा महत्तरा ॥
तदेतदुभयं विद्धि समाधानस्य कारणम् ॥ ७२ ॥
अंतरंगविहीनस्य कृताः श्रवणकोटयः ॥
निष्फलंति यथा योद्धुरधीरस्यास्त्रसंपदः ॥ ७३ ॥
तीव्रमध्यममंदातिमंदभेदैश्चतुर्विधा ॥
मुमुक्षा तत्प्रकारोऽपि कथ्यते श्रूयतां बुधैः ॥ ७४ ॥
तापैस्त्रिभिर्नित्यमनेकरूपैः संतप्यमानः क्षुभितांतरात्मा ॥
परिग्रहं सर्वमनर्थबुध्या जहाति सा तीव्रगतिर्मुमुक्षा ॥ ७५ ॥

---

७२. आक्षेपः=निंदा. ७३. उपरमयति=समापयति. ७४. उपरतिः=विषयेभ्योनिवृत्तिः. ७५. न्यासः=त्यागः. ७६. प्रत्यग्ब्रह्म=सर्वसाक्षि ब्रह्म. ७७. कैवल्यम्=मोक्षः. ७८. परंब्रह्म=अक्षय्यब्रह्म. ७९. कृच्छ्रचांद्रायणम्=प्रायश्चित्तविशेषः. ८०. निगमः=वेदः. ८१. स्रग्=माला. ८२. अनिर्विण्णबुद्धिः=अनुद्विग्नमतिः. ८३. विरज्य=औदासीन्येन दृष्ट्वा. ८४. परमानंदः=निर्विकल्पानंदः. ८५. अहः (अहरहः) प्रतिदिनं. ८६. विरज्यते=औदासीन्यं प्रतिगम्यते. ८७. परा=उत्कृष्टा. ८८. प्रामाणिकः=प्रमाणीभूतः. ८९. फललिप्सा=फलप्राप्तीच्छा. ९०. विद्धि=जानीहि. ९१. अन्तरंगम्=सारासारविचारक्षमं हृदयम्. ९२. परिग्रहः=धनम्. ९३. अनर्थबुद्ध्या=अनर्थमूलकमिति मत्वा.

तापत्रयं तीव्रमवेक्ष्य वस्तुदृष्ट्या कलत्रं तनयादि हातुम् ॥
मध्ये द्वयोर्दोलनमात्मनो यत्सैषा भवेन्माध्यमिकी मुमुक्षा ॥ ७६ ॥
मोक्षस्य कालोऽस्ति किमद्य मे त्वरा भुक्त्वैव भोगान् कृतसर्वकार्यः ॥
मुक्त्यै यतिष्येऽहमथेति बुद्धिरेषैव मंदा कथिता मुमुक्षा ॥ ७७ ॥
मार्गे प्रयातुर्मणिलाभवन्मे लभ्येत मोक्षो यदि तर्हि धन्यः ॥
इत्याशिनां[९४] मूढधियां मतिर्या सैषातिमंदाभिमता मुमुक्षा ॥ ७८ ॥
यस्तु तीव्रमुमुक्षुः स्यात्सजीवन्नेव मुच्यते ॥
जन्मांतरे मध्यमस्तु तदन्यस्तु युगांतरे ॥ ७९ ॥
चतुर्थः कल्पकोट्या वा नैव बंधाद्विमुच्यते ॥
तस्मान्मुख्यमुमुक्षुत्वं यत्नात्साध्यान्मविद्धवेत् ॥ ८० ॥
लब्ध्वा सुदुर्लभतरं नरजन्म जंतुस्तत्रापि पौरुषमतः सदसद्विवेकम् ॥
संप्राप्य चैहिकसुखाभिरतो यदि स्याद्धिक्तस्य जन्म कुमतेः पुरुषाधमस्य॥८१॥
खादते मोदते नित्यं शुनकः सूकरः खरः ॥
तेषामेषां विशेषः को वृत्तिर्येषां तु तैः समा ॥ ८२ ॥
संप्रीतिमीक्षणोर्विदनप्रसादमानंदमंतःकरणस्य सद्यः ॥
विलोकनं ब्रह्मविदस्तनोति छिनत्ति मोहं सुगतिं व्यनक्ति ॥ ८३ ॥
शिवप्रसादेन विना न सिद्धिः शिवप्रसादेन विना न बुद्धिः ॥
शिवप्रसादेन विना न युक्तिः शिवप्रसादेन विना न मुक्तिः ॥ ८४ ॥
मनोऽप्रसादः पुरुषस्य बंधो मनः प्रसादो भवबंधमुक्तिः ॥
मनः प्रसादाधिगमाय तस्मान्मनोनिरोधं विदधीत विद्वान् ॥ ८५ ॥
द्रष्टा श्रोता वक्ता कर्ता भोक्ता भवत्यहंकारः ॥
स्वयमेव सर्वकृतिनां साक्षी निर्लेप एवात्मा ॥ ८६ ॥
आत्मस्वरूपमनवेक्ष्य विमूढबुद्धिरारोपयत्यखिलमेतदनात्मकार्यम् ॥
स्वात्मन्यसंगचितिनिश्चल एव चंद्रे दूरस्थमेघकृतधावनवद्भ्रमेण ॥ ८७ ॥
भ्रांत्या मनुष्योऽहमहं द्विजोऽहं तज्ज्ञोऽहमज्ञोऽहमतीव पापी ॥
भ्रष्टोऽस्मि शिष्टोऽस्मि सुखी च दुःखीत्येवं विमुह्यात्मनि कल्पयंति ॥ ८८ ॥
विवेकवानप्यतियौक्तिकोऽपि श्रुतात्मतत्वोऽपि च पंडितोऽपि ॥
शक्त्या यया संवृतबोधदृष्टिरात्मानमात्मस्थमिमं न वेत्ति ॥ ८९ ॥

---

९४. इत्याशिनाम्=एव प्रकाराआशा येषां तेषाम् ९५. संप्रीतिः=परस्परानुरागः. ९६. व्यनक्ति=स्पष्टीकरोति. ९७. युक्तिः=उपायः. ९८. अप्रसादः=कलुषत्वम्. ९९. आरोपयति=अवमृशति. १००. तज्ज्ञः=तत्त्वज्ञः. १. शिष्टोऽस्मि=निष्पापोऽस्मि. २. विमुह्य=मोहमवलंब्य. ३. कल्पयन्ति=आरोपयन्ति. ४. यौक्तिकः=युक्तिज्ञः.

सम्यक्समाधिनिरतैर्विमलांतरंगैः साक्षादवेक्ष्य निजतत्त्वमपारसौख्यम् ॥
संतुष्यते परमहंसकुलैरजस्रं यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ९० ॥
श्रुत्युक्तमव्ययमपारमनंतमाद्यमानंदचिद्घनमनामयमद्वितीयम् ॥
अव्यक्तमक्षरमनाश्रयमप्रमेयं यद्ब्रह्म तत्त्वमसि केवलबोधमात्रम् ॥ ९१ ॥
श्रद्धाभक्तिपुरःसरेण विहितेनैवेश्वरं कर्मणा
संतोष्यार्जिततत्प्रसादमहिमा जन्मांतरेणैव यः ॥
नित्यानित्यविवेकतीव्रविरतिन्यासादिभिः साधनै-
र्युक्तः सन् श्रवणे सतामभिमतो मुख्याधिकारी द्विजः ॥ ९२ ॥
अध्यारोपापवादक्रममनुसरता देशिकेनात्मवेत्त्रा
वाक्यार्थे बोध्यमाने सति सपदि सतः शुद्धबुद्धेरमुष्य ॥
नित्यानंदाद्वितीयं निरुपममलं यत्पदं तत्त्वमेकं
तद्ब्रह्मैवाहमस्मीत्युदयति तु परा खंडिताकारवृत्तिः ॥ ९३ ॥
नाहं देहो नाप्यसुर्नाक्षवर्गो नाहंकारो नो मनो नापि बुद्धिः ॥
अंतस्त्वेषां चापि तद्विक्रियाणां साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ९४ ॥
वाचः साक्षी प्राणवृत्तेश्च साक्षी बुद्धेः साक्षी बुद्धिवृत्तेश्च साक्षी ॥
चक्षुःश्रोत्रादींद्रियाणां क्रियाणां साक्षी नित्यःप्रत्यगेवाहमस्मि ॥ ९५ ॥
नाहं स्थूलो नापि सूक्ष्मो न दीर्घो नाहं बालो नो युवा नापि वृद्धः ॥
नाहं काणो नापि मूको न खंजः साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ९६ ॥
नास्म्यागंता नापि गंता न हंता नाहं कर्ता न प्रयोक्ता न वक्ता ॥
नाहं भोक्ता नो सुखी नैव दुःखी साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ९७ ॥
नाहं योगी नो वियोगी न रागी नाहं क्रोधी नैव कामी न लोभी ॥
नाहं बद्धो नापि युक्तो न मुक्तः साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ९८ ॥
नांतःप्रज्ञो नो बहिः प्रज्ञको वा नैव प्रज्ञो नापि चाप्रज्ञ एषः ॥
नाहं श्रोता नापि मंता न बोद्धा साक्षी नित्यः प्रत्यगेवाहमस्मि ॥ ९९ ॥
ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ॥
इत्येवैषा वैदिकी वाग्ब्रवीति क्लेशक्षत्या जन्म एव प्रहाणिः ॥ १०० ॥

---

५. परमहंस=यतिविशेष. ६. अजस्रम्=नित्यम्. ७. तत्त्वमसि=त्वं ब्रह्मासि. ८. चिद्घनम्=ज्ञानमयम्. ९. अनामयम्=निर्विकारम्. १० अव्यक्तम्=अतिसूक्ष्मरूपम्. ११. अक्षरम्=अक्षय्यम्. १२. अप्रमेयम्=अपरिच्छेद्यम्. १३. अध्यारोपः=मिथ्यारोपणम्. १४. देशिकः=गुरुः. १५. आत्मवेत्ता=आत्मज्ञानवत्ता. १६. अक्षवर्ग=इंद्रियसमूहः. १७. विक्रिया=विकृतिः १८ प्रत्यक्=व्यक्तिमात्रव्यापिन्. १९. वियोगिन्=योगरहितः. २०. रागी=विषयान्धः २१. युक्तः=संसारसमुद्रमग्नः. २२. प्रहाणिः=विशेषाहानिः. २३. क्षतिः=नाशः.

भूयोजन्माद्य[24]प्रसक्तिर्विमुक्तिः क्लेशसत्या भाति जन्माद्यभावः ॥
क्लेशसत्या हेतुरात्मैकनिष्ठा तस्मात्कार्या स्वात्म[25]निष्ठा मुमुक्षोः ॥ १ ॥
यमनियम[26]विनिष्ठैः[27] साधुसिद्धासनस्थः सततमसुनियामी रुद्धधीर्धारणाद्यैः ॥
रहसि परमतत्त्वं निष्कलं चिंतयानः प्रदहति भवबंधं निर्विकल्पे[28] निरूढः[29] ॥ २ ॥

मायाध्वांते त्वहमिदमितिभ्रांतिबीजे विनष्टे
श्रुत्याचार्यप्रकटवचनोद्भूतबोधारुणेन[30] ॥
ब्रह्मात्मैक्ये द्वय[31]विरहिते केवलानंदरूपे
किं कर्तव्यं किमुतकरणम् किं फलं कोनु कर्ता ॥ ३ ॥

यत्राशेषं जगदिदमभून्नाममात्रावशेषं
सर्पस्फूर्ति[32]र्गुणवदसतः कल्पनाधारमात्रे[33] ॥
ज्ञाते तस्मिन्निरवधि[34]सदानंदपीयूषसिंधौ
किं कर्तव्यं किमुत करणं किं फलं कोनु कर्ता ॥ ४ ॥

भ्रांत्या कर्ता करणपटली[35]कर्मकार्यं विक्लृप्तं[36]
सत्येकस्मिन्नभसिपुरवद्वस्तुतो द्वैतशून्ये ॥
तद्विध्वंसे किमिह निवसेत्केवले बोधमात्रे
किं कर्तव्यं किमुत करणं किं फलं कोनु कर्ता ॥ ५ ॥

कालांभोधौ[37]विदमिदमितिग्राह्यशून्यार्थजाते
क्व स्याद्वापिप्रहि[38]र्नदनदीभेदकल्पावकाशः ॥
तद्वद्ब्रह्मण्यपगतभिदे[39] सुप्ति[40]वन्निर्विशेषे
किं कर्तव्यं किमुत करणं किं फलं कोनु कर्ता ॥ ६ ॥

यत्रत्वस्येत्युपनिषदि सत्केवलत्वं ब्रुवंत्याम्
सुप्तौ सर्वानुभवविषये वाच्यभेदं[41] वदेत्कः ॥
तस्मान्नित्ये निरवधिसुखे निर्गुणे निर्विकल्पे
किं कर्तव्यं किमुत करणं किं फलं कोनु कर्ता ॥ ७ ॥

---

२४. अप्रसक्तिः=अनासक्तिः. २५. स्वात्मनिष्ठा=आत्मनि दृढाभक्तिः. २६. यमनियमौ=शरीरसाधनापेक्ष नित्य कर्म यमः (अहिंसादिकम्)। बाह्यसाधनेन साध्य कर्म नियमः (शौचादिकम्). २७. विनिष्ठ=विशेषभक्तियुक्तः. २८. निर्विकल्पः=निर्विकारः. २९. निरूढः=निमग्नः. ३०. अरुणः=सूर्यः. ३१. द्वयविरहितम्=अद्वैतमल. ३२. सर्पस्फूर्तिः=सर्पभासः. ३३. कल्पनाधारमात्रम्=कल्पनाएव आधारो यस्य तत्. ३४. निरवधिः=अपारः. ३५. पटली=आच्छादनम्. ३६. विक्लृप्तम्=कल्पितम्. ३७. अंभोधिः=समुद्रः. ३८. प्रहिः=कूपः. ३९. भिद्=भेदः. ४०. सुप्ति=निद्रा. ४१. वाच्यभेदः=स्पष्टार्थभेदः (विशेषार्थभेदः).

देहेंद्रियेष्वात्मधियाभिमानिनो विधिर्निषेधो न तु तत्वदर्शिनः ॥
अतो यथेष्टाचरणं न तस्य तच्चापि देहाभिनिवेशितः स्यात् ॥ १०८ ॥
यथेष्टाचरणं यस्य भेददर्शनपूर्वकम् ॥
न तस्य ज्ञानगंधोऽस्ति विवेको वाऽणुमात्रकः ॥ १०९॥
अन्यत्यक्तमलं भुंक्ते शुनकः सूकरः खरः ॥
स्वयं त्यक्तमलं भुंक्ते स तस्मादधमः खलः ॥ ११० ॥
ब्रह्मानंदरसं सुदुर्लभतरं ब्रह्मादिकानामपि
प्राप्यानेकसहस्रजन्मसुकृतैर्धातुः प्रसादाद्यतिः ॥
कोन्वेनं समुपेक्ष्य दर्पणतलच्छायाभासि वैस्तूपलं
तुच्छं सेवितुमुत्सहेत विषयं ज्ञात्वा मृषा लक्षणम् ॥ १११ ॥
स्वात्मानंदरसं सुखेन पिबतः स्वं पश्यतः सर्वतः
प्रत्यग्वृत्युपसंहृतेंद्रियगतेः शांतः प्रवृत्तेर्यतेः ॥
स्वप्ने वापि च नो यथेष्टचरणं संभाव्यते धीमतो
हंसस्येव पयोभुजः सुमनसः पंकोदकप्राशनम् ॥ १२ ॥
मानावमानसुखदुःखहिताहितादा-
वेकात्मना स्थितमनाः प्रशमाभिरामः ॥
प्रत्यङ्मुखो निजसुखार्थपराङ्मुखः सन्
जीवन् विमुक्त इति तिष्ठति विद्वरिष्ठः ॥ १३ ॥
प्रारब्धमारुतवशाद्विषये प्रवृत्तं तस्मान्निवृत्तमपि देहमनीक्षमाणः ॥
स्वात्मानुभूतरससेवनमत्तचित्तो जीवन् विमुक्त इति तिष्ठति विद्वरिष्ठः ॥ १४॥
अन्येच्छयैव परिकल्पितदेहवृत्तिर्निद्रालुवच्च शिशुवत्प्रतिबोध्यमानः ॥
यत्नेन भावितपदार्थविशेषबोधो जीवन् विमुक्त इति तिष्ठति विद्वरिष्ठः ॥ १५॥
अंतर्बहिश्च विषये भवदात्ममात्रस्वान्यप्रमाणपरिकल्पितदेहभानः ॥
एकात्मनाधिगमनेन विमूढवृत्तिर्जीवन्विमुक्त इति तिष्ठति विद्वरिष्ठः ॥ १६ ॥
प्रागादिदिग्विभजनेन स्वपरान्यभावं स्वस्वप्नजागरविभागविवेकशुद्धिम् ॥
विस्मृत्य केवलचिदाकृतिरेव भूत्वा जीवन्विमुक्त इति तिष्ठति विद्वरिष्ठः ॥१७॥
कर्माकर्मविकर्ममार्गविमुखः सन्मार्गवर्ती सदा
संप्रज्ञातसमाधिनातिगमितप्रारब्धशेषो मुनिः ॥

---

४२. यथेष्टाचरण=स्वेच्छाचारः । ४३. अभिनिवेशः=दृढभक्तिः प्रीतिर्वा ४४. ०याभासि=प्रतिबिम्बितम् । ४५. वस्तूपलम्=वस्तु+उपल=उपलः एव वस्तु अतएव वस्तुमात्रम् । ४६. स्वम्=आत्मानम् । ४७. प्रशमाभिरामः=प्रशान्त्या रममाणः । ४८. प्रत्यङ्मुखः=प्रबोधवान् । ४९. विद्वरिष्टः=विद्वच्छ्रेष्ठः । ५०. अनीक्षमाणः=अनवहितः । ५१. भावित=ज्ञापित । ५२. प्रमाणम्=मानम् । ५३. दिक्=दिशा । ५४. समाधिः=सयमः ।

प्राणे ब्रह्मणि लीनतामुपगते ब्रह्मैवसन् ब्रह्मविद्-
ब्रह्माप्येति घटे लयं गतवति व्योम्नि स्वयं व्योमवत् ॥ १८ ॥
प्रारब्धस्य गतिर्यथा खलु तथा दुःखं सुखं प्राणिनां
नैवैतां समतीत्यै सिद्ध्यति फलं पुंसः प्रयत्नादतः ॥
प्रारब्धाय समर्प्य देहमदतच्चितां विहायानिशं
नैश्चल्येन समाधिमाचर चिरं नैकत्र तिष्ठ स्थितम् ॥ १९ ॥
क्षुत्तापनुत्तये भुक्तिर्वस्त्रं शीतनिवृत्तये ॥
व्यापृतिक्षतये मौनं संचारः स्नेहकृंतये ॥ २० ॥
तिष्ठत्येष उपाधिमार्तिबिंबमसौ मम प्रतिच्छाया ॥
नैतत्कृतमीयन्मां साक्षिणमेतद्विलक्षणं स्पृशति ॥ २१ ॥
चिरकालमनेनाहमहंकारेण वंचितः ॥
पिशाचेन यथा ग्रस्तः स्वस्वरूपविरोधिना ॥ २२ ॥
विज्ञातोयं मया चोरश्चिरकालं विचिन्वता ॥
समाध्यसौ निधायैनं निर्धक्ष्यामि सवासनम् ॥ २३ ॥
यदस्त्यधस्तादपि चोपरिष्टात्पश्चात्पुरस्तादपि दक्षिणस्याम् ॥
अप्युत्तरस्यां परिपूर्णमद्वयं तदस्मि साक्षादिति मौनमाश्रये ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितो वेदांतसारः समाप्तः ॥

---

## अथ स्वात्मानंदप्रकाशः.

श्रीरामपरं ब्रह्मानंदयतींद्रं गुरुं मुदां नत्वा ॥
अद्वैतामृतनाम्नीं टीकां कुर्वे प्रकाशकार्याणाम् ॥ १ ॥
श्रीगुरुचरणद्वंद्वं वंदेऽहं मथितदुःसहद्वंद्वम् ॥
भ्रांतिग्रहोपशांतिपांसुमयं यस्य भसितमातनुते ॥ १ ॥
दैशिकवरं दयालुं वंदेऽहं निहतसकलसंदेहम् ॥
यच्चरणद्वयमद्वयमनुभवमुपदिशति तत्पदस्यार्थम् ॥ २ ॥
संसारदावपावकसंतप्तः सकलसाधनोपेतः ॥

---

५५. समतीत्य=उल्लङ्घ्य । ५६. नुत्तिः=वारणम् । ५७. व्यापृतिः=व्यापारः, व्यवहारः । ५८. संचारः=वन्यवृत्तिः, अरण्यवासः । ५९. स्पृशति=लक्ष्यीकरोति । ६०. निर्धक्ष्यामि=भस्मसात्करिष्यामि, समुन्मूलयिष्यामि । ६१. सवासनम्=वासनासहितम् ।

१. श्रीरामपरः=श्रीरामभक्तिपरायणः,तत्परः । २. मुदाम्=हर्षाणाम् । ३. प्रकाशः=बोधः । ४. मथित=नाशित । ५. पांसुमय=अतिसूक्ष्मपरमाणुमात्रम् । ६. भसितम्=भस्म । ७ दैशिकः=गुरुः । ८. तल्पम्=शय्या । ९. दावपावक.=दावानलः, वनवह्निः 'वणवा' इ० म० भा० ।

स्वात्मनिरूपणनिपुणैर्वचोभिः शिष्यः प्रबोध्यते गुरुणा ॥ ३ ॥
अस्ति स्वयमित्यस्मिन्नर्थे कस्यास्ति संशयः पुंसः ॥
अत्रापि संशयश्चेत्संशयिता यः स एव भवसि त्वम् ॥ ४ ॥
नाहमिति वेत्ति यो ऽसौ सत्यं ब्रह्मैव वेत्ति नास्तीति ॥
अहमस्मीति विजानन् ब्रह्मैवासौ स्वयं विजानाति ॥ ५ ॥
ब्रह्मत्वमेव तस्मान्नाहं ब्रह्मेति मोहमात्रमिदम् ॥
मोहेन भवति भेदः क्लेशाः सर्वे भवंति तन्मूलाः ॥ ६ ॥
न क्लेशपंचकमिदं भजते कृतकोशपंचकविवेकः ॥
अत एव पंचकोशान् कुशलधियः संततं विचिन्वंति ॥ ७ ॥
अन्नप्राणमनोमयविज्ञानानंदपंचकोशानाम् ॥
एकैकांतर्भाजां भजति विवेकात्प्रकाशतामात्मा ॥ ८ ॥
वपुरिदमन्नमयाख्यः कोशो नाम्ना जडो घटप्रायः ॥
प्रागुत्पत्तेः पश्चात्तदभावस्यापि दृश्यमानत्वात् ॥ ९ ॥
कोशः प्राणमयो ऽयं वायुविशेषो वपुष्यवच्छिन्नः ॥
अस्य कथमात्मता स्यात्क्षुत्तृष्णाभ्यामुपेयुषः पीडाम् ॥ १० ॥
कुरुते वपुष्यहंतां गेहादौ यः करोति ममतां च ॥
रागद्वेषविधेयो[22] नासावात्मा मनोमयः कोशः ॥ ११ ॥
सुप्तौ स्वयं विलीना [23]बोधे व्याप्ता कलेवरं सकलम् ॥
विज्ञानशब्दवाच्या चित्प्रतिबिंबा न बुद्धिरप्यात्मा ॥ १२ ॥
सुप्तिगतैः सुखलेशैऽरभिमनुते यः सुखी भवामीति ॥
आनंदकोशनामा सो ऽहंकारः कथं भवेदात्मा ॥ १३ ॥
यः स्फुरति बिंबभूतः स भवेदानंद एव सकलात्मा ॥
प्रागूर्ध्वमपि च सत्त्वादविकारित्वादबाध्यमानत्वात् ॥ १४ ॥
अन्नमयादेरस्मादपरं यदि नानुभूयते किंचित् ॥
अनुभवितान्नमयादेरस्तीत्यस्मिन्न कश्चिदपलापः ॥ १५ ॥

---

१०. निपुण=कुशल । ११. प्रबोध्यते=सावधानीक्रियते, उपदिश्यते । १२. संशयिता=संशयोत्पादकः । १३. क्लेशपञ्चकम्=अविद्या, अस्मिता, राग., द्वेष., मोहः एते पञ्चक्लेशाः । १४. भजते=प्राप्नोति । १५. विवेकः=विचारः । १६. पंचकोशाः=अन्नमयः प्राणमयः मनोमयः विज्ञानमयः आनंदमयः एतेपञ्च । १७. कुशलधीः=कल्याणेच्छुः । १८. प्राक्=पूर्वः । १९. विवेकः=विचारः २०. प्रकाशता=विशदता । २१. उपेयुषः=प्राप्तवतः । २२. विधेयः=ग्राहकः । २३. बोधः=निद्रापगमः । २४. कलेवरम्=शरीरम् । २५. विज्ञानम्=विशेषज्ञानम् । २६. चित्प्रतिबिंबा=ज्ञानप्रतिफलका । २७. बिंबभूत=प्रतिफलितः । २८. सत्त्वम्=अस्तित्वम् । २९. अपलापः=व्यर्थोक्तिः, प्रमादोक्तिः, प्रमादः ।

स्वयमेवानुभवत्वाद्यद्यप्येतस्य नानुभाव्यत्वम् ॥
सकृदप्यभावशंका न भवेद्बोधः स्वरूपसत्तायाः ॥ १६ ॥
अनुभवति विश्वमात्मा विश्वेनासौ न चानुभूयेत ॥
न खलु प्रकाश्यतेऽसौ विश्वमशेषं प्रकाशयन्भानुः ॥ १७ ॥
तदिदं तादृशमीदृशमेतावत्तावदिति[30] च यन्न भवेत् ॥
ब्रह्म तदित्यवधेयं[31] नो चेद्विषयो भवेत्परोक्षे[32] च ॥ १८ ॥
इदमिदमिति प्रतीतवस्तुनि[33] सर्वत्र बाध्यमानेऽपि ॥
अनिदं[34]मबाध्यं तत्त्वं सत्त्वादेस्तस्य नैव पारोक्ष्यम्[35] ॥ १९ ॥
नावेद्यमपि परोक्ष्यं भवति ब्रह्म स्वयंप्रकाशत्वात् ॥
सत्यं ज्ञानमनंतं ब्रह्मेत्येतस्य लक्षणं[36] प्रथितम् ॥ २० ॥
सति कोशशक्त्युपाधौ[37] संभवतस्तस्य जीवतेश्वरते[38] ॥
नोचेत्तयोरभावाद्विगतविशेषं[39] विभाति निजरूपम् ॥ २१ ॥
सति सकलदृश्यबाधे न किमप्यस्तीति लोकसिद्धं चेत् ॥
यन्न किमपीति सिद्धं ब्रह्म तदेवेति वेदतः सिद्धम् ॥ २२ ॥
एवं मतिरहितानां तत्त्वमसीत्यादि वाक्यचिंतनया ॥
प्रतिभात्येष परोक्षवदात्मा प्रत्यक्प्रकाशमानोऽपि ॥ २३ ॥
तस्मात्पदार्थशोधनपूर्वं वाक्यस्य चिंतयन्नर्थम् ॥
दैशिकदयाप्रभावादपरोक्षयति[40] क्षणेन चात्मानम् ॥ २४ ॥
देहेंद्रियादिधर्मानात्मन्यारोपयन्नभेदेन ॥
कर्तृत्वाद्यभिमानी बोधः स्यात्त्वंपदस्य[41] वाच्योऽर्थः ॥ २५ ॥
देहास्मि*तेंद्रियाणां साक्षी तेभ्यो विलक्षणत्वेन[42] ॥
प्रतिभाति योऽवबोधः[43] प्रोक्तोऽसौ त्वंपदस्य लक्ष्योऽर्थः[44] ॥ २६ ॥
वेदावसानै[45]वाचा संवेद्यं सकलजगदुपादानम्[46] ॥
सर्वज्ञताद्युपेतं चैतन्यं तत्पदस्य वाच्योर्थः ॥ २७ ॥
विविधोपाधिविमुक्तं विश्वातीतं विशुद्धमद्वैतम् ॥
अक्षरमनुभववेद्यं चैतन्यं तत्पदस्य लक्ष्योर्थः ॥ २८ ॥

---

३०. इति=एवरूपम्। ३१. अवधेयम्=ज्ञातव्यम्। ३२. परोक्षम्=अक्ष्णोः परम् यथातथा। ३३. प्रतीतवस्तु=प्रत्ययगत वस्तु। ३४. अनिदम्=इदमितिपदरहितम्। ३५. पारोक्ष्यम्=परोक्षता। ३६. लक्षणम्=चिह्नम्। ३७. उपाधिः=बन्ध.। ३८. जीवतेश्वरते=जीवताच ईश्वरताच ते। ३९. विशेष=भेदः। ४०. अपरोक्षयति=प्रत्यक्षीकरोति। ४१. त्वपदम्=जीवः। ४२. विलक्षणत्वम्=भिन्नत्वम्। ४३. अवबोधः=पूर्णज्ञानम्-विज्ञानम्। ४४. लक्ष्योऽर्थः=लाक्षणिकार्थः। ४५. अवसानम्=पर्यवसान, अंतः। ४६. उपादानम्=कारणम्। * अहंता.

सामानाधिकरण्यं[47] तदनु विशेषणविशेष्यता चोत्र ॥
अथ लक्ष्यलक्षकत्वं भवति पदार्थात्मनां च संबंधः ॥ २९ ॥
एकत्रवृत्तिरर्थे शब्दानां भिन्नवृत्तिहेतूनाम् ॥
सामानाधिकरण्यं भवतीत्येवं वदंति लाक्षणिकाः[48] ॥ ३० ॥
प्रत्यक्त्वं च पराक्त्वं परिपूर्णत्वं च सद्द्वितीयत्वम् ॥
इतरेतरं विरुद्धं तदिह भवितव्यमेव लक्षणया ॥ ३१ ॥
मानांतरोपरोधे[49] मुख्यार्थस्यापरिग्रहे जाते ॥
मुख्या विना कृतेऽर्थे या वृत्तिः सैव लक्षणा प्रोक्ता ॥ ३२ ॥
निखिलमपि वाच्यमर्थं त्यक्त्वा वृत्तिस्तदन्वितेऽन्यार्थे ॥
जहतीति[50] लक्षणा स्याद्गंगायां घोषवदत्र न ग्राह्या ॥ ३३ ॥
वाच्यार्थमत्यजंत्या यस्या वृत्तेः प्रवृत्तिरन्यार्थे ॥
इयमजहतीति कथिता शोणो[51] धावतिवदत्र न ग्राह्या ॥ ३४ ॥
जहदजहतीति सा स्याद्या वाच्यार्थैकदेशमपहाय ॥
बोधयति चैकदेशं सोयं द्विज इतिवदाश्रयेदेनाम् ॥ ३५ ॥
सोऽयं द्विज इति वाक्यं त्यक्त्वा परोक्षापरोक्षदेशाद्यम् ॥
द्विजमात्रलक्षकत्वात्कथयत्यैक्यं पदार्थयोरुभयोः ॥ ३६ ॥
तद्वत्त्वमसीति त्यक्त्वा प्रत्यक्परोक्षतादीनि ॥
चिद्वस्तु लक्षयित्वा बोधयति स्पष्टमसिपदेनैक्यम् ॥ ३७ ॥
इत्यं बोधितमर्थं महता वाक्येन दर्शितैक्येन ॥
अहमित्यपरोक्षवतां वेदो वेदयति वीतशोकत्वम् ॥ ३८ ॥
प्रायः प्रवर्तकत्वं विधिवचसां लोकवेदयोर्दृष्टम् ॥
सिद्धं बोधयतीर्थं कथमेतद्भवति तत्त्वमस्यादेः ॥ ३९ ॥
विधिरेव न प्रवृत्तिं जनयत्यभिलषितवस्तुबोधोऽपि ॥
राजा याति सुतोऽभूदिति बोधेन प्रवर्तते लोकः ॥ ४० ॥
ऐक्यपरैः श्रुतिवाक्यैरात्मा शश्वत्प्रकाशमानोऽपि ॥
दैशिकदयाविहीनैरपरोक्षयितुं न शक्यते पुरुषैः ॥ ४१ ॥
विरहितकाम्यनिषिद्धो विहितानुष्ठाननिर्मलस्वांतः ॥
भजति निजमेव बोधं गुरुणा किमिति त्वया न मंतव्यम् ॥ ४२ ॥
कर्मभिरेव न बोधः प्रभवति गुरुणा विना दयानिधिना ॥
आचार्यवान् हि पुरुषो वेदैर्[52]र्थस्य वेदसिद्धत्वात् ॥ ४३ ॥

---

४७. सामानाधिकरण्यम्=एकाधिकरणत्वम् । ४८. लाक्षणिकः=लक्षणशास्त्रज्ञः, लक्षार्थज्ञः ।
४९. उपरोधः=प्रतिबंधः । ५०. जहती=लक्षणाविशेषः । ५१. शोण ३० घडा । ५२. वेद=जाणे ।

वेदोऽनादितया वा यद्वा परमेश्वरप्रणीततया ॥
भवति हि परं प्रमाणं बोधो नास्ति स्वैतश्च परतो वा ॥ ४४ ॥
नापेक्षते यदन्यदपेक्षतेऽखिलानि मानानि ॥
नान्यं तन्निगमानां मानं ब्रह्मावगतौ द्वितीयावगतौ ॥ ४५ ॥
मानं प्रबोधयंतं बोधं मानेन ये बुभुत्सन्ते ॥
एधोभिरेव दहनं दग्धुं वांछंति ते कुधियः ॥ ४६ ॥
वेदोनादिरमुष्य व्यंजक ईशः स्वयंप्रकाशात्मा ॥
तदभिव्यक्तिमुदीक्ष्य प्रोक्तोऽमी सूरिभिः प्रमाणमिति ॥ ४७ ॥
रूपाणामवलोके चक्षुरिवान्यन्न कारणं दृष्टम् ॥
तद्वदद्दष्टावगतौ वेदवदन्यो न वेद को हेतुः ॥ ४८ ॥
निगमेषु निश्चितार्थे तंत्रे कश्चिद्यदि प्रकाशयति ॥
तदिदमनुवादमात्रं प्रामाण्यं तस्य सिध्यति न किंचित् ॥ ४९ ॥
अंशद्वयवति निगमे साधयति द्वैतमेकांशः
अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरांशः ॥ ५० ॥
अद्वैतमेवसत्यं तस्मिन् द्वैतं न सत्यमध्यस्यम् ॥
रजतमिवशुक्तिकायां मृगतृष्णायामिवोदकस्फुरणम् ॥ ५१ ॥
आरोपितं यदि स्यादद्वैतं वस्त्ववस्तुनि द्वैते ॥
तदयुक्तमेव तस्मात्सत्ये ध्यासो भवत्यसत्यानाम् ॥ ५२ ॥
यद्यारोपणमुभयोस्तद्व्यतिरिक्तस्य कस्यचिदभावात् ॥
आरोपणं न शून्ये तस्माद्द्वैतसत्यता ग्राह्या ॥ ५३ ॥
प्रत्यक्षाद्यनवगतं श्रुत्या प्रतिपादनीयमद्वैतम् ॥
द्वैतं न प्रतिपाद्यं तस्य स्वयमेव लोकसिद्धत्वात् ॥ ॥ ५४ ॥
अद्वैतं सुखरूपं दुःखद्दुःखं सदा भयद्वैतम् ॥
यत्र प्रयोजनं स्यात्प्रतिपादयति श्रुतिस्तदेवासौ ॥ ५५ ॥
निगमगिरा प्रतिपाद्यं वस्तु सदानंदरूपमद्वैतम् ॥
स्वाभाविकस्वरूपं जीवत्वं तस्य केचन ब्रुवते ॥ ५६ ॥

---

५३. स्वतः=स्वस्मात् । ५४. निगम=वेदः । ५५. मान=परिच्छेदकम् । ५६. अवगतिः=ज्ञानम् । ५७. बुभुत्सते=बोद्धुमिच्छति । ५८. एधस्=काष्टम् । ५९. व्यंजकः=प्रकाशकः । ६०. अभिव्यक्तिः=प्रकाशकत्वम्, स्फुरता । ६१. सूरिः=पंडितः । ६२. तन्त्रम्=सिद्धांतः । ६३. अनुवादः=लौकिकी वाक् । ६४. अंशद्वयम्=जीवशिवरूपम् । ६५. टीप ५४ पहा । ६६. शुक्तिका='शिंप' इति म० भा० । ६७. मृगतृष्णा=मृगजलम् । ६८. ध्यास.=भासः(?) । ६९ आरोपणम्=वृथारोपणम् ।

स्वाभाविकं यदि स्याज्जीवत्वं तस्य विशदविज्ञप्तेः ॥
सकृदपि न तद्विनाशं गच्छेदुष्णप्रकाशवद्वह्नेः ॥ ५७ ॥
यद्वद्योरससिद्धं काञ्चनतां याति तद्वदेवासौ ॥
जीवः शोधनशक्त्या परतां यातीति केचिदिच्छंति[७२] ॥ ५८ ॥
तदिदं भवति न युक्तं गतवति तस्मिन् चिरेण रसवीर्ये ॥
प्रतिपद्यते विनाशं हेमो वर्णोऽप्ययःसमारूढः ॥ ५९ ॥
जीवत्वमपि तथेदं बहुविधसुखदुःखलक्षणोपेतम् ॥
गतवति साधनशक्त्या प्रतिभात्येव प्रयाति न विनाशम् ॥ ६० ॥
तस्मात्स्वतो यदि स्याज्जीवः सततं स एव जीवः स्यात् ॥
एवं यदि परमात्मा परमात्मैवायमिति भवेद्युक्तम् ॥ ६१ ॥
यदि वा परेण साम्यं जीवश्चेद्भवति साधनबलेन ॥
कालेन तदपि कियता नश्यत्येवेति निश्चितं सकलैः ॥ ६२ ॥
तस्मात्परं स्वकीयं मोहं मोहात्मकं च संसारम् ॥
स्वज्ञानेन च हित्वा पूर्णं स्वयमेव शिष्यते नान्यत् ॥ ६३ ॥
सत्यं ज्ञानानंदं प्रकृतं परमात्मरूपमद्वैतम् ॥
अवबोधयंति निखिलाः श्रुतयः स्मृतिभिः समस्ताभिः ॥ ६४ ॥
एकत्वबोधकानां निखिलानां निगमवाक्यजालानाम् ॥
वाक्यांतराणि सर्वाण्यभिधीयंते स्म शेषभूतानि ॥ ६५ ॥
यस्मिन्मिहिरवदुदिते तिमिरवदपयांति कर्तृतादीनि ॥
ज्ञानं विरहितभेदं कथमेतद्भवति तत्त्वमस्यादेः ॥ ६६ ॥
कर्मप्रकरणनिष्ठं[८२] ज्ञानं कर्मांगमिष्यते प्राज्ञैः ॥
भिन्नप्रकरणभाजः कर्मांगत्वं कथंभवेज्ज्ञप्तेः ॥ ६७ ॥
अधिकारिविषयभेदौ कर्मज्ञानात्मकावुभौ कांडौ ॥
एवं सति कथमनयोरंगांगित्वं[८५] परस्परं घटते ॥ ६८ ॥
ज्ञानं कर्मणि न स्याज्ज्ञाने कर्मेदमपि तथा न स्यात् ॥
कथमेतयोरुभययोस्तपनतमोवत्समुच्चयो घटते ॥ ६९ ॥

---

७०. विज्ञप्तिः=विज्ञानम् । ७१. साधनशक्तिः=उपायबलम् । ७२. इच्छंति=मन्यंते । ७३. रस.=द्रवः । ७४. अयःसमारूढः=लोहोपरिस्थापितः । ७५. प्रतिभाति=प्रकाशते । ७६. हित्वा=त्यक्त्वा । ७७. शिष्यते=अवशिष्यते । ७८. प्रकृतम्=प्रधानम् । ७९. जालम्=समुदायः । ८०. अभिधीयंते=व्यवह्रियंते । ८१. मिहिर=सूर्यः । ८२. निष्ठम्=स्थापितम् । ८३. ज्ञप्तिः=ज्ञानम् । ८४. कांडः=वर्गः । ८५. अंगांगित्वम्=पारस्पर्यम् । ८६. घटते=संभवति ।

तस्मान्मोहनिवृत्तौ ज्ञानं न सहायमन्यदर्थयते ॥
यद्वद्घनतरतिमिरप्रकरपरिध्वंसने सहस्रांशुः ॥ ७० ॥
ज्ञानं तदेव विमलं साक्षी विश्वस्य भवति परमात्मा ॥
संबध्यते न धर्मैः साक्षी तैरेव सच्चिदानंदः ॥ ७१ ॥
रज्ज्वादेरुरगादेः संबंधवदस्य दृश्यसंबंधः ॥
सततमसंगोयमिति श्रुतिरप्यमुमर्थमेव साधयति ॥ ७२ ॥
कर्तृत्वकर्मचयस्य स्फुरति ब्रह्मैव तन्न जानाति ॥
यस्य न कर्तृ न कर्म स्फुटतरमयमेव वेदितुं क्षमते ॥ ७३ ॥
कर्तृत्वादिकमेतन्मायाशक्त्या प्रपद्यते निखिलम् ॥
इति केचिदाहुरेषा भ्रांतिर्ब्रह्मातिरेकतो नान्यत् ॥ ७४ ॥
तस्मिन् ब्रह्मणि विदिते विश्वमशेषं भवेदिदं विदितम् ॥
कारणमृदि विदितायां घटकरकाद्या यथावगम्यंते ॥ ७५ ॥
तदिदं कारणमेकं विगतविशेषं विशुद्धचिद्रूपम् ॥
तस्मात्सदेकरूपान्मायोपहितादभूदिदं विश्वम् ॥ ७६ ॥
कारणमसदिति केचित्कथयंत्यसतो भवेन्न कारणता ॥
अंकुरजननीशक्तिः सति खलु बीजे समीक्ष्यते सकलैः ॥ ७७ ॥
कारणमसदिति कथयन् वंध्यापुत्रेण निर्वहेत्कार्यम् ॥
किंच मृगतृष्णिकांभःपीतोदन्यां महीयसीं शमयेत् ॥ ७८ ॥
यस्मान्न सोऽयमसतो वादः संभवति शास्त्रयुक्तिभ्याम् ॥
तस्मात्सदेवतत्त्वं सर्वेषां भवति कारणं जगताम् ॥ ७९ ॥
जगदाकारतयापि प्रथते गुरुशिष्यविग्रहतयापि ॥
ब्रह्माद्याकारतया प्रतिभातीदं परात्परं तत्त्वम् ॥ ८० ॥
सत्यं जगदिति भानं संसृत्यै स्यादपक्वचित्तानाम् ॥
यस्मादसत्यमेतन्निखिलं प्रतिपादयंति निगमांताः ८१ ॥
परिपक्वमानसानां पुरुषवराणां पुरातनैः सुकृतैः ॥
ब्रह्मैव सकलमेतदिति किल भूयः प्रबोधयत्येषः ॥ ८२ ॥
अनवगतकांचनानां भूषणधीरेव भूषणे हैमे ॥
एवमविवेकभाजां जगति जनानां हि तात्त्विकी धिषणा ॥ ८३ ॥

---

८७. अर्थयते=अपेक्षते । ८८. साधयति=मडयति, द्रढयति । ८९. स्फुरति=आभाति । ९०. ब्रह्मातिरेकतः=ब्रह्मसमधिकत्वाद्धेतोः । ९१. करकः=कमंडलुः । ९२. उपाहितं=प्रवर्तितम् । ९३. उदन्या=पिपासा । ९४. विग्रहता=देहत्वम्, । ९५. निगमांतः=वेदांतः । ९६. तात्त्विकी=ब्रह्मसंबंधिनी । ९७. धिषणा=मनीषा, बुद्धिः ।

अहमालंबनसिद्धं कस्य परोक्षं भवेदिदं ब्रह्म ॥
तदपि विचारविहीनैरपरोक्षयितुं न शक्यते मुग्धैः ॥ ८४ ॥
अहमिदमिति च मतिभ्यां सततं व्यवहरति सर्वलोकोऽपि ॥
प्रथमाप्रतीतिचरमा निवसति वपुरिंद्रियादिबाह्येऽर्थे ॥ ८५ ॥
वपुरिंद्रियादिविषया याहं बुद्धिर्भवेदियं भ्रांतिः ॥
तस्मिंस्तद्बुद्धिरिति ह्यध्यासत्वेन शास्यमानत्वात् ॥ ८६ ॥
तस्मादशेषसाक्षी परमात्मैवाहमर्थ इत्युचितम् ॥
अजडवदेव जडोयं सत्संबंधाद्भवत्यहंकारः ॥ ८७ ॥
तस्मात्सर्वशरीरेष्वहमहमित्येव भासते स्पष्टः ॥
यः प्रत्ययो विशुद्धस्तस्य ब्रह्मैव भवति मुख्योऽर्थः ॥ ८८ ॥
गोशब्दार्थो गोत्वं तदपि व्यक्तिः प्रतीयतेऽर्थतया ॥
अहमर्थः परमात्मा तद्वद्भ्रांत्या भवत्यहंकारः ॥ ८९ ॥
दग्धृत्वादिकमयसः पावकसंगेन भासते यद्वत् ॥
तद्वच्चेतनसंगादहमिति प्रतिभांति कर्तृतादीनि ॥ ९० ॥
देहेंद्रियादिदृश्यव्यतिरिक्तं विमलमतुलमद्वैतम् ॥
अहमर्थमितिविदित्वा तव्द्यतिरिक्तं न कल्पयेत्किंचित् ॥ ९१ ॥
किमिदं किमस्य रूपं कथमिदमुदभूदमुष्य को हेतुः
इति न कदापि विचिंत्यं चिंत्यं मायेति धीमता विश्वम् ॥ ९२ ॥
दंतिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव ॥
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोधत्ते ॥ ९३ ॥
यद्वद्दुःखसुखानामवयवभेदादनेकता देहे ॥
तद्वदिहासति भेदेऽप्यनुभववैचित्र्यमात्मनामेषाम् ॥ ९४ ॥
आत्ममये महति पटे विविधजगच्चित्रमात्मना लिखितम् ॥
स्वयमेव केवलमसौ पश्यन् प्रमुदं प्रयाति परमात्मा ॥ ९५ ॥
चिन्मात्रममलमक्षयमद्वयमानंदमनुभवाद्धम् ॥
ब्रह्मैवास्ति तदन्यन्न किमप्यस्तीति निश्चयो विदुषाम् ॥ ९६ ॥
व्यवहारस्य दशेयं विद्याविद्येतिभेदपरिभाषा ॥
नास्त्येव तत्त्वदृष्ट्या तत्त्वं ब्रह्मैव किमपि नास्त्यस्मात् ॥ ९७ ॥

---

९८. अहमालंबनसिद्धम्=अहं इति पदस्य आश्रयेण प्रतिपादितम्. ९९. अध्यासत्वम्=आरोपणत्वम्. १००. शास्यमानत्वात्=अधिकतत्त्वात्. १. सत्संबंधः=अस्तित्वसंबंधः. २. प्रतीयते=प्रत्यक्षीभवति. ३. तिरोधत्ते=विलीयते. ४. चिन्मात्रम्=ज्ञानपरिपूर्णं.

अस्त्यन्यदिति मतं चेत्तदपि ब्रह्मैव तदस्तितारूपम् ॥
अतिरिक्तमस्तिताया नास्तितया शून्यमेव तत्सिद्धम् ॥ ९८ ॥
तत्त्वावबोधशक्त्या स्थिरतरया बाधितापि सा माया ॥
आदेहपातमेषा ह्याभात्यात्मापि निजो विदुषाम् ॥ ९९ ॥
एष विशेषो विदुषां पश्यंतोऽपि प्रपंचसंसारम् ॥
पृथगात्मनो न किंतत्पश्येयुः सकलनिगमनिर्णीतात् ॥ १०० ॥
किं चिंत्यं किमचिंत्यं किं कथनीयं किमप्यकथनीयम् ॥
किं कृत्यं किमकृत्यं निखिलं ब्रह्मेति जानतां विदुषाम् ॥ १०१ ॥
निखिलं दृश्यविशेषं दृग्रूपत्वेन पश्यतां विदुषाम् ॥
बंधो नापि न मुक्तिर्न परात्मत्वं न चापि जीवत्वम् ॥ १०२ ॥
असकृदिति चिंतितानामव्याहततरनिजोपदेशानाम् ॥
प्रामाण्यपरमसीम्नां निगमनमिदमेव निखिलनिगमानाम् ॥ ३ ॥
इत्थं निबोधितः सद्गुरुणा शिष्यः प्रणम्य तत्पदयोः ॥
स्वानुभवसिद्धमर्थं स्वयमेवांतर्विचारयामास ॥ ४ ॥
अजरोऽहमक्षरोऽहं प्रज्ञोहं प्रत्यगात्मबोधोऽहम् ॥
परमानंदमयोऽहं परमशिवोऽहं भवामिपरिपूर्णः ॥ ५ ॥
आद्योऽहमात्मभाजामात्मानंदानुभूतिरसिकोहम् ॥
आबालगोपमखिलैरहमित्यनुभूयमानमहिमाहम् ॥ ६ ॥
इंद्रियसुखविमुखोऽहं निजसुखबोधानुभूतिभरितोऽहम् ॥
इतिमतिदूरतरोऽहं भावेतरसुखासक्तचित्तोऽहम् ॥ ७ ॥
ईशोहमीश्वराणां मिथ्यादोषानुषंगैरहितोहम् ॥
ईक्षणविषयमतीनामीप्सितपुरुषार्थसाधनपरोहम् ॥ ८ ॥
उदयोहमेवजगतामुपनिषदुद्यानकृतविहारोहम् ॥
उद्वेगशोकसागरवडवामुखहव्यवाहनार्चिरहम् ॥ ९ ॥

---

५. अस्तितारूपम्=अस्तित्वरूपम्. ६. अतिरिक्तम्=अतिरिच्य वर्तमान. ७. आदेहपातम्=आमरणं. ८. दृश्यविशेषम्=दृश्यपदार्थविशेषम्. ९. परात्मत्वम्=ब्रह्मत्वम् १०. असकृत=नित्यं. ११. अव्याहततर=अतिशयेन अप्रतिहत. १२. प्रामाण्यपरमसीम्नाम्=शास्त्रमेव श्रेष्ठामर्यादा येषां तेषाम्. १३. निगमनम्=सारः. १४. परमशिवः=परमकल्याणरूपः. १५. आत्मभाक्=आत्मवान्. १६. अनुभूतिः=अनुभवः. १७. रसिकः=रसास्वादी. १८. आबालगोपम=बालवद्गोपवश्चमूढजना. तानारभ्य. १९. भावाः=अस्ति, जायते, वर्धते, अपक्षियति, विपरिणमति नश्यति एते शरीरस्य षड्भावाः. २०. अनुषंग =आरोपः, २१. उद्वेगः=उद्भ्रमः. २२. अर्चिः=ज्वाला.

ऊर्ज[23]स्वलनिजविभवैरूर्ध्वमधस्तिर्यगश्नुवानोहम् ॥
ऊ[24]हापोहविचारै[25]रुररीकृतवत्प्रतीयमानोहम् ॥ १० ॥
ऋषिरहमृषिगणोहं सृष्टिरहं सृज्यमानमहमेव ॥
ऋद्धिरहं वृद्धिरहं तृप्तिरहं दीपदीरहम् ॥ ११ ॥
एकोहमेतदीदृशमेवमिति स्फुरितभेदरहितोहम् ॥
यष्ट[26]व्योहमनी[27]हैरंतःसकृतानुभूतिभरितोहम् ॥ १२ ॥
ऐक्यावभासकोहं वाक्यपरिज्ञानपावनमतीनाम् ॥
ऐशमहमेव तत्त्वनै[28]शतमःप्रायमोहमिहिरोहम्[29] ॥ १३ ॥
[30]ओजोहमौषधीनामोतप्रोती[31]यमानभुवनोहम् ॥
ओंकारसारसोल्ल[32]सदात्मसुखामोद[33]मत्तभृंगोहम् ॥ १४ ॥
औषधमहमशुभानामौपाधिकधर्मजालरहितोहम् ॥
औदार्यातिशयोचितविविध[34]चतुर्वर्गवीक्षणपरोहम् ॥ १५ ॥
अंकुशमहमखिलानामहंतया मत्तवारणेंद्राणाम् ॥
अंबरमिव विमलोहं शंबर[35]रिपुजातविकृतिरहितोहम् ॥ १६ ॥
आत्मविकल्पमतीनामस्खलदुपदेशगम्यमानोहम् ॥
अस्थिरसुखविमुखोहं सुस्थिरसुखबोधसंपदुचितोहम् ॥ १७ ॥
करुणारसभरितोहं कवलितकमलासनादिलोकोहम् ॥
कलुषाहंकृतिलक्षणकल्मषसुकृतोपलेपरहितोहम् ॥ १८ ॥
खा[36]नामगोचरोहं खातीतोहं ख[37]पुष्पभवगोहम् ॥
खलजनदुरा[38]सदोहं खंडज्ञाना[39]पनो[40]दनपरोहम् ॥ १९ ॥
गलितद्वैतकथोऽहं देहोभवदखिलमूलहृदयोऽहम् ॥
गंतव्योहमनीहैर्गत्या गतिरहितपूर्णबोधोहम् ॥ २० ॥
घनतरमोहतमि[41]स्रप्रकरपरिध्वंसभानुनिक[42]रोहम् ॥
घटिकावासररजनी[43]वत्सरयुगक[44]ल्पभेदरहितोऽहम् ॥ २१ ॥

२३. ऊर्जस्वलम्=तेजस्वि. २४. ऊहापोहविचारः=अन्वयव्यतिरेकविवेचनम्. २५. उररीकृतः=अङ्गीकृतः. २६. यष्टव्यः=यज्ञादिभिरर्चितव्यः. २७. अनीहः=निष्कामः. २८. नैशम्=निशासंबंधि. २९. मिहिर=सूर्यः ३०. ओजः=तेजः. ३१. ओतप्रोतायमानभुवनः=उपरिष्टादधस्तात्पश्चात्पुरस्तादत एव सर्वतः विश्वव्याप्यवस्थितः. ३२. उल्लसत्=उत्फुल्लत्. ३३. आमोदः=परिमलः. ३४ चतुर्वर्गः=धर्मार्थकाममोक्षरूप. ३५. शंबररिपुः=मदनः. ३६. खम्=इंद्रियम्, आकाश.. ३७. खपुष्पभवग.=खपुष्पवन्मिथ्याभूतः संसारः त मास:. ३८. दुरासदः=दुष्प्राप्यः. ३९. खंडज्ञानम्=अल्पज्ञानम्. ४०. अपनोदः=निरसनम्. ४१. तमिस्रम्=तमः. ४२. निकरः=समुदायः. ४३. युगम्=कृतत्रेताद्वापारकलयः एतेषु प्रत्येकम्. ४४. कल्प=प्रलयः.

चलदचलदात्मकोऽहं चतुरतरश्लाघ्यसुष्टुचरितोऽहम् ॥
चपलजनदुर्गमोऽहं चपलतरभवजलधिपारद्रष्टाऽहम् ॥ २२ ॥
छंदःसिंधुनिगूढज्ञानसुखाल्हादमोदमानोऽहम् ॥
छल[४५]पदानिहतमतीनामाच्छन्नोऽहं विवेकविधुरा[४६]णाम् ॥ २३ ॥
जल[४७]जासनादिगोचरविविधमहाभूतमूलभूतोऽहम् ॥
जगदानंदमयोऽहं जन्मजरामरणरागरहितोऽहम् ॥ २४ ॥
झंकृति[४८]हुंकृ[४९]तिसिंजि[५०]तबृंहि[५१]तमुखविविधनादभेदोऽहम् ॥
झटि[५२]तिघटितात्मवेददीपपरिस्फुरितहृदयभवनोऽहम् ॥ २५ ॥
ज्ञानमहं ज्ञेयमहं ज्ञाताहं ज्ञानसाधनगणोऽहम् ॥
ज्ञानाज्ञानविनाशकृतमक्षरमास्तिलमात्रमेवाहम् ॥ २६ ॥
सत्त्वातीतपदोऽहं तनुरहमस्मीति भावरहितोऽहम् ॥
तामसदुराधिगमोऽहं तत्त्वंपदबोधबोध्यहृदयोऽहम् ॥ २७ ॥
दैवतदैत्यनिशाचरमानवतिर्यङ्महीधरादिरहम् ॥
देहेंद्रियरहितोऽहं दक्षिणपूर्वादिदिग्विभागरहितोहम् ॥ २८ ॥
धर्माधर्ममयोऽहं धर्माधर्मादिबंधरहितोहम् ॥
धार्मिकजनसुलभोऽहं धन्योऽहं धातुरादिभूतोऽहम् ॥ २९ ॥
नामादिविरहितोऽहं नरकस्वर्गापवर्गरहितोऽहम् ॥
नादांतवेदितोऽहं नानाविधनिखिलवेदसारोऽहम् ॥ ३० ॥
परजीवभेदबाधकपरमार्थज्ञानभरितबोधोऽहम् ॥
प्रकृतिरहं विकृतिरहं परिण[५३]तिरहमस्मि भागधेया[५४]नाम् ॥ ३१ ॥
फणिधरभूधरवारणविग्रहविधृतप्रपंचसारोऽहम् ॥
भालतलोत्थितलोचनपावकपरिधू[५५]तपंचबाणोऽहम् ॥ ३२ ॥
बद्धो भवामि नाहं बंधान्मुक्तस्तथापि नैवाहम् ॥
बोध्यो भवामि नाहं बोधोऽहं नैव बोधको नाहम् ॥ ३३ ॥
भक्तिरहं भक्तोहं मुक्तिरहं वै विमुक्तिरहमेव ॥
भूतानुशासनोऽहं भूतभवद्भव्यमूलभूतोऽहम् ॥ ३४ ॥
मान्योऽहमस्मि महतां मंदमतीनाममाननीयोऽहम् ॥
मदरागमानमोहितमानसदुर्वासनादुरापोऽहम् ॥ ३५ ॥

---

४५. छलपदम्=अप्रसादिदोषः. ४६. विवेकविधुरः=विचारशून्यः. ४७. जलजासन=ब्रह्मा. ४८. झंकृतिः=झंकारः. ४९. हुंकृति=हुंकारः. ५०. सिंजितम्=धनुर्गुणस्य टणत्कारः. ५१. बृंहितम्=करिगर्जितम्. ५२. झटिति=द्रुतम्. ५३. परिणतिः=परिणामः. ५४. भागधेय.=प्रारब्धम्. ५५. परिधूतः=नाशित.

यजनयजमानयाजकयागमयोऽहं यमादिरहितोऽहम् ॥
इंद्रयमवरुणयक्षराक्षसमरुदीशवह्निभूतोऽहम् ॥ ३६ ॥
रक्षाविधानशिक्षादीक्षितलीलावलोकमहिमाहम् ॥
रजनीदिवसविरामस्फुरदनुभूतिप्रमाणसिद्धोऽहम् ॥ ३७ ॥
लक्षणलक्ष्यमयोऽहं लाक्षणिकोऽहं लयादिरहितोऽहम् ॥
लाभालाभमयोऽहं लब्धव्यानामलक्ष्यमाणोऽहम् ॥ ३८ ॥
वर्णाश्रमरहितोऽहं वर्णमयोऽहं वरेण्यैगण्योऽहम् ॥
वाचामगोचरोऽहं वाचामर्थे परे निविष्टोऽहम् ३९ ॥
शमदमविरहितमनसां शास्त्रशतैरप्यगम्यमानोऽहम् ॥
शैरणमहमेव विदुषां शकलीकृतविविधविषयजालोऽहम् ॥ ४० ॥
षड्भावविरहितोऽहं षड्गुणरहितोऽहमाहितरहितोऽहम् ॥
षट्कोशविरहितोऽहं †षट्त्रिंशतत्वजालरहितोऽहम् ॥ ४१ ॥
सच्चित्सुखात्मकोऽहं समाधिसंकल्पकल्पवृक्षोऽहम् ॥
संसारविरहितोहं साक्षात्कारोऽहमात्मविद्यायाः ॥ ४२ ॥
हव्यमहं कव्यमहं हेयोपादेयभावशून्योऽहम् ॥
हरिरहमस्मि हरोऽहं विधिरहमेवास्मि कारणं तेषाम् ॥ ४३ ॥
क्षालितकलुषभयोऽहं क्षपितभवक्लेशजालहृदयोऽहम् ॥
क्षांत्याद्यक्षरसहितं विविधव्यवहारमूलमहमेव ॥ ४४ ॥
बहुभिः किमेभिरुक्तैरहमेवेदं चराचरं विश्वम् ॥
सीकरफेनतरंगाः सिंधोरपराणि न खलु वस्तूनि ॥ ४५ ॥
शरणं नहि मम जननी न पिता न सुता न सोदराश्चान्ये ॥
परमं शरणमिदं मे चरणं मे शिरसि दैशिकन्यस्तम् ॥ ४६ ॥
आस्ते दैशिकचरणं निरवधिरास्ते तदीक्षया करुणा ॥
आस्ते किमपि तदुक्तं किमतः परमखिलजन्मसाफल्यम् ॥ ४७ ॥
कारुण्यसारसांद्राः कांक्षितफलदानकल्पकविशेषाः ॥
श्रीगुरुकटाक्षपाताः शिशिराः शमयंतु चित्तसंतापम् ॥ ४८ ॥

---

५६. वरेण्यः=प्रवरः, श्रेष्ठः ५७. शरणम्=रक्षकम्. ५८. षड्भावाः=११ टीप पहा.
* षट्कोशाः=षड्धातवः. † षट्त्रिंशत्तत्वानि=पंचमहाभूतानि (५) अहंकारः (१), बुद्धिः (१), मनः (१), अव्यक्तम् (१), दशेंद्रियाणि (१०), पंचविषयाः (५), इच्छा (१), द्वेषः (१) सुखम् (१) दुःखम् (१), संघातः (१), चेतना (१), धृतिः (१), त्रिगुणाः (३), जीवः (१) ईश्वरः (१). इति एतानि षट्त्रिंशत् (३६)
५९. हव्यम्=हवनीयद्रव्यम्. ६०. कव्यम्=पितृभ्योदीयमानं द्रव्यम्. ६१. सीकरः=शीतः.

मयि सुखबोधपयोधौ महतिब्रह्मांडबुद्बुदसहस्रं ॥
माया विशेषमस्ता भूत्वा भूत्वा सदा निरोधत्ते ॥ ४९ ॥
क्वलितचंचलचेतोगुरुतरमंडूकजातपरितोषा ॥
शेते हृदयगुहायां चिरतरमेकैव चिन्मयी भुजगी ॥ ५० ॥
गुरुकरुणयैव नावा प्राक्तनभाग्यानुकूलमारुतया ॥
दुःसहदुःखतरंगोत्तुंगः संसारसागरस्तीर्णः ॥ ५१ ॥
सति तमसि मोहरूपे विभ्रमपश्यं सदेतदित्यखिलम् ॥
उदितवति बोधभानौ किमपि न पश्यामि किं त्विदं चित्रम् ॥ ५२ ॥
नाहं नमामि देवान्देवा एतेऽनुशेरते दैवम् ॥
तदनुकरोति विधानं तदपि मदीयं ततो नमो मह्यम् ॥ ५३ ॥
इत्यात्मबोधलाभे मुहुर्मुहुरनुचिंत्य मोदमानेन ॥
प्रारब्धकर्मणोऽन्ते तेन परं प्राप्यते स्म कैवल्यम् ॥ ५४ ॥
मोहांधकारहरणं संसारोद्वेलसागरोत्तरणम् ॥
स्वात्मनिरूपणमेतत्प्रकरणवरमस्तु दक्षिणामूर्तिः ॥ ५५ ॥
आज्ञानांध्यविहंताविरचितविज्ञानपंकजोल्लासः ॥
मानसगगनतलं मे भासयति श्रीनिवासगुरुभानुः ॥ ५६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं स्वात्मानंदप्रकाश-
कार्याख्यप्रकरणं समाप्तम् ॥

---

## ॥ अथ सोपानपंचकम् ॥

वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ॥
पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥
संगः सत्सु विधीयतां भगवतो भक्तिर्दृढाधीयताम्
शांत्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ॥
सद्विद्वानुपसृप्यतामनुदिनं तत्पादुका सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥
वाक्यार्थश्च विचार्यतां श्रुतिशिरः पक्षः समाश्रीयताम्
दुस्तर्कात्सुविरम्यतां श्रुतितिशिरस्तर्कोऽनुसंधीयताम् ॥
ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यताम्

---

६२. बुद्बुद = 'बुडबुडा' इति म० भा० १. अपचितिः=पूजा.

देहेऽहमतिरुज्झतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥
क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यताम्
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् ॥
औदासिन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम्
शीतोष्णादि विषह्यतां न तु वृथावाक्यं समुच्चार्यताम् ॥ ४ ॥
एकांते सुखमास्यतां परनरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं संबाधितं दृश्यताम् ॥
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यताम्
प्रारब्धं त्विह भुज्यतामथ परं ब्रह्मात्मना स्थीयताम् ॥ ५ ॥
यः श्लोकपंचकमिदं पठते मनुष्यः संचिंतयत्यनुदिनं स्थिरतामुपेत्य ॥
तस्याशु संसृतिदवानलतीव्रतापो नित्यं सुखं प्रति गमिष्यति चित्प्रसादात् ॥ ६ ॥
इति श्रीमच्छंकराचार्यविरचितं सोपानपंचकं स्तोत्रं संपूर्णम् ॥

---

## ॥ अथ प्रश्नोत्तररत्नमाला ॥

प्रणिपत्य महादेवं प्रश्नोत्तररत्नपद्धतिं वक्ष्ये ।
नागनरामरवन्द्यं सर्वज्ञं मोक्षदं शान्तम् ॥ १ ॥
कः खलु नालङ्क्रियते दृष्टादृष्टार्थसाधनपटीयान् ।
अमुया कण्ठस्थितया विमलप्रश्नोत्तरमालिकया ॥ २ ॥
भगवन् किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम् ।
को गुरुरधिगततत्त्वः सत्त्वहितायोद्यतः सततम् ॥ ३ ॥
त्वरितं किं कर्तव्यं विदुषा संसारसन्ततिच्छेदः ।
किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासहितम् ॥ ४ ॥
कः पथ्यो धर्मः कः शुचिरिह यस्य मानसं शुद्धम् ।
कः पण्डितो विवेकी किं विषमवधीरणा गुरुषु ॥ ५ ॥
संसारे किं सारं बहुशोऽपि विचिन्त्यमानमिदमेव ।
किं मनुजेष्विष्टतमं स्वपरहितायोद्यतं जन्म ॥ ६ ॥
मदिरेव मोहजनकः कः स्नेहः के च दस्यवो विषयाः ।
का भववल्ली तृष्णा को वैरी यस्त्वनुद्योगः ॥ ७ ॥
कस्माद्भयमिह मरणादन्धादपि को विशिष्यते रागी ।
कः शूरो यो ललनालोचनबाणैर्न च व्यथितः ॥ ८ ॥

---

१. उज्झता=त्यज्यताम्  ३. परनरे=परमात्मनि.  ४ सोपान.='जिना' इति महाराष्ट्रभाषाया. ५. पाथेय="शिदोरी" इति महाराष्ट्रभाषाया. ६. मदिरा=मद्य.

पातुं कर्णाञ्जलिभिः किममृतमिव युज्यते सदुपदेशः ।
किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥ ९ ॥
किं गहनं स्त्रीचरितं कश्चतुरो यो न खण्डितस्तेन ।
किं दारिद्र्यमसन्तोषः किं च लाघवं याञ्चा ॥ १० ॥
किं जीवितमनवद्यं किं जाड्यं पाठेऽप्यनभ्यासः ।
को जागर्ति विवेकी का निद्रा मूढता जन्तोः ॥ ११ ॥
नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः ।
के शशधरनिकरानुकारिणः सज्जना एव ॥ १२ ॥
को नरकः परवशता किं सौख्यं सर्वसङ्गविरतिर्या ।
किं सत्यं भूतहितं किं प्रियं प्राणिनामसवः ॥ १३ ॥
किं दानमनाकांक्षं किं मित्रं यन्निवर्तयति पापात् ।
कोऽलङ्कारः शीलं किं वाचां मण्डनं सत्यम् ॥ १४ ॥
किमनर्थफलमसज्जनसङ्गतिः का सुखदा साधुजनमैत्री ।
सर्वव्यसनविनाशे को दक्षः सर्वथा परित्यागी ॥ १५ ॥
कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति न हितानि ।
को मूको यः काले प्रियाणि वक्तुं न जानाति ॥ १६ ॥
किं मरणं मूर्खत्वं किं चानर्घ्यं यदनवसरे दत्तम् ।
आमरणात्किं शल्यं प्रच्छन्नं यत्कृतं पापम् ॥ १७ ॥
कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने ।
अवधीरणा क्व कार्या खलपरयोषित्परस्वेषु ॥ १८ ॥
किमहर्निशमनुचिन्त्यं संसारासारता न तु प्रमदा ।
का प्रेयसी विधेया करुणादाक्षिण्यसज्जने मैत्री ॥ १९ ॥
कण्ठगतैरप्यसुभिः कस्यात्मा नो समर्प्यते जातु ।
*मूर्खस्य विषादस्य च गर्वस्य तथा कृतघ्नस्य ॥ २० ॥*
कः पूज्यः सद्वृत्तः किमधमं चक्षते असद्वृत्तम् ।
केन जितं जगदेतत्सत्यतितिक्षावता पुंसा ॥ २१ ॥
कस्मै नमः सुरैरपि क्रियते सुतरां दयाप्रधानाय ।
कस्मादुद्विजितव्यं संसारारण्यतः सुधिया ॥ २२ ॥
कस्य वशः प्राणिगणः सत्यप्रियभाषिणो विनीतस्य ।
क्व स्थातव्यं न्याय्ये पथि दृष्टादृष्टार्थलाभाय ॥ २३ ॥

७. अनवद्यं=अनिंद्यं. ८. तरलं=चंचलं. ९. शशधरकरनिकरः=चन्द्रकिरणसमूहः. [illegible]=प्रथमं. १२. जातु=कदाचित्.

विद्युद्विलसितचपलं किं दुर्जनसङ्गतिर्युवतयश्च ।
कुलशीलनिष्प्रकम्पाः के कलिकालेऽपि सत्पुरुषाः ॥ २४ ॥
किं शोच्यं कार्पण्यं सति विभवे किं प्रशस्तमौदार्यम् ।
कुत्र विधेयो वासः सज्जननिकटेऽथवा काश्याम् ॥ २५ ॥
चिन्तामणिरिव दुर्लभमिह किं कथयामि ते चतुर्भद्रम् ।
किं तद्वदंति भूयो विधूतमनसो विशेषेण ॥ २६ ॥
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्विधं भद्रम् ॥ २७ ॥
॥ इति श्रीमच्छङ्कराचार्यविरचिता प्रश्नोत्तररत्नमालिका समाप्ता ॥

---

## ॥ अथ निर्वाणदशकम् ॥

न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः ॥
अनेकान्तिकत्वात्सुषुप्त्येकसिद्धस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥
न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणा ध्यानयोगादयोऽपि ॥
अनात्माश्रयोऽहं ममाध्यासहानात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥
न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवंति ॥
सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥
न सांख्यं न शैवं न तत्पांचरात्रं न जैनं न मीमांसकादेर्मतं वा ॥
विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥
न चोर्ध्वं न चाधो न चांतर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वाऽपरादिक् ॥
वियद्व्यापकत्वादखंडैकरूपस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥
न शुक्लं न कृष्णं न रक्तं न पीतं न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ॥
अरूपं तथा ज्योतिराकारकत्वात्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥
न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं प्रपंचः ॥
स्वरूपावबोधो विकल्पासहिष्णुस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥
न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा ॥
अविद्यात्मकत्वात्त्रयाणां तुरीयस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८ ॥
अपि व्यापकत्वाद्धि तत्त्वप्रयोगात्स्वतः सिद्धभावादनन्याश्रयत्वात् ॥

---

१३. भद्र=कल्याण. १४. शिव=परमेश्वरः १५. वर्णा=रागाः ब्राह्मणादयो वा. १६. पांचरात्र=वैष्णवतन्त्रविशेष. १७. वियद्=आकाश. १८. शिक्षा=शिक्षण. १९. तुरीय=चतुर्थ.

जगतुच्छमेतत्समस्तं तदन्यत्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥
न चैकं तदन्यद्द्वितीयं कुतः स्यान्न वा केवलत्वं न चाकेवलत्वम् ॥
न शून्यं न चाशून्यमद्वैतकत्वात्कथं सर्ववेदांतसिद्धं ब्रवीमि ॥ १० ॥
॥ इति निर्वाणदशकं संपूर्णम् ॥

## ॥ अथ हस्तामलकः ॥

कस्त्वं शिशो कस्य कुतोऽसि गंता । किं नाम ते त्वं कुत आगतोऽसि ॥
एतन्मयोक्तं वद चार्भक त्वं । मत्प्रीतये प्रीतिविवर्धनोऽसि ॥ १ ॥
नाहं मनुष्यो न च देवयक्षो । न ब्राह्मणक्षत्रियवैश्यशूद्रः ॥
न ब्रह्मचारी न गृही वनस्थो । भिक्षुर्न चाहं निजबोधरूपः ॥ २ ॥
निमित्तं मनश्चक्षुरादिप्रवृत्तौ । निरस्ताखिलोपाधिराकाशकल्पः ॥
रविर्लोकचेष्टानिमित्तं यथा यः । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥
यमग्न्युष्णवन्नित्यबोधस्वरूपं । मनश्चक्षुरादीन्यबोधात्मकानि ॥
प्रवर्तंत आश्रित्य निष्कंपमेकं । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ४ ॥
मुखाभासको दर्पणे दृश्यमानो । मुखत्वात्पृथक्त्वेन नैवास्ति वस्तु ॥
चिदाभासको धीषु जीवोऽपि तद्वत्स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ५ ॥
यथा दर्पणाभाव आभासहानौ । मुखं विद्यते कल्पना हीनमेकम् ॥
तथा धीवियोगे [?] निराभासको यः । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ६ ॥
मनश्चक्षुरादेर्वियुक्तः स्वयं यो । मनश्चक्षुरादेर्मनश्चक्षुरादिः ॥
मनश्चक्षुरादेरगम्यस्वरूपः । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ७ ॥
य एको विभाति स्वतः शुद्धचेताः । प्रकाशस्वरूपोऽपि वा नैव धीषु ॥
शरावोदकस्थो यथा भानुरेकः । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ८ ॥
यथाऽनेकचक्षुः प्रकाशो रविर्न । क्रमेण प्रकाशीकरोति प्रकाश्यम् ।
अनेकाधियो यस्तथैकप्रबोधः । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ९ ॥
विवस्वत्प्रभातं यथा रूपमक्षं । प्रगृह्णाति नाभातमेवं विवस्वान् ॥
तथा भास आभासयत्यक्षमेकं । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १० ॥
यथा सूर्य एकोप्यनेकश्चलासु । स्थिरास्वप्यनन्वग्विभाव्यस्वरूपः ॥
चलासु प्रभिन्नासु धीष्वेक एवं । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११ ॥
घनच्छन्नदृष्टिर्घनच्छन्नमर्कं । यथा मन्यते निष्प्रभं चातिमूढः ॥
तथा बद्धवद्भाति यो मूढदृष्टेः । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२ ॥

---

१०. दर्पणः=आदर्शः. ११. शरावः="पाळ" इतिमहाराष्ट्रभाषायां. १२. विवस्वान्=सूर्यः.

समस्तेषु वैस्तुष्वनुस्यूतमेकं । समस्तानि वस्तूनि यन्न स्पृशंति ॥
वियद्वत्सदा शुद्धमच्छस्वरूपं । स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १३ ॥
उपाधौ यथा भेदता सन्मणीनां । तथा भेदता बुद्धिभेदेषु तेऽपि ॥
यथा चंद्रकाणां जले चंचलत्वं । तथा चंचलत्वं तवापीह विष्णो ॥ १४ ॥

॥ समाप्तः ॥

---

## ॥ अथ उपदेशपंचकम् ॥

नाहं देहो नेंद्रियाण्यंतरंगो नाहंकारः प्राणवर्गो न बुद्धिः ॥
दारापत्यक्षेत्रवित्तादिदूरः साक्षीनित्यः प्रत्यगात्मा शिवोऽहम् ॥ १ ॥
रज्ज्वज्ञानाद्भाति रज्जुर्यथाहिः स्वात्माज्ञानादात्मनो जीवभावः ॥
आप्तोक्त्या हि भ्रांतिनाशे स रज्जुर्जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥ २ ॥
मत्तो नान्यत्किंचिदत्रास्ति विश्वं सत्यं बाह्यं वस्तु मायोपक्लृप्तम् ॥
आदर्शान्तर्भासमानास्यतुल्यं मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥ ३ ॥
आभातीदं विश्वमाभन्यसत्यं सत्यज्ञानानंदरूपे विमोहात् ॥
निद्रामोहात्स्वप्नवत्तन्न सत्यं शुद्धः पूर्णो नित्य एकः शिवोऽहम् ॥ ४ ॥
नाहं जातो न प्रवृद्धो न नष्टो देहस्योक्ताः प्राकृताः सर्वधर्माः ॥
कर्तृत्वादिश्चिन्मयस्यास्त्यनित्यो नाहंकारश्चात्मनो मे शिवोऽहम् ॥ ५ ॥
नाहं जातो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासा कुतो मे ॥
नाहं चित्तं शोकमोहौ कुतो मे नाहं कर्ता बंधमोक्षौ कुतो मे ॥ ६ ॥

॥ इत्याचार्यविरचितमुपदेशपंचकं समाप्तम् ॥

---

## ॥ अथ स्वरूपानुसंधानस्तोत्रम् ॥

तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तोऽग्रजादेः पदे तुच्छबुद्ध्या ॥
परित्यज्य सर्वं यदाप्नोति तत्त्वं परंब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥
दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य भक्त्या विचार्य स्वरूपम् ॥
यदाप्नोति मत्वा निदिध्यास्य विद्वान्परंब्रह्म नित्यं तदेवाहमस्मि ॥ २ ॥
यदानंदरूपं प्रकाशस्वरूपं निरस्तप्रपंचं परिच्छेदशून्यम् ॥

---

२३. अनुस्यूतम्=" ओंवलेला " इति महाराष्ट्र भाषायां. २४. प्रत्यगात्मा=सर्वसाक्षी आत्मा. २५. आप्त.=वेदः. २६. देशिकः=गुरु. * शिव.=कल्याणरूपः २७. उपक्लृप्तम्=कल्पितम्. २८. विमोहः=भ्रांतिः. २९. प्राकृतः=अज्ञः, मायाविरचितः. ३०. धर्मः=विकारः. ३१. चिन्मयम्=ज्ञानपूर्णम्. ३२. अग्रजः=ब्रह्मा. ३३. निदिध्यास्य–नित्यध्यात्वा. ३४. परिच्छेद.=मानम्.

अहंवृत्तिगम्यं तुरीय[15]स्वरूपं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ३ ॥
यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधात् ॥
मनोवागतीतं[16] विशुद्धं विमुक्तं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ४ ॥
निषेधे कृते 'नेतिनेती'ति वाक्यैः समाधिस्थितानां यदाभाति पूर्णम् ॥
अवस्थात्रया[17]तीतमद्वैतमेकं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ५ ॥
यदानंदलेशैः सदानंदविश्वं यदाभातमेतत्सदा भाति विश्वम् ॥
यदालोकने चायमन्यत्समस्तं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ६ ॥
अनंतं विभुं सर्वयोनि[18] निरीहं[19] शिवं संगहीनं यदोंकारगम्यम् ॥
निराकारमूर्तिं त्वलं जन्ममृत्युं परंब्रह्म नित्यं तदेवाहमस्ति ॥ ७ ॥
यदानंदसिंधौ निमग्नः पुमान्स्यादविद्याविलास[20]: समस्तः प्रपञ्चः ॥
यदा न स्फुरत्यद्भुतं यन्निमित्तं परंब्रह्म नित्यं तदेवाहमस्मि ॥ ८ ॥
स्वरूपानुसंधान[21]रूपां स्तुतिं यः पठेदादराद्भक्तिभावैर्मनुष्यः ॥
शृणोतीह नित्यं समासक्तचित्तो भवेद्ब्रह्मरूपो हि वेदः प्रमाणम् ॥ ९ ॥
॥ इति स्वरूपानुसंधानस्तोत्रं संपूर्णम् ॥

---

## ॥ अथ मनीषा[22]पंचकम् ॥

कदाचिच्छंकराचार्यः काशीं प्रति पुरं ययौ ॥
तस्य ज्ञानपरिक्षार्थं कश्चिद्देवः समागतः ॥ १ ॥
चांडालरूपिणं दृष्ट्वा गच्छगच्छेति चाब्रवीत् ॥
अथोक्तवंतमाचार्यं स एव पुनरब्रवीत् ॥ २ ॥
अन्नमयादन्नमयं अथवा चैतन्य[23]मेव चैतन्यात् ॥
यतिवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छगच्छेति ॥ ३ ॥
किं गंगाम्बुनि बिंबिते द्युमणौ[24] चांडालवाटीपयः
पूरे वांतरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाम्बरे ॥
प्रत्यग्वस्तुनि[25] निस्तरंगसहजानंदावबोधाम्बुधौ
विप्रोऽयं श्वपचो[26]ऽयमित्यपि महान्कोऽयं विभेदभ्रमः ॥ ४ ॥
॥ शंकराचार्य उवाच ॥
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या सं*विदुज्जृम्भते[27]

---

१५. तुरीयम्=चतुर्थम्. १६. अतीतम्=अनधिगम्यम्. १७. अवस्थात्रयम्=जाग्रत्स्वप्नसुषुप्तिरूपम्. १८ सर्वयोनि.=सर्वप्रभव. १९. निरीहम्=निरिच्छम् २० विलास=चेष्टा. २१. अनुसंधानम्=मार्गणम् २२ मनीषा=बुद्धि. २३. चैतन्यम्=चेतना. २४. द्युमणि=सूर्य. २५. प्रत्यग्वस्तु=ब्रह्म २६. श्वपच=चांडाल. २७ उज्जृम्भते=विकसति
* संवित्=ज्ञानम्.

या ब्रह्मादिपिपीलिकांततनुषु प्रोक्ता जगत्साक्षिणी ॥
सैवाहं न च दृश्यवस्त्विति दृढा प्रज्ञापि यस्यास्ति चे-
च्चांडालोस्तु स तु द्विजोस्तु गुरुरित्येषा मनीषा मम ॥ १ ॥
ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितम्
सर्वं चैतदविद्यया त्रिगुणया सेशं मयाकल्पितम् ॥
इत्थं यस्य दृढा मतिः स्थिरतरे नित्ये परे निर्मले
चांडालोस्तु स तु द्विजोस्तु गुरुरित्येषा मनीषा मम ॥ २ ॥
शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरोर्
नित्यं ब्रह्म निरंतरं विमृशता निर्व्याजशांतात्मना ॥
भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ३ ॥
यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता ॥
यच्चित्ते नितरां प्रबोधकलने लब्धा मुनिर्निर्वृतः ॥
तस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्-
यः कश्चित्स सुरेन्द्रवंदितपदो नूनं मनीषा मम ॥ ४ ॥
या तिर्यङ्नरदेवताभिरहमित्यंतः स्फुटा गृह्यते ॥
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतो चेतनाः ॥
तां भास्यैः पिहितार्कमंडलनिभां स्फूर्तिं सदा भावयन् ॥
योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ५ ॥
॥ इत्याचार्यविरचितं मनीषापंचकं समाप्तम् ॥

## ॥ अथ निर्वाणषट्कम् ॥

मनोबुद्ध्यहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे ॥
न च व्योम भूमिर्न तेजो न वायुश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥
न च प्राणसंज्ञो न वै पंचवायुर्न वा सप्तधातुर्न वा पंचकोशः ॥
न वाक्पाणिपादौ न चोपस्थपायू श्चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ २ ॥

---

४८. त्रिगुणा=सत्त्वरजस्तमोरूपा. ४९. विमृशता=विचिन्वता. ५०. निर्व्याजशांतात्मना=निष्प्रपञ्चेन प्रशांतः आत्मा यस्य सः. ५१. संविन्मये=ज्ञानमये. ५२. प्रबोधकलनम्=प्रबोधजनकम्. ५३. तिर्यङ्नरदेवताभिः=पशुपक्षि मनुष्य देवताः इत्येताभिः. ५४. निर्वाणम्=मोक्षः. ५५. पंचवायवः=प्राणः, अपानः, समानः, उदानः, व्यानः, एते पंच. ५६. सप्तधातवः=रसः, रक्तं, मेदः मांसः, अस्थि, मज्जा, शुक्रं, एते सप्त. ५७. पंचकोशाः=अन्नप्राणमनोमयविज्ञानानन्दाः पंचकोशाः. ५८. उपस्थम्=स्त्रीजातेः पुरुषजातेर्वा इंद्रियम्. § पायुः=गुदम

न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः ॥
न धर्मो न चार्थो न कामो न मोक्षश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ ३ ॥
न पुण्यं न पापं न सौख्यं न दुःखं न मंत्रो न तीर्थं न मे दानयज्ञाः ॥
अहं भोजनं नैव भोज्यं न भोक्ता चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ ४ ॥
न मृत्युर्न शंका न मे जातिभेदाः पिता नैव मे नैव माता च जन्म ॥
न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ ५ ॥
अहं निर्विकल्पो निराकाररूपी विभुत्वाच्चसर्वत्र सर्वेन्द्रियाणाम् ॥
न चासंगतं नैव मुक्तिर्न चोक्तिश्चिदानंदरूपः शिवोऽहं शिवोऽहम् ॥ ६ ॥
॥ श्रीमदाचार्यविरचितं निर्वाणषट्कं संपूर्णम् ॥

## ॥ अथ यतिपंचकस्तोत्रम् ॥

वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः ॥
अशोकवंतः करुणैकवन्तः कौपीनवंतः खलु भाग्यवन्तः ॥ १ ॥
मूलं तरोः केवलमाश्रयन्तः पाणिद्वये भोक्तुमम‍ंत्रयंतः ॥
कन्यामिव श्रीमपि कुत्सयंतः कौपीनवंतः खलु भाग्यवन्तः ॥ २ ॥
स्वानंदभावे परितुष्टिमन्तः स्वशांतसर्वेन्द्रियवृत्तिमन्तः ॥
अहर्निशं ब्रह्मणि ये रमंत. कौपीनवंतः खलु भाग्यवन्तः ॥ ३ ॥
देहादिभावं परिहृत्य दूरादात्मानमात्मन्यवलोकयंतः ॥
नांतं न मध्यं न बहिः स्मरतः कौपिनवंतः खलु भाग्यवंतः ॥ ४ ॥
पंचाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः ॥
भिक्षाशिनो दिक्षु परिभ्रमन्तः कौपीनवतः खलु भाग्यवन्तः ॥ ५ ॥
॥ इति श्रीमच्छंकराचार्यविरचितं यतिपञ्चकस्तोत्रं समाप्तम् ॥

## ॥ अथ जीवब्रह्मैकत्वं स्तोत्रम् ॥

नत्वाचार्यात्मानं श्रीशं मत्वा जीवब्रह्मैकत्वम् ॥
दृष्ट्वाप्यद्वैतं स्वाराज्ये तद्ब्रह्माहं मोहातीतम् ॥ १ ॥
यत्र स्फारं नादिभ्रान्त्या विश्वं नानारूपं भाति ॥
सिन्धौ यद्वत्फेनोत्पादे तद्ब्रह्माहं मोहातीतम् ॥ २ ॥
शुक्तौ रौप्यं रज्जौ सर्पश्चन्द्रे द्वित्वं धन्वन्यम्बु ॥
तद्वद्दृश्यं यत्रानन्ते तद्ब्रह्माहं मोहातीतम् ॥ ३ ॥

५९. कौपीन=लंगोटी इति म० भा०. ६०. कुत्सयन्=निंदयन ६१. पंचाक्षर= "नमःशिवाय" इति पंचाक्षर मंत्र. ६२. धन्वन्=निर्जल. देश.

विस्मृत्यात्मानं यो बद्धो बुध्वैवं स्वं सद्यो मुक्तः ॥
बन्धो मुक्तिर्नैवानन्ते तद्ब्रह्माहं मोहातीतम् ॥ ४ ॥
स्वप्नप्रायं स्मृत्वा सृष्ट्वा पश्यन्विश्वं क्रीडत्येकः ॥
योऽयं स्फूर्त्यानन्दस्तत्त्वत्तद्ब्रह्माहं मोहातीतम् ॥ ५ ॥
चन्द्रो यद्वत्तोयागारेष्वेकोऽनेको भाति भ्रान्त्या ॥
बुद्धिष्वात्मा स्फूर्त्या सङ्गस्तद्ब्रह्माहं मोहातीतम् ॥ ६ ॥
सन्तप्तायःपिण्डे वह्नि वह्निर्धर्माः प्रादुःष्यंति ॥
बुद्ध्या स्वात्मन्येवं जीवस्तद्ब्रह्माहं मोहातीतम् ॥ ७ ॥
ईशोऽभूयो मायोपाधिर्जीवो जातश्चित्तोपाधिः ॥
त्यक्तोपाधिर्जीवन्मुक्तस्तद्ब्रह्माहं मोहातीतम् ॥ ८ ॥
जन्मस्थानं नाशो यस्मान्मायायुक्ताद्विश्वस्यास्य ॥
सत्यज्ञानानन्तानन्दस्तद्ब्रह्माहं मोहातीतम् ॥ ९ ॥
अध्यारोप्यात्मन्यद्वैते 'विश्वंनेति' श्रुत्यापास्ते ॥
निःसङ्गत्वं यत्र ज्ञेयं तद्ब्रह्माहं मोहातीतम् ॥ १० ॥
जीवेऽल्पज्ञत्वादीन्त्यक्त्वा धर्मानीशे चेशत्वादीन् ॥
सोहं जीवस्तद्वैक्यं तद्ब्रह्माहं मोहातीतम् ॥ ११ ॥
गुर्वादिष्टस्तत्वं ब्रह्म ह्याशु ज्ञात्वाहं ब्रह्मेति ॥
निश्चित्यास्ते जीवन्मुक्तस्तद्ब्रह्माहं मोहातीतम् ॥ १२ ॥
नित्यः शुद्धो निर्व्यापारः साक्षी वेत्ता मुक्तोनन्तः ॥
अन्तर्यामी यः सर्वेशस्तद्ब्रह्माहं मोहातीतम् ॥ १३ ॥
नित्यानित्यज्ञानादीनामात्मावाप्तौ यो हेतूनाम् ॥
सङ्ख्याचार्योक्त्या मुक्तस्तद्ब्रह्माहं मोहातीतम् ॥ १४ ॥
प्रेयस्त्वं यत्संबद्धानां प्रायो जायापत्यादीनाम् ॥
योनिस्तेषां प्रेमाम्भोधिस्तद्ब्रह्माहं मोहातीतम् ॥ १५ ॥
यत्राखण्डे ज्ञानादर्शे नानारूपा भावा भान्ति ॥
सिन्धौ यद्वत्तीरे वृक्षस्तद्ब्रह्माहं मोहातीतम् ॥ १६ ॥
एधो यद्वद्वह्निक्षिप्तं तद्रूपं स्वं त्यक्त्वा रूपम् ॥
बुध्वैवं चिद्रूपं जीवस्तद्ब्रह्माहं मोहातीतम् ॥ १७ ॥
चिद्रूपं यस्यापाकर्तुं नष्टे मायालक्ष्मेन्दौ ॥
याति घोरं यत्राधस्तात्तद्ब्रह्माहं मोहातीतम् ॥ १८ ॥
श्रुत्वा मत्वा ध्यात्वात्मानं हंसः सोऽहं ब्रह्मास्मीति ॥

११. मायोपाधिः=माया एव यस्य व्यापारः सः १४. अपाकर्तु=दूरीकर्तुं

श्रद्धालुर्यं पश्येदीशं तद्ब्रह्माहं मोहातीतम् ॥ १९ ॥
दग्ध्वा दार्ढ्यं यद्बुद्धीद्धैतापायाग्निर्व्यापारः ॥
भाति प्रत्यग्ब्रह्मैक्यात्मा तद्ब्रह्माहं मोहातीतम् ॥ २० ॥
नित्यं विशल्यार्याख्यातिर्विद्युन्मालावृत्तैः स्तुत्वा ॥
निःसन्देहं पश्येदीशं तद्ब्रह्माहं मोहातीतम् ॥ २१ ॥
जीवब्रह्मैकत्वाख्याते अन्ये चित्तं यः संधत्ते ॥
त्यक्त्वा मोहं वीतक्लेशः संप्राप्नोति ब्रह्मैकत्वम् ॥
॥ इति श्रीमच्छंकराचार्यविरचितं जीवब्रह्मैकत्वं स्तोत्रं संपूर्णम् ॥

## ॥ अथ द्वादशपंजरिकास्तोत्रम् ॥

मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् ।
यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ १ ॥
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ॥
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता रीतिः ॥ २ ॥
का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः ॥
कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय तदिदं भ्रातः ॥ ३ ॥
मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् ॥
मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा ॥ ४ ॥
कामं क्रोधं मोहं लोभं त्यक्त्वात्मानं भावय कोऽहम् ॥
आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥ ५ ॥
शीतलपादपमूलनिवासाः शय्याभूतलमजिनं वासाः ॥
सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ ६ ॥
शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसन्धौ ॥
भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥ ७ ॥
त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि सर्वसहिष्णुः ॥
सर्वस्मिन्नपि परमात्मानं सर्वत्रोत्सृज भेदज्ञानम् ॥ ८ ॥
प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम् ॥
जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानम् ॥ ९ ॥
नलिनीदलगतजलवत्तरलं तद्वज्जीवितमतिशयचपलम् ॥
विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम् ॥ १० ॥
का ते अष्टादेशे चिन्ता वातुल तव किं नास्ति नियन्ता ॥

१५. प्रत्याहारः=इंद्रियनिग्रहः. १६. अवधानम्=एकाग्रचित्तम्. १७. वातुलः=मूर्खः.

यस्त्वां हरते इवमपि बला बोधयते प्रभवादि विरुद्धं ॥ ११ ॥
गुरुचरणांबुजनिर्भरभक्तः संसारादचिराद्भव भयमुक्तः ।
सेंद्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥ १२ ॥
द्वादशपंजरिकामय एषः शिष्याणां कथितो ह्युपदेशः ॥
येषां चित्ते नैव विवेकस्ते पच्यंते नरकमनेकम् ॥ १३ ॥
इति श्रीमच्छंकराचार्यविरचितं द्वादशपंजरिकास्तोत्रं संपूर्णम् ॥

## अच्युताष्टकम्—स्रग्विणीवृत्तं.

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ॥
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे ॥ १ ॥
अच्युतं केशवं सत्यभामाधरं माधवं श्रीधरं राधिकाराधनम् ॥
इंदिरामंदिरं चेतसःसुंदरं देवकीनंदनं नंदजं संदधे ॥ २ ॥
विष्णवे जिष्णवे शंखिने चक्रिणे रुक्मिणीरागिणे जानकीजानये ॥
वल्लवीवल्लभायार्चितात्मने कंसविध्वंसिने वंशिने ते नमः ॥ ३ ॥
कृष्ण गोविंद हे राम नारायण श्रीपते वासुदेवार्चित श्रीनिधे ॥
अच्युतानंत हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥
राक्षसक्षोभितः सीतया शोभितो दंडकारण्यभूपुण्यताकारणम् ॥
लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्तिना पूजितो राघवः पातु माम् ॥ ५॥
धेनुकारिष्टकानिष्टकृद् द्वेषिणां केशिहा कंसहृद्वंशिकावादकः ॥
पूतनाकोपकः सूरजाखेलको गोपिगोपालकः पातु मां सर्वदा ॥ ६ ॥
विद्युदुद्योतकः प्रस्फुरद्वाससा प्रावृडंभोदवत्प्रोल्लसद्विग्रहम् ॥
वैजयंतीविभाशोभितोरस्थलं लोहितांघ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥
कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिं लसत्कुंडलं गंडयोः ॥
हारकेयूरकंकणप्रोज्वलं किंकिणीमंजुलं श्यामलं तं भजे ॥ ८ ॥
अच्युतस्याष्टकं यः पठेदिष्टदं प्रत्यहं प्रेमतः पूरितः सस्पृहम् ॥
सर्वतः सुंदरः कर्तृविश्वंभरस्तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९ ॥
इति श्रीमच्छंकराचार्यविरचितं अच्युताष्टकं संपूर्णम् ॥

## अथ लक्ष्मीनृसिंहस्तोत्रं.—वसंततिलकावृत्तं.

श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगींद्रभोगमणिरंजितपुण्यमूर्ते ॥
योगीश शाश्वतशरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ १ ॥
ब्रह्मेंद्ररुद्रमरुदर्ककिरीटकोटिसंघट्टितांघ्रिकमलामलकांतिकांत ॥

लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ २ ॥
संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रवरार्दितस्य ॥
आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ३ ॥
संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य ॥
दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ४ ॥
संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य ॥
व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ५ ॥
संसारवृक्षमघबीजमनंतकर्मशाखाशतं करणपत्रमनंगपुष्पम् ॥
आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह मम देहि करावलंबम् ॥६॥
संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्तेः ॥
नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ७ ॥
संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य ॥
त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ८ ॥
संसारजालपतितस्य जगन्निवास सर्वेंद्रियार्थबडिशार्थझषोपमस्य ॥
प्रोत्खंडितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ९ ॥
संसारभीकरकरींद्रकराभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश ॥
प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥१०॥
अंधस्य मे हृतविवेकमहाधनस्य चौरैः प्रभो बलिभिरिंद्रियनामधेयैः ॥
मोहांधकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह मम देहि करावलंबम् ॥११॥
लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुंठ कृष्ण मधुसूदन पुष्कराक्ष ॥
ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य करावलंबम् ॥१२॥
यन्माययोर्जितवपुः प्रचुरप्रवाहमग्नार्थमत्र निवहोरुकरावलंबम् ॥
लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शंकरेण ॥ १३ ॥
इति श्रीमच्छंकराचार्यविरचितं संकष्टनाशनं लक्ष्मीनृसिंहस्तोत्रं संपूर्णम् ॥

---

## अथ चर्पटपंजरिकास्तोत्रं.—पज्झटिकावृत्तं.

दिनमपि रजनी सायं प्रातः शिशिरवसंतः पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुंचत्याशावायुः ॥ १ ॥
भज गोविंदं भज गोपालं भज गोविंदं मूढमते ।
प्राप्ते सन्निहिते मरणे न हि न हि रक्षति डुकृञ्करणे ॥ ध्रु० ॥
अग्रे वन्हिः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः ।
करतलभिक्षातरुतलवासस्तदपि न मुंचत्याशापाशः ॥ २ ॥

यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः ।
पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोपि न गेहे ॥ ३ ॥
जटिली मुंडी लुंचितकेशः काषायांबरबहुकृतवेशः ॥ ४ ॥
भगवद्गीता किंचिदधीता गंगाजललवकणिका पीता ।
सकृदपि यस्य मुरारिसमर्चा तस्य यमोपि करोति न चर्चां ॥ ५ ॥
अंगं गलितं पलितं मुंडं दशनविहीनं जातं तुंडम् ।
वृद्धो याति गृहीत्वा दंडं तदपि न मुंचत्याशा पिंडम् ॥ ६ ॥
बालस्तावत्क्रीडासक्तस्तरुणस्तावत् तरुणीरक्तः ।
वृद्धस्तावच्चिंतामग्नः परे ब्रह्मणि कोपि न लग्नः ॥ ७ ॥
पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् ॥
इह संसारे भवदुस्तारे कृपया पारिपाहि मुरारे ॥ ८ ॥
पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः ॥
पुनरप्ययनं पुनरपि वर्षं तदपि न मुंचत्याशामर्षम् ॥ ९ ॥
वयसि गते कः कामविकारः शुष्के नीरे कः कासारः ॥
नष्टे द्रव्ये कः परिवारः ज्ञाते तत्त्वे कः संसारः ॥ १० ॥
नारीस्तनभरनाभिनिवेशं मिथ्यामायामोहावेशम् ॥
एतत् लङ्मांसविकारं मनसि विचारय वारंवारम् ॥ ११ ॥
कस्त्वं कोहं कुत आयातः का मे जननी को मे तातः ॥
इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् ॥ १२ ॥
गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रं ॥
नेयं सज्जनसंगतिचित्तं देयं दीनजनाय च वित्तम् ॥ १३ ॥
यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे ॥
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन् काये ॥ १४ ॥
सुखतः क्रियते रामाभोगः पश्चाद्धंतशरीरे रोगः ॥
यद्यपि लोके मरणं शरणं तदपि न मुंचति पापाचरणं ॥ १५ ॥
रथ्याचर्पटविरचितकंथा पुण्यापुण्यविवर्जितपंथाः ॥
नाहं न त्वं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥ १६ ॥
कुरुते गंगासागरगमनं व्रतपरिपालनमथवा दानम् ॥
ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन ॥ १७ ॥
इति श्रीमच्छंकराचार्यविरचितं चर्पटपंजरिकास्तोत्रं संपूर्णम् ॥

## अथ दशावतारस्तोत्रम्.–भुजंगप्रयातवृत्तं.

चलल्लोलकल्लोलकल्लोलिनीश स्फुरन्नक्रचक्रातिवक्त्राकुलीनः ॥
हतो येन मीनावतारेण शंखः स पायादपायाज्जगद्वासुदेवः ॥ १ ॥
धरानिर्जरारातिभारादपारादकूपारनीरातुराधःपतंती ॥
धृता कूर्मरूपेण पृष्ठोपरिष्ठे स देवो मुदे वोऽस्तु शेषांगशायी ॥ २ ॥
उदग्रे रदाग्रे सगोत्रापि गोत्रा स्थिता तस्युषः केतकाग्रे षडंघ्रेः ॥
तनोति श्रियं सश्रियं नस्तनोतु प्रभुः श्रीवराहावतारो मुरारिः ॥ ३ ॥
उरोदार आरंभसंरंभिणोसौ रमासभ्रमाभंगुराग्रैर्नखाग्रैः ॥
स्वभक्ताभिभर्त्स्याभिव्यक्तेन दारुण्यघोषं सदा वः स हिरण्यान्नृसिंहः ॥ ४ ॥
छलादाकलय्य त्रिलोकीं बलीयान् बलिं संबबंध त्रिलोकीबलीयः ॥
तनुत्वं दधानो तनुं संदधानो विमोहं मनो वामनो वः स कुर्यात् ॥ ५ ॥
हतक्षत्रियासृक्प्रपानप्रमत्तप्रनृत्यत्पिशाचप्रगीतप्रतापः ।
धराकारि येनाग्रजन्माग्रहारं विहारं क्रियान्मानसे वः स रामः ॥ ६ ॥
नतग्रीवसुग्रीवसाम्राज्यहेतुर्दशग्रीवसंतानसंहारकेतुः ॥
धनुर्येन भग्नं महत्कामहंतुः स मे जानकीजानिरेनांसि हंतु ॥ ७ ॥
घनाद् गोधन येन गोवर्धनेन व्यरक्षि प्रतापेन गोवर्धनेन ॥
हतारातिचक्री रणध्वस्तचक्री पदध्वस्तचक्री स नः पातु चक्री ॥ ८ ॥
धराबद्धपद्मासनस्थांघ्रियष्टिर्नियम्यानिलं न्यस्तनासाग्रदृष्टिः ॥
य आस्ते कलौ योगिनां चक्रवर्ती स बुद्धः प्रबुद्धोऽस्तु नश्चित्तवर्ती ॥ ९ ॥
दुरापारसंसारसहारकारी भवत्यश्वचारः कृपाणप्रहारी ॥
मुरारिर्दशाकारधारीह कल्की करोतु द्विषां ध्वंसनं वः स कल्की ॥ १० ॥
इति श्रीमच्छंकराचार्यविरचितं दशावतारस्तोत्रं संपूर्णम् ॥

---

## अथ आर्तत्राणनारायणाष्टादशकम्.–शार्दूलविक्रीडितवृत्तं.

प्रल्हादप्रभुरस्ति चेत् तव हरिः सर्वत्र मे दर्शय ।
स्तंभे चैनमिति ब्रुवंतमसुरं तत्राविरासीद्धरिः ॥
वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमावेदय-।
न्नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १ ॥
श्रीरामाव बिभीषणोयमधुना ह्यार्तो भयादागत. ।
सुग्रीवानय पालयेहमधुना पौलस्त्यमेवागतम् ॥
एवं योऽभयमस्य सर्वविदितं लंकाधिपत्यं ददा ।
वार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥

नक्रग्रस्तपदं समुद्यतकरं ब्रह्मेश देवेश मां ।
पाहीति प्रचुरार्तरावकरिणं देवेश शक्तीश च ॥
मा शोचेति ररक्ष नक्रवदनाच्चक्रश्रिया तत्क्षणा- ।
दार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ३ ॥
हा कृष्णाच्युत हा कृपाजलनिधे हा पांडवानां गते ।
क्वासि क्वासि सुयोधनादवगतां हा रक्ष मां द्रौपदीम् ॥
इत्युक्तोऽक्षयवस्त्ररक्षिततनुं योरक्षदापद्गणा- ।
दार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ४ ॥
यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं ।
यन्नामामृतपूरणं च पिबतां संतापसंहारकम् ॥
पाषाणश्च यदंघ्रितो निजवपूरूपं मुनेराप्तवा ।
नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ५ ॥
यन्नामश्रुतिमात्रतोऽपरिमितं संसारवारां निधिं ।
त्यक्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतं ॥
तन्नैवाद्भुतकारणं त्रिजगतां नाथस्य दासोस्म्यह- ।
मार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ६ ॥
पित्रा भ्रातरमुत्तमांकगमितं भक्तोत्तमं यो ध्रुवं ॥
दृष्ट्वा तत्सममारुरुक्षुमुदितं मात्रावमानं गतम् ॥
योदात् तं शरणागतं तु तपसा हेमाद्रिसिंहासनं ।
ह्यार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ७ ॥
नायोति श्रुतयो न तत्त्वमतयो घोषस्थिता गोपिका ।
जारिण्यः कुलजातिधर्मविमुखा अध्यात्मभावं ययुः ॥
भक्तिर्यस्य ददाति मुक्तिमतुलां जारस्य यः सद्गति- ।
र्ह्यार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ८ ॥
क्षुत्तृष्णार्तसहस्रशिष्यसहितं दुर्वाससं क्षोभितं ।
द्रौपद्या भयभक्तियुक्तमनसा शाकं स्वहस्तार्पितं ॥
भुक्त्वातर्पयदात्मवृत्तिमखिलामावेदयन् यः पुमा- ।
नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ९ ॥
येनारक्षि रघूत्तमेन जलधेस्तीरे दशास्यानुज- ।
स्त्वायातं शरणं रघूत्तम विभो रक्षातुरं मामिति ॥
पौलस्त्येन निराकृतोथ सदसि भ्रात्रा च लंकापुरे ।
ह्यार्तत्राणपराणः स भगवान् नारायणो मे गतिः ॥ १० ॥

येनावाहि महा[ह]त्रि वसुमती संवर्तकाले महा- ।
लीलाक्रोडवपुर्धरेण हरिणा नारायणेन स्वयम् ॥
यः पापिद्रुमसंप्रवर्तमचिराद्धत्वा च योऽगात् प्रिय- ।
मार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ ११ ॥
योद्धासौ भुवनत्रये मधुपतिर्भर्ता नराणां बले ।
राधाया अकरोद्रते रतिमनःपूर्तिं सुरेंद्रानुजः ॥
यो वा रक्षति दीनपांडुतनयान् नार्येति भीतिं गता- ।
नार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १२ ॥
यो सांदीपिनिदेशतश्च तनयं लोकांतरात्सन्नतं ।
चानीय प्रतिपाद्य पुत्रमरणादुज्जृंभमाणार्तये ॥
संतोषं जनयन्नमेयमहिमा पुत्रार्थसंपादना- ।
दार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १३ ॥
यन्नामस्मरणादघौघसहितो विप्रः पुराजामिलः ।
प्राणान्मुक्तिमशोषितामनु च यः पापौघदावार्तियुक् ॥
सद्यो भागवतोत्तमात्मनि मतिं प्रापांबरीषाभिध- ।
श्चार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १४ ॥
योरक्षद्वसनादिनित्यरहितं विप्रं कुचेलाभिधं ।
दीनादीनचकोरपालनपरः श्रीशांतचक्रोज्ज्वलः ॥
तज्जीर्णांबरमुष्टिमात्रपृथुकानादाय भुक्त्वा क्षणा- ।
दार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १५ ॥
यत्कल्याणगुणाभिराममलं मंत्राणि संशिक्षते ।
यत्संशेतिपतिप्रतिष्ठितमिदं विश्वं वदत्यागमः ॥
यो योगींद्रमनःसरोरुहतमःप्रध्वंसविद्भानुमा- ।
नार्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १६ ॥
कालिंदीहृदयाभिरामपुलिने पुण्ये जगन्मंगले ।
चंद्रांभोजवटे पुटे परिसरे धात्रा समाराधिते ॥
श्रीरंगे भुजगेंद्रभोगशयने शेते सदा यः पुमा- ।
नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १७ ॥
वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणा- ।
दौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् ॥
सेव्यः श्रीपतिरेव सर्वजगतामेते हि तत्साक्षिणः ।
प्रह्लादश्च बिभीषणश्च करिराट् पांचाल्यहल्याध्रुवाः ॥ १८ ॥

इति श्रीमच्छंकराचार्यविरचितमार्तत्राणपरायणाष्टादशकं संपूर्णम् ॥

## ॥ अथ गोविंदाष्टकस्तोत्रम* ॥

श्रीसत्यज्ञानमनंतं नित्यमनाकाशं परमाकाशं ।
गोष्ठप्रांगणरिंगणलोलमनायासं परमायासम् ॥
मायाकल्पितनानाकारमनाकारं भुवनाकारं ।
क्ष्मामानाथमनाथं प्रणमत गोविंदं परमानंदम् ॥ १ ॥
मृत्स्नामत्सीहेतियशोदाताडनशैशवसंत्रासं ।
व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् ॥
लोकत्रयपुरमूलस्तंभं लोकालोकमनालोकं ।
केशं परमेशं प्रणमत गोविंदं परमानंदम् ॥ २ ॥
त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं ।
कैवल्यं नवनीताहारमनाहारं भुवनाहारम् ॥
वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं ।
शैवं केवलशांतं प्रणमत गोविंदं परमानंदम् ॥ ३ ॥
गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं ।
गोपीखेलनगोवर्धनधृतलीलालालितगोपालम् ॥
गोभिर्निगदितगोविंदं स्फुटमानं बहुनामानं ।
गोधीगोचरदूरं प्रणमत गोविंदं परमानंदं ॥ ४ ॥
गोपीमंडलगोष्ठीभेदमभेदाभं शश्वद्गोखुर- ।
निर्धूतोद्धृतधूलीधूसरसौभाग्यम् † ॥
श्रद्धाभक्तिगृहीतानंदमचिंत्यं चिंतितसद्भावं ।
चिंतामणिमणिमानं प्रणमत गोविंदं परमानंदम् ॥ ५ ॥
स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं ।
व्यादित्संतीरथ दिग्वस्त्रा दातुं समुपाकर्षंतम् ॥
निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरंतस्थं ।
सत्तामात्रशरीरं प्रणमत गोविंदं परमानंदम् ॥ ६ ॥
कांतं कारणमादिमनादिं कालघनाभासं † ।
कालिंदीगतकालियशिरसि नृत्यंतम् § ॥
कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं ।
कालत्रयगतिहेतुं प्रणमत गोविंदं परमानंदं ॥ ७ ॥

---

* या स्तोत्राच्या प्रत्येक पद्याच्या प्रत्येक पादांत तीस मात्रा असण्याचा नियम दिसतो. म्हणून हें मात्रागणवृत्त होय. छंदोमंजरी व वृत्तरत्नाकर यांत अशा प्रकारच्या वृत्ताचें नांव आढळत नाहीं. † या पादांत चार मात्रा कमी आहेत. § यांत दहा मात्रा कमी.

वृंदावनभुवि वृंदारकगणवृंदाराधितदेहं ।
कुंदाभामलमंदस्मेरसुधानंदं सुहृदानंदम् ॥
वंद्याशेषमहामुनिमानसवंद्यानंदपदद्वंद्वम्
वंद्याशेषगुणाब्धिं प्रणमत गोविंदं परमानंदम् ॥ ८ ॥
गोविंदाष्टकमेतदधीते यो गोविंदार्पितचेता ।
यो गोविंदाच्युत माधव विष्णो गोकुलनायक कृष्णेति ॥
गोविंदाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघो ।
गोविंदं परमानंदामृतमंतस्थं स समभ्येति ॥ ९ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं
गोविंदाष्टकस्तोत्रं संपूर्णम्

**अथ पंचमहायुधस्तोत्रम्—उपजातिवृत्तं.**

विष्णोर्मुखोत्थानिलपूरितस्य यस्य ध्वनिर्दानवदर्पहंता
तं पाञ्चजन्यं शशिकोटिशुभ्रं शंखं सदाहं शरणं प्रपद्ये ॥ १ ॥
स्फुरत्सहस्रारशिखातितीव्रं सुदर्शनं भास्करकोटितुल्यम्
स्फुरद्द्विषां प्राणविनाशदक्षं चक्रं सदाहं शरणं प्रपद्ये ॥ २ ॥
हिरण्मयीं मेरुसमानसारां कौमोदकीं दैत्यकुलस्य हंत्रीम्
वैकुंठवामाग्रकराभिमृष्टां गदां सदाहं शरणं प्रपद्ये ॥ ३ ॥
रक्षोऽसुराणां कठिनोग्रकंठच्छेदोच्छलच्छोणितदिग्धधारम्
तं नंदकं नाम हरेः प्रदीप्तं खड्गं सदाहं शरणं प्रपद्ये ॥ ४ ॥
यस्यातिनादश्रवणात् सुराणां चेतांसि निर्मुक्तभयानि सद्यः ॥
भवंति दैत्याशनिबाणवर्षं शार्ङ्गं सदाहं शरणं प्रपद्ये ॥ ५
प्रातर्हरेः पंचमहायुधानां स्तवं पठेद्यः कृतसर्वरक्षः
जीवेच्छतं सर्वजनैः स पूज्यो निर्वाणकाले विशतीह विष्णुम् ॥ ६ ॥
इति श्रीमच्छंकराचार्यविरचितं पंचमहायुधस्तोत्रं संपूर्णम् ॥

**अथ परदेवतामानसपूजास्तोत्रम्.**

उषसि मागधमंगलगायनै र्झटिति जागृहि जागृहि जागृहि ॥
अतिकृपार्द्रकटाक्षनिरीक्षणै र्जगदिदं जगदंब सुखीकुरु ॥ १ ॥
कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुंभयुक्तम् ॥
मणिमंडपमध्यमेहि मातर्मयि कृपयाशु समर्चनं ग्रहीतुम् ॥ २ ॥
कनककलशशोभमानशीर्षं जलधरचुंबिसमुच्छ्रतपताकम् ॥
भगवति तव सन्निवासहेतोर्मणिमयमंदिरमेतदर्पयामि ॥ ३ ॥

तपनीयमयी सुतूलिका कमनीया मृदुलोत्तरच्छदा ॥
नवरत्नविभूषिता मया शिबिकेयं जगदंब तेर्पिता ॥ ४ ॥
कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे ॥
भगवति रमणीये रत्नसिंहासनेस्मिन्नुपविश पदयुग्मं हैमपीठे निधेहि ॥ ५ ॥
मणिमौक्तिकनिर्मितं महांतं कनकस्तंभचतुष्टयेन युक्तम् ॥
कमनीयतमं भवानि तुभ्यं नवमुल्लोचमहं समर्पयामि ॥ ६ ॥
दूर्वया सरसिजान्वितविष्णुक्रांतया च सहितं कुसुमाढ्यम् ॥
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥ ७ ॥
गंधपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतमिश्रम् ॥
हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः ॥ ८ ॥
जलजद्युतिना करेण जातीफलकंकोललवंगगंधयुक्तैः ॥
अमृतैरमृतैरिवातिशीतैर्भगवत्याचमनं विधीयताम् ॥ ९ ॥
निहितं कनकस्य संपुटे पिहितं रत्नपिधानकेन यत् ॥
तदिदं भवतीकरेर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥ १० ॥
एतच्चंपकतैलमंब विविधैः पुष्पैर्मुहुर्वासितं ।
न्यस्तं रत्नमये [मयात्र] चषके भृंगैर्भ्रमद्भिर्वृतम् ॥
सानंदं सुरसुंदरीभिरभितो हस्तैर्धृतं तन्मया ।
केशेषु भ्रमरप्रभेषु सकलेष्वंगेषु चालिप्यते ॥ ११ ॥
मातः कुंकुम [रेणु]निर्मितमिदं देहे तवोद्वर्तनं ।
भक्त्याहं कलयामि हेमरजसा संमिश्रितं केसरैः ॥
केशानामलकैर्विशोध्य विशदान् कस्तूरिकाद्यर्चितैः ।
स्नानं ते नवरत्नकुंभविधिना संवासितोष्णोदकैः ॥ १२ ॥
दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादरो जननि त्वां पुनरुष्णवारिभिः ॥ १३ ॥
एलोशीरसुवासितैः सुकुसुमैर्गंगादितीर्थोदकै- ।
र्माणिक्यामृतमौक्तिकामृतयुतैः स्वच्छैः सुवर्णोदकैः ॥
मंत्रान् वैदिकतांत्रिकान् परिपठन् सानंदमत्यादरात् ।
स्नानं ते परिकल्पयामि जननि प्रीत्या त्वमंगीकुरु ॥ १४ ॥
बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्द्धिसर्वोत्तमं ।
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ॥
मुक्ताभिर्ग्रथितं च कंचुकमिदं स्वीकृत्य पीतप्रभं ।
तप्तस्वर्णसमानवर्णमतुलं प्रावारमंगीकुरु ॥ १५ ॥

नवरत्नयुते मयार्पिते कमनीये तपनीयपादुके ॥
सविलासमिदं पदद्वयं कृपया देवि तयोर्निधीयतां ॥ १६ ॥
कलधौतकलाकलापचंचन्मणिमुक्तायुतकोटिमंजरीभिः ॥
मृदुलोत्तरतूलिकादिभिर्वृतमुच्चासनमंब ते र्पयामि ॥ १७ ॥
बहुभिरगुरुधूपैः सादरं धूपयित्वा भगवति तव केशान् कंकतैर्मार्जयित्वा ॥
सुरभिभिररविंदैश्चंपकैश्चार्चयित्वा झटिति कनकसूत्रैर्जूटयन् वेष्टयामि ॥ १८ ॥
सौवीरांजनमिदमंब चक्षुषोस्ते विन्यस्तं कनकशलाकया मया यत् ॥
तन्नूनं मलिनमपि त्वदक्षिसंगाद् ब्रह्मेंद्राद्यभिलषणीयतामियाय ॥ १९ ॥
मंजीरान् पदयोर्निधाय रुचिरान् विन्यस्य कांचीं कटौ ।
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ॥
केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात् ॥
ताटंके तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥ २० ॥
धम्मिल्ले तव देवि हेमकुसुमान्याधाय भालस्थले ।
मुक्ताराजिविराजिहेमतिलकं नासापुटे मौक्तिकम् ॥
मातर्मौक्तिकजालिकां च कुचयोः सर्वांगुलीपूर्मिकाः ।
कटयां कांचनकिंकिणीर्विनिदधे रत्नावतंसं श्रुतौ ॥ २१ ॥
मातर्भालतले तवातिविमले काश्मीरकस्तूरिका- ।
कर्पूरागरुभिः करोमि तिलकं देहेंगरागं ततः ॥
वक्षोजादिषु यक्षकर्दमरसं सिक्त्वा च पुष्पद्रवं ।
पादौ कुंकुमलेपनादिभिरहं संपूजयामि क्रमात् ॥ २२ ॥
रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः ॥
अखंडितैर्देवि यवादिभिर्वा काश्मीरपंकांकिततंडुलैर्वा ॥ २३ ॥
जननि चंपकतैलमिदं पुरो मृगमदोपमयं पटवासकः ॥
सुरभिगंधमिदं चतुःसमं सपदि सर्वमिदं प्रतिगृह्यताम् ॥ २४ ॥
सीमंते ते भगवति मया सादरं न्यस्तमेतत् ।
सिंदूरं ते हृदयकमले हर्षवर्षं तनोतु ॥
बालादित्यद्युतिरिव सदा लोहिता यस्य कांति- ॥
रंतर्ध्वांतं हरतु सततं चेतसा चिंतयामि ॥ २५ ॥
मंदारकुंदकरवीरलवंगपुष्पैस्त्वां देवि सततमहं परिपूजयामि ॥
[illegible] च तेर्पयामि ॥ २६ ॥

[illegible]

कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदंब ते वपुः ॥ २७ ॥

पारिजातशतपत्रपाटलैर्मल्लिकामकुलचंपकादिभिः ॥
अंबुजैश्च कुसुमैश्च सादरं पूजयामि जगदंब ते वपुः ॥ २८ ॥
लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः ।
कर्पूराकुलितैः सितामधुयुतैर्गोसर्पिषालोडितैः ॥
श्रीखंडागुरुगुग्गुलप्रभृतिभिर्नानाविधैर्वस्तुभिः ।
धूपं ते परिकल्पयामि जननि प्रीत्या त्वमंगीकुरु ॥ २९ ॥
रत्नालंकृतहेमपात्रनिहितैर्गोसर्पिषा दीपितैः ।
दीपैर्दीर्घतरांधकारभिदुरैर्बालार्ककोटिप्रभैः ॥
आताम्रज्वलदुज्ज्वलज्ज्वलनवद्रत्नप्रदीपैः सदा ।
मातस्त्वामहमुच्चकै * * * ॥ ३० ॥
मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसंतानिकाः ।
[illegible] ॥
[illegible] ।
शाकैः साकमहं सुधाधिकरसैः संतर्पयाम्यर्पयन् ॥ ३१ ॥
सापूपसूपदधिदुग्धसिताघृतानि सुस्वादभक्ष्यपरमान्नपुरःसराणि ॥
शाकोल्लसन्मरिचजीरकबाल्हिकानि भक्ष्याणि भुंक्ष्व जगदंब मयार्पितानि ॥३२॥
क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्वलं मधु ॥
मातरेतदिदममृतोपमं पयः संभ्रमेण परिपीयतां मुहुः ॥ ३३ ॥
उष्णोदकैः पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे ॥
कर्पूरमिश्रेण सकुंकुमेन हस्तौ समुद्वर्तय चंदनेन ॥ ३४ ॥
अतिशीतमुशीरवासितं तपनीयोपवने निवेदितं ॥
पटपूतमिदं जितामृतं शुचिगंगामृतमंब पीयताम् ॥ ३५ ॥
ताम्राम्ररंभाफलसंयुतानि द्राक्षाफलाक्षोटसमन्वितानि ॥
सुनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि ॥ ३६ ॥
कलिंगकोशादिकसंयुतानि जंबीरनारिंगसमन्वितानि ॥
सबीजपूराणि सखर्जुराणि फलानि ते देवि समर्पयामि ॥ ३७ ॥
कर्पूरेण युतैर्लवंगसहितैः कंकोलचूर्णान्वितैः ।
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ॥
मातः केतकपत्रकुंदरुचिभिस्तांबूलवल्लीदलैः ।
सानंदं मुखमंडनार्थमतुलं तांबूलमंगीकुरु ॥ ३८ ॥
एलालवंगादिसमन्वितानि कंकोलकर्पूरसमन्वितानि ॥
तांबूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि ॥ ३९ ॥

तांबूलवल्लीदलनिर्जितहेमवर्णं स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् ॥
रत्नस्थगिस्थितमिदं खदिरेण सार्धं तांबूलमंब वदनांबुरुहे गृहाण ॥४०॥

महति कनकपात्रे स्थापयित्वा विशालान् ।
डमरुसदृशरूपान् पक्वगोधूमदीपान् ॥
बहुघृतमथ तेषु न्यस्य दीपानुरूपं ।
भुवनजननि कुर्वे नित्यमारार्तिकं ते ॥ ४१ ॥

सविनयमथ दत्वा जानुयुग्मं धरण्यां ।
सपदि शिरसि धृत्वा पात्रमारार्तिकस्य ॥
मुखकमलसमीपे तेंब सार्धत्रिवारं ।
भ्रमयति मयि भूयात् ते कृपार्द्रः कटाक्षः ॥ ४२ ॥

अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वावकीर्य ।
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ॥
मिलितविविधमुक्तां दिव्यलावण्ययुक्तां ॥
जननि कनकवृष्टिं दक्षिणां तेर्पयामि ॥ ४३ ॥

मातः कांचनदंडमंडितमिदं पूर्णेंदुबिंबप्रभं ।
नानारत्नविशोभिहेमकलशं लोकत्रयाल्हादकम् ॥
भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं ।
छत्रं ते परिकल्पयामि जननि त्वष्ट्रा स्वयं निर्मितं ॥ ४४ ॥

शरदिंदुमरीचिगौरवर्णैर्मणिमुक्ताविलसत्सुवर्णदंडैः ॥
जगदंब विचित्रचामरैस्त्वामहमानंदभरेण वीजयामि ॥ ४५ ॥

मार्तंडमंडलनिभो जगदंब योयं प्रीत्या मया मणिमयो मुकुरोर्पितस्ते ॥
पूर्णेंदुबिंबरुचिरं वदनं स्वकीयमस्मिन् विलोकय विलोलविलोचने त्वम्॥४६॥

इंद्रादयो नतिनतैर्मुकुटप्रदीपैर्नीराजयंति सततं तव पादपीठम् ॥
तस्मादहं तव समस्तशरीरमेतन्नीराजयामि जगदंब सहस्रदीपैः ॥ ४७ ॥

प्रियगतिरतितुंगो रत्नपल्याणयुक्तः ।
कनकमयविभूषः स्निग्धगंभीरघोषः ॥
भगवति कलितोयं वाहनार्थं मया ते ।
तुरगशतसमेतो वायुवेगस्तुरंगः ॥ ४८ ॥

मधुकरवृतकुंभन्यस्तसिंदूररेणुः ।
कनककलितघंटाकिंकिणीशोभिकंठः ॥
श्रवणयुगलचंचच्चामरो मेघतुल्यो ।
जननि तव मुदे स्यान्मत्तमातंग एषः ॥ ४९ ॥

द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम् ।
कनकमयमहावितानवंतं भगवति ते हि रथं समर्पयामि ॥ ५० ॥
हयगजरथपत्तिशोभमानं दिशि दिशि दुंदुभिमेघनादयुक्तम् ॥
अतिबहुचतुरंगसैन्यमेतद्भगवति भक्तिभरेण तेर्पयामि ॥ ५१ ॥
परिखीकृतसप्तसागरं बहुसंपत्सहितं मयांब ते ॥
विपुलं धरणीतलाभिधं प्रबलं दुर्गमिदं समर्पितम् ॥ ५२ ॥
शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः ॥
भ्रमरीमुखरीकृतैरनंतैर्व्यजनैस्त्वां जगदंब वीजयामि ॥ ५३ ॥
भ्रमविलुलितकुंतला लतालिर्विगलितमाल्यविकीर्णरंगभूमिः ॥
इयमतिरुचिरानना नटंती तव हृदये मुदमातनोतु मातः ॥ ५४ ॥
मुखकमलविलासलोलवेणीविलसितनिर्जितमत्तलोलभृंगाः ॥
युवजनसुखकारिचारुलीला भगवति ते पुरतो नटंति बालाः ॥ ५५ ॥

रुचिरकुचतटीनां नाट्यकाले नटीनां
पतिग्रहमय तवे प्रत्यहं प्रादुरासीत् ॥
धिमिकिटि धिमि धिक् धीधिक् धिधीधिक् धिधीधिक् ।
धिमिगिति धिगिति तत्थैयथय्येति शब्दः ॥ ५६ ॥

भ्रमदलिकुलतुल्यालोलधम्मिल्लभारा ।
स्मितमुखकमलोद्यद्दिव्यलावण्यरूपा ॥
अनुपमभृतवेषा वारयोषा नटंती ।
परभृतकलकंठी देवि हर्षं तनोतु ॥ ५७ ॥

डमरुडिंडिमझर्झरझल्लरीमृदुमृदंगहुडुक्कशिङ्गडादयः ॥
झटिति झांकृतिभिर्जगदंबिके मुहुरयं हृदयं सुखयंतु ते ॥ ५८ ॥
विपंचीषु सप्त स्वरान् वादयंत्यस्तव द्वारि गायंति गंधर्वकन्याः ॥
क्षणं सावधानेन चित्तेन मातः समाकर्णय त्वं मया प्रार्थितासि ॥ ५९ ॥

अभिनवकमनीयैर्नर्तनैर्नर्तकीनां ।
क्षणमथ रमयित्वा चेत एवं त्वदीयम् ॥
स्वयमहमतिचित्रैर्नृत्यवाद्यादिगीतैः ।
भगवति भवदीयं मानसं रंजयामि ॥ ६० ॥

तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः ॥
तदिहैकमुखेषु जनेषु स्तवनं कस्तव कर्तुमीश्वरः ॥ ६१ ॥
पदे पदे या परिपूजकेभ्यः सद्योश्वमेधादिफलं ददाति ॥
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां त्वां परितः करोमि ॥ ६२ ॥

रक्तोत्पलारक्तदलप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशांकुशाभ्यां ॥
अशेषवृंदारकवंदिताभ्यां नमो भवानी पदपंकजाभ्यां ॥ ६३ ॥
चरणनलिनयुग्मं पंकजैः पूजयित्वा ।
कनककमलमालां कंठदेशेऽर्पयित्वा ॥
शिरसि विनिहितोयं रत्नपुष्पांजलिस्ते ।
हृदयकमलमध्ये देवि हर्षं तनोतु ॥ ६४ ॥
अथ मणिमयमंचकाभिरामे द्युतिमति पुष्पवितानराजमाने ॥
प्रसरदगुरुधूपधूपितेस्मिन् भगवति वासगृहेस्तु ते निवासः ॥ ६५ ॥
अथ मातरुशीरवासितं निजतांबूलरसेन रंजितम् ॥
तपनीयमये हि पात्रके मुखगंडूषजलं निधीयताम् ॥ ६६ ॥
एतस्मिन् मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदौ निधाय पादौ ॥
विस्तीर्णे मृदुलतरोत्तमच्छदेस्मिन् पर्यंके कनकमये निषीद मातः ॥ ६७ ॥
तव देवि सरोजचिन्हयोः पदयोर्निर्जितपद्मरागयोः ॥
अतिरक्तदलैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥ ६८
क्षणमथ जगदंब मंचकेस्मिन् मृदुतरतूलिकया विराजमाने ॥
अतिरहसि मुदा शिवेन सार्धं सुखशयनं कुरु मां हृदि स्मरंती ॥ ६९ ॥
मुक्ताकुंदेंदुगौरां मणिमयमुकुटां रत्नताटंकयुक्ता ।
मक्षस्रक्पुष्पहस्तामभयवरकरां चंद्रचूडां त्रिनेत्राम् ॥
नानालंकारयुक्तां सुरमुकुटमणिद्योतितस्वर्णपीठां ।
सानंदां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिंतयामि ॥ ७० ॥
एषा भक्त्या तव विरचिता या मया देवि पूजा ।
स्वीकृत्यैनां सपदि सकलान् मेपराधान् क्षमस्व ॥
न्यूनं यत् तत् तव करुणया पूर्णतामेति सद्यः ।
सानंदं मे हृदयकमले तेस्तु नित्यं निवासः ॥ ७१ ॥
पूजामिमां पठेत् प्राज्ञः पूजां कर्तुमनीश्वरः ॥
पूजाफलमवाप्नोति वांछितार्थं च विंदति ॥ ७२ ॥
प्रत्यहं भक्तियुक्तो यः पूजनीयमिदं पठेत् ॥
वाग्वादिन्याः प्रसादेन वत्सरात् स कविर्भवेत् ॥ ७३ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं श्री-
परदेवतायाः चतुःषष्ट्युपचारमानसपूजास्तोत्रं संपूर्णम् ॥

---

**अथ दक्षिणामूर्त्यष्टकं-शार्दूलविक्रीडितवृत्तं.**

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं ।
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ॥
यः साक्षात् कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १ ॥
बीजस्यान्तरिवांकुरो जगदिदं प्राङ्निर्विकल्पं पुमान् ।
मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ॥
मायावीव विजृंभयत्यपि महायोगीव यः स्वेच्छया ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २ ॥
यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थगं भासते ।
साक्षात् तत्वमसीति वेदवचसा यो बोधयत्याश्रितान् ॥
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवांभोनिधौ ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३ ॥
नानाछिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ।
ज्ञानं यस्य च चक्षुरादिकरणद्वारा बहिः स्पंदते ॥
जानामीति तमेव भांतमनुभात्येतत्समस्तं जगत् ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४ ॥
देहं प्राणमपींद्रियाण्यपि चलां बुद्धिं च शून्यं विदुः ।
स्त्रीबालांधजडोपमास्त्वहमिति भ्रांता भृशं वादिनः ॥
मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५ ॥
राहुग्रस्तदिवाकरेंदुसदृशो मायासमाच्छादनात् ।
सन्मात्रः करणोपसंहरणतो योभूत् सुषुप्तः पुमान् ॥
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६ ॥
बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि ।
व्यावर्तास्वनुवर्तमानमहमित्यंतःस्फुरंतं सदा ॥
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७ ॥
विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबंधतः ।
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ॥
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितः ।

स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ८ ॥
भूरंभांस्यनलोनिलोंबरमहर्नाथो हिमांशुः पुमा- ।
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकं ।
नान्यत् किंचन विद्यते विमृशतां यस्मात् परस्माद् विभो ॥
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ९ ॥
सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे ।
तेनास्य श्रवणात् तदर्थमननाद् ध्यानाच्च संकीर्तनात् ॥
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः ।
सिध्येत् तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १० ॥
इति श्रीमच्छंकराचार्यविरचितं दक्षिणामूर्त्यष्टकं संपूर्णम् ॥

---

## अथ आत्मनिंदाष्टकस्तोत्रं–उपजातिवृत्तम्.

आशावशादष्टदिगंतरालं देशांतरभ्रांतमशांतबुद्धिम् ॥
आकारमात्रादवनीसुरं मां अकृत्यकृत्यं शिव पाहि शंभो ॥ १ ॥
संसारमायाजलधिप्रवाहे संमग्नमुद्भ्रांतमशांतबुद्धिम् ॥
त्वत्पादसेवाविमुखं सुकामं सुदर्शनं मां शिव पाहि शंभो ॥ २ ॥
[illegible] कामिकृत्स्नजालम् ॥
[illegible] शिव पाहि शंभो ॥ ३ ॥
पापार्तितापत्रयतप्तदेहं परां गतिं गंतुमुपायवर्जम् ॥
परावमानैकपरात्मभावं नराधमं मां शिव पाहि शंभो ॥ ४ ॥
वेदागमाभ्यासरसानभिज्ञं पादारविंदं तव नार्चयंतम् ॥
वेदोक्तकर्माणि विलोपयंतं वेदाकृते मां शिव पाहि शंभो ॥ ५ ॥
अन्यायवित्तार्जनसक्तचित्तमन्यासु नारीष्वनुरागवंतम् ॥
अन्यान्नभोक्तारमशुद्धबुद्धिमाचारहीनं शिव पाहि शंभो ॥ ६ ॥
इष्टानृतं भ्रष्टमनिष्टधर्मनष्टोत्तमं मां सुखलेशवर्जम् ॥
शिष्टेतरांतःकरणं प्रविष्टं दुष्टोत्तमं मां शिव पाहि शंभो ॥ ७ ॥
पिता यथा रक्षति पुत्रमीश जगत्पिता त्वं गिरिजासहायः ॥
कृतापराधं तव सर्वकार्ये कृपानिधे मां शिव पाहि शंभो ॥ ८ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकराचार्य-
विरचितं आत्मनिंदाष्टकस्तोत्रं संपूर्णम् ॥

---

## अथ नवरत्नमालिकास्तोत्रं.

अतिभीषणकटुभाषणयमकिंकरपटली ।
कृतताडनपरपीडनमरणागमसमये ॥
उमया सह मम चेतसि यमशासन निवसन् ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ १ ॥
असदिंद्रियविषयोदयकृतसंसृतिविकृतेः ।
परदूषणपरतोषणकृतहेतुकविकृतेः ॥
शमनाशनभवकाननविरतेर्भव शरणं ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ २ ॥
गुरुणा सह निगमोदितवचनं हृदि न भृतं ।
कृतचोदितफलदं भव शुभ कर्म च न कृतम् ॥
हर वासरसमुपोषणमपि नादितमपि कं ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ३ ॥
विषयाभिधबडिशायुधपतिशितामयसुकृते ।
मकरायितमतिसंततकृतवासो विविधम् ॥
परमालय परिपालय परितापितमिति मां ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ४ ॥
विविधाधिभिरतिभीतिभिरकृतादिकसुकृतं ।
शतकोटिषु नरकादिषु कृतपातनविवशम् ॥
मृड मामव सुकृतैरिव शिवया सह कृपया ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ५ ॥
यदि तातमजनिता मम जननी मम जनको ।
मम कल्पितमतिसंततमरुभूमिषु निरतम्
जनिता सुखवनितासखिवसतिं कुरु सुमतिं ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ६ ॥
शिवदाविति सुखदाविति युवयोः कृतिहृदये ।
शिवयोर्गुरुरशिरो हृदि जनिता स्तवसुकृते ॥
इति शीतलहृदयो भव भवता तव दयया ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ७ ॥
त्वयि तिष्ठति सकलस्थितपरमात्मनि हृदये ।
वसुमागणकपणे क्षणमनसा सह विमुखं ॥
अकृताह्निकवपुपोषण भवता गिरिसुतया ।

शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ८ ॥
शरणागतभरणाधृतकरुणामृतजलधे ।
शरणं तव चरणं मम शिवसंस्मृतिवचसे ॥
वरचिन्मयजगदामयभिषजे सति रमतां ।
शिव शंकर शिव शंकर हर मे हर दुरितम् ॥ ९ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं
नवरत्नमालिकास्तोत्रं संपूर्णम् ॥

---

## अथ महावाक्यस्तोत्रं–अनुष्टुप् छंदः

क्षणं ब्रह्माहमस्मीति यः कुर्यादात्मचिंतनम् ॥
तन्महापातकं हंति तमः सूर्योदयो यथा ॥ १ ॥
अज्ञानाद् बुद्‌बुदो जातो ह्याकाशो बुद्‌बुदोद्भवः ॥
आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ॥ २ ॥
पयसः पृथिवी जाता ततो व्रीहियवादिकं ॥
पृथिव्यप्सु पयो वन्हौ वन्हिर्वायौ नभस्यसौ ॥ ३ ॥
नभोप्यव्याकृते तच्च शुद्धे शुद्धोप्यहं हरिः ॥
अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ॥ ४ ॥
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ॥
अच्युतोहमनंतोहं गोविंदोहमहं हरिः ॥ ५ ॥
आनंदोहमशेषोहमजोहममृतोस्म्यहम् ॥
नित्योहं निर्विकारोहं निर्विकल्पोहमव्ययः ॥ ६ ॥
सच्चिदानंदरूपोहं पंचकोशातिगोस्म्यहम् ॥
अकर्ताहमभोक्ताहमसंगः परमेश्वरः ॥ ७ ॥
अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ॥
इति ध्यानाश्रितो मुक्तो बद्ध एवान्यथा भवेत् ॥ ८ ॥
अन्योसावहमन्योस्मीत्युपास्ते योन्यदेवताम् ॥
न स वेद नरो ब्रह्म न च देवान् यथा पशुः ॥ ९ ॥
आत्मानं सततं ब्रह्म संभाव्य विचरंति ये ॥
न तेषां दुष्कृतं किंचिद् दुष्कृतोत्था न चापदः ॥ १० ॥
ब्रह्मैवाहं न संसारी मुक्तोहमिति भावयेत् ॥
अशक्नुवन् भावयितुं वाक्यमेतत् सदा जपेत् ॥ ११ ॥
एकमासं ध्यानयोगाद् ब्रह्महत्यां व्यपोहति ।

संवत्सरकृताभ्यासः सिध्यष्टकमवाप्नुयात् ॥ १२ ॥
यावज्जीवं सदाभ्यासाज्जीवन्मुक्तो न संशयः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ १३ ॥
मयि सर्वं लयं याति तद् ब्रह्मास्म्यहमव्ययम् ॥
नाहं देही न मे देहः केवलोहं सनातनः ॥ १४ ॥
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥
अयं प्रपंचो मिथ्यैव सत्यं ब्रह्माहमव्ययम् ॥
अत्र प्रमाणं वेदानुभवो गुरुवचस्तथा ॥ १५ ॥
इति श्रीमच्छंकराचार्यविरचितं महावाक्यसिद्धांतस्तोत्रं संपूर्णम् ॥

---

## अथ आर्तत्राण गंगाधराष्टकस्तोत्रं-शार्दूलविक्रीडितवृत्तं

व्यूढं द्रोणजयद्रथादिरथिकैः सैन्यं महत् कौरवं ।
दृष्ट्वा कृष्णसहायवंतमपि तं भीतं प्रपन्नार्तिहा ॥
पार्थं रक्षितवानमोघविजयं दिव्यास्त्रमुद्बोधय- ।
न्नार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ १ ॥
बालं शैवकुलोद्भवं परिहतस्वज्ञातिपक्षाकुलं ।
खिद्यंतं निजमूर्ध्नि पुष्पनिचयं दातुं समुद्यत्करम् ॥
दृष्ट्वा नम्रविरिंचिनम्रगनरे पूजां तदीयां भज- ।
न्नार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ २ ॥
संत्रस्तेषु पुरा पुरासुरभयादिंद्रादिवृंदारके- ।
ष्वारूढो धरणीरथं श्रुतिहयं कृत्वा मुरारिं शरम् ॥
रक्षन् यः कृपया समस्तविबुधान् जित्वा पुराणि क्षणा- ॥
दार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ ३ ॥
क्षीरांभोनिधिमंथनोद्भवविषाद् दंदह्यमानान् सुरान् ।
ब्रह्मादीनवलोक्य यः करुणया हालाहलाख्यं विषम् ॥
निःशंकं निजलीलया कवलयन् लोकान् ररक्षादरा- ।
दार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ ४ ॥
मृत्युं वक्षसि ताडयन् निजपदध्यानैक निष्ठं मुनिं ।
मार्कंडेयमपालयत् करुणया लिंगाद्विनिर्गत्य यः ॥
नेत्रांभोजसमर्चनेन हरये तुष्टो रथांगं दद- ।
न्नार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ ५ ॥

क्षीरं स्वादु निपीय मातुलगृहे गत्वा स्वकीयं गृहं ।
क्षीरालाभवशेन खिन्नमनसे घोरं तपःकुर्वते ॥
कारुण्यादुपमन्यवे निरवधिं क्षीरांबुधिं दत्तवा- ।
न्नार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ ६ ॥
श्रौतस्मार्तपथा पराङ्मुखमपि प्रोद्यन्महापातकं ।
विश्वाधीश मम त्वमेव गतिरित्यालापवंतं सकृत् ॥
रक्षन् यः करुणापयोनिधिरिति प्राप्तः स सिद्धिं पुरा ।
ह्यार्तत्राणपरायणः स सभगवान् गंगाधरो मे गतिः ॥ ७ ॥
गंगावेगमशक्यमन्यविबुधैः सोढुं पुरा याचितो ।
दृष्ट्वा भक्तभगीरथेन विनुतो रुद्धां जटामंडले ॥
कारुण्यादवनीतले सुरनदीमाप्लावयन् पावनी- ।
मार्तत्राणपरायणः स भगवान् गंगाधरो मे गतिः ॥ ८ ॥

इति श्रीमच्छंकराचार्यविरचितं आर्तत्राणगंगाधराष्टकस्तोत्रं संपूर्णम् ॥

---

## अथ शिवपंचाक्षरपंचकस्तोत्रम्-उपजातिवृत्तं

नागेंद्रहाराय त्रिलोचनाय भस्मांगरागाय महेश्वराय ॥
नित्याय शुद्धाय दिगंबराय तस्मै नकाराय नमः शिवाय ॥ १ ॥
मंदाकिनीसलिलचंदनचर्चिताय नंदीश्वरप्रमथनाथमनोहराय ॥
मंदारपुष्पबहुपुष्पसुपूजिताय तस्मै मकाराय नमः शिवाय ॥ २ ॥
शिवाय गौरीमदनाब्जवृंदसूर्याय दक्षाध्वरनाशनाय ॥
श्रीनीलकंठाय वृषध्वजाय तस्मै शिकाराय नमः शिवाय ॥ ३ ॥
वशिष्ठकुंभोद्भवगौतमाय मुनींद्रदेवार्चितशेखराय ॥
चंद्रार्कवैश्वानरलोचनाय तस्मै वकाराय नमः शिवाय ॥ ४ ॥
यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ॥
दिव्याय देवाय दिगंबराय तस्मै यकाराय नमः शिवाय ॥ ५ ॥

### अनुष्टुभ्वृत्तं

पंचाक्षरमिदं पुण्यं यः पठेच्छिवसन्निधौ ॥
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ६ ॥

इति श्रीमच्छंकराचार्यविरचितं शिवपंचाक्षरपंचकस्तोत्रं संपूर्णम् ॥

---

## अथ शिवमानसपूजाष्टकं-अनुष्टुभवृत्तं

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ॥
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥ १ ॥

निर्मलस्य कुतः स्नानं वासो विश्वोदरस्य च ॥
अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥ २ ॥
निर्विशेषस्य का भूषा कोऽलंकारो निराकृतेः ॥
निर्लेपस्य कुतो गंधः पुष्पं निर्वासनस्य च ॥ ३ ॥
निरंजनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः ॥
निजानंदैकतृप्तस्य नैवेद्यः किं भवेदिह ॥ ४ ॥
विश्वानंदयितुर्विष्णोः किं तांबूलप्रकल्पनम् ॥
स्वयंप्रकाशचिद्रूपो योऽसावर्कादिभासकः ॥ ५ ॥
गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः ॥
प्रक्षिणमनंतस्य प्रणामोऽद्वयवस्तुनः ॥ ६ ॥
वेदवाचामवेद्यस्य किंवा स्तोत्रं विधीयते ॥
बहिरंतश्च संपूर्णः कथमुद्वास्यते विभुः ॥ ७ ॥
इतीयं भावना यस्य दृढा भवति सर्वदा ॥
सैव तस्य परा पूजा संपूर्णफलदायिनी ॥ ८ ॥
इति श्रीमच्छंकराचार्यविरचितं शिवमानसपूजाष्टकं संपूर्णम् ॥

---

**अथ मानसपूजाप्रकाराष्टकं—अनुष्टुप् छंदः**

अहमेको विशिष्टोऽस्मीत्येवमावाहयेच्छिवम् ॥
आसनं कल्पयेत् पश्चात् स्वप्रतिष्ठार्थचिंतनम् ॥ १ ॥
पुण्यं पापं मनःसंगो स मे नास्तीति चिंतनम् ॥
पाद्यं समर्पयेद्विद्वान् सर्वकल्मषनाशनम् ॥ २ ॥
अनेककालविधृतमूलाज्ञानजलांजलिम् ॥
विसृजेदात्मलिंगस्य तदेवार्घ्यसमर्पणम् ॥ ३ ॥
ब्रह्मानंदादिकल्लोलकणकोट्यंशलेशिकम् ॥
पिबंतींद्रादय इति ध्यानमाचमनं मतम् ॥ ४ ॥
आत्मानंदजलेनैव लोकाः सर्वे परिप्लुताः ॥
अक्लेद्योऽहमिति ध्यानमभिषेचनमुच्यते ॥ ५ ॥
निरावरणचैतन्यप्रकाशोऽस्मीति चिंतनम् ॥
आत्मलिंगस्य सद्वस्त्रमित्येवं चिंतयेन्मुनिः ॥ ६ ॥
त्रिगुणात्माशेषलोकमालिकासूत्रस्वरूपिणा ॥
इति निश्चय एवैतदुपवीतं परं मतम् ॥ ७ ॥
आत्मनः सन्निधा प्रोक्ता कर्तव्या भावभावना ॥

नामरूपव्यतीतात्मचिंतनं नामकीर्तनम् ॥ ८ ॥
समस्तभ्रांतिविक्षेपराहित्येनात्मनिष्ठता ॥
समाधिरात्मनो नित्यं नमस्कारादि चिंतनम् ॥ ९ ॥
एवं वेदांतकल्पोक्तस्वात्मलिंगप्रपूजनम् ॥
कुर्वन्नामरणं वापि क्षणं वा सुसमाहितः ॥ १० ॥
सर्वदुर्वासनाजालं पादपांसुमिव त्यजेत् ॥
विधूयाज्ञानदुःखौघं मोक्षानंदं समश्नुते ॥ ११ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं मानसपूजाप्रकाराष्टकं संपूर्णम् ॥

---

## अथ गुरोरष्टकं-भुजंगप्रयातवृत्तं

शरीरं सुरूपं तथा वा कलत्रं यशश्चारु चित्रं धनं मेरुतुल्यम् ।
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किं ॥ १ ॥
कलत्रं धनं पुत्रपौत्रादि सर्वं गृहं बांधवाः सर्वमेतद्धि जातम् ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ २ ॥
षडंगादिवेदो मुखे शास्त्रविद्या कवित्वादि गद्यं सुपद्यं करोति ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ३ ॥
विदेशेषु मान्यः स्वदेशेषु धन्यः सदाचारवृत्तेषु मत्तो न चान्यः ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ४ ॥
क्षमामंडले भूपभूपालवृंदैः सदा सेवितं यस्य पादारविंदम् ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ५ ॥
यशो मे गतं दिक्षु दानप्रतापाज्जगद्वस्तु सर्वं करे यत्प्रसादात् ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ६ ॥
न भोगे न योगे न वा वाजिराजौ न कांतामुखे नैव वित्तेषु चित्तम् ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ७ ॥
अरण्ये न वा स्वस्य गेहे न कार्ये न देहे मनो वर्तते मे त्वनर्घ्ये ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ८ ॥
अनर्घ्याणि रत्नानि मुक्तानि सम्यक् समालिंगिता कामिनी यामिनीषु ॥
गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥ ९ ॥
गुरोरष्टकं यः पठेत् पुण्यदेही यतिर्भूपतिर्ब्रह्मचारी च गेही ॥
लभेद्वांछितार्थं पदं ब्रह्मसंज्ञं गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥ १० ॥
इति श्रीमच्छंकराचार्यविरचितं गुरोरष्टकं संपूर्णम् ॥

अथ ब्रह्मनामावलिस्तोत्रं अनुष्टुप्-छंदः
सकृच्छ्रवणमात्रेण ब्रह्मज्ञानं यतो भवेत् ॥
ब्रह्मनामावलीमाला सर्वेषां मोक्षसिद्धये ॥ १ ॥
असंगोहमसंगोहमसंगोहं पुनः पुनः ॥
सच्चिदानंदरूपोहमहमेवाहमव्ययः ॥ २ ॥
नित्यशुद्धविमुक्तोहं निराकारोहमव्ययः ॥
भूमानंदस्वरूपोहमहमेवाहमव्ययः ॥ ३ ॥
नित्योहं निरवद्योहं निराकारोहमच्युतः ॥
परमानंदरूपोहमहमेवाहमव्ययः ॥ ४ ॥
शुद्धचैतन्यरूपोहमात्मारामोहमेव च ॥
अखंडानंदरूपोहमहमेवायमव्ययः ॥ ५ ॥
शाश्वतानंदरूपोहं शांतोहं प्रकृतेः परः ।
प्रत्यक्चैतन्यरूपोहमहमेवाहमव्ययः ॥ ६ ॥
तत्वातीतः परात्माहं मध्यातीतः परः शिवः ॥
मायातीतः परं ज्योतिरहमेवाहमव्ययः ॥ ७ ॥
नामरूपव्यतीतोहं चिदाकारोहमच्युतः ॥
सुखरूपस्वरूपोहमहमेवाहमव्ययः ॥ ८ ॥
माया तत्कार्यदेहादि मम नास्त्येव सर्वदा ॥
स्वप्रकाशैकरूपोहमहमेवाहमव्ययः ॥ ९ ॥
गुणत्रयव्यतीतोहं ब्रह्मादीनां च साक्ष्यहम् ॥
अनंतानंतरूपोहमहमेवाहमव्ययः ॥ १० ॥
अंतर्यामिस्वरूपोहं कूटस्थः सर्वगोस्म्यहम् ॥
परमात्मस्वरूपोहमहमेवाहमव्ययः ॥ ११ ॥
निष्कलोहं निष्क्रियोहं सर्वात्मा च सनातनः ॥
अपरोक्षस्वरूपोहमहमेवाहमव्ययः ॥ १२ ॥
द्वंद्वादिसाक्षिरूपोहमचलोहं सदोदितः ॥
सर्वसाक्षिस्वरूपोहमहमेवाहमव्ययः ॥ १३ ॥
प्रज्ञानघन एवाहं विज्ञानघन एव च ॥
अकर्ताहमभोक्ताहमहमेवाहमव्ययः ॥ १४ ॥
निराधारस्वरूपोहं सर्वाधारोहमेव च ॥
आप्तकामस्वरूपोहमहमेवाहमव्ययः ॥ १५ ॥
तापत्रयविमुक्तोहं देहत्रयविलक्षणः ॥

अवस्थात्रयसाक्ष्यस्मि अहमेवाहमव्ययः ॥ १६ ॥
दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ ॥
दृग् ब्रह्म दृश्यं मायेति सर्ववेदांतडिंडिमः ॥ १७ ॥
घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च ॥
तद्वद् ब्रह्म जगत् सर्वमिति वेदांतडिंडिमः ॥ १८ ॥
अहं साक्षीति यो विद्याद्विविच्यैनं पुनः पुनः ॥
स एव मुक्तोऽसौ विद्वानिति वेदांतडिंडिमः ॥ १९ ॥
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥
अनेन वेद्यं सच्छास्त्रमिति वेदांतडिंडिमः ॥ २० ॥
अंतर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः ॥
ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम् ॥ २१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं ब्रह्मनामावलिस्तोत्रं संपूर्णम् ॥

---

## अथ आत्मानंदलहरीस्तोत्रं—शिखरिणीवृत्तम् ।

पुरे पौरान् पश्यन् नरयुवतिनामाकृतिमयान् ।
सुवेषान् स्वर्णालंकरणकलितान् चित्रसदृशान् ॥
स्वयं साक्षी द्रष्टेत्यपि च कलयंस्तैः सह रमन् ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १ ॥
वने वृक्षान् पश्यन् दलफलभरानम्रसुशिखान् ।
घनच्छायाछन्नान् बहुलकलकूजद्द्विजगणान् ॥
भजन् घस्रे रात्रौ अवनितलतल्पैकशयनो ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ २ ॥
कदाचित् प्रासादे क्वचिदपि च सौधेषु धनिनां ।
कदाकाले शैले क्वचिदपि च कूलेषु सरिताम् ॥
कुटीरे दांतानां मुनिजनवराणामपि वसन् ॥
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ३ ॥
क्वचिद्बालैः सार्धं करतलजतालैः सहसितैः ।
क्वचित् तारुण्यालंकृतनरनरीभिः सह रमन् ॥
क्वचिद् वृद्धैश्चिंताकुलितहृदयैश्चापि विलपन् ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ४ ॥

कदाचिद्विद्वद्भिर्विविदिषुभिरत्यंतविरतैः ।
कदाचित् काव्यालंकृतिरससालैः कविवरैः ॥
कदाचित् सत्तर्कैरनुमितिपरैस्तार्किकवरै- ।
र्मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ५ ॥
कदा ध्यानाभ्यासैः क्वचिदपि सपर्याविकसितैः ।
सुगंधैः सत्पुष्पैः क्वचिदपि दलैरेव विमलैः ॥
प्रकुर्वन् देवस्य प्रमुदितमनाः सन्नतिपरो ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ६ ॥
शिवायाः शंभोर्वा क्वचिदपि च विष्णोरपि कदा ।
गणाध्यक्षस्यापि प्रकटतपनस्यापि च कदा ॥
पठन् वै नामालिं नयनरचितानंदसलिलो ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ७ ॥
कदा गंगांभोभिः क्वचिदपि च कूपोत्थितजलैः ।
क्वचित् कासारोत्थैः क्वचिदपि कदुष्णैश्च शिशिरैः ॥
भजन् स्नानं भूत्या क्वचिदपि च कर्पूरनिभया ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ८ ॥
कदाचित् जागृत्यां विषयकरणैः संव्यवहरन् ।
कदाचित् स्वप्नस्थानपि च विषयानेव च भजन् ॥
कदाचित् सौषुप्तं सुखमनुभवन्नेव सततं ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ९ ॥
कदाप्याशावासाः क्वचिदपि च दिव्यांबरधरः ।
क्वचित् पंचास्योत्थां त्वचमपि दधानः कटितटे ॥
मनस्वी निःशंकः स्वजनहृदयानंदजनको ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १० ॥
कदाचित् सत्वस्थः क्वचिदपि रजोवृत्तिषु गत- ।
स्तमोवृत्तिः क्वापि त्रितयरहितः क्वापि च पुनः ॥
कदाचित् संसारी श्रुतिपथविहारी क्वचिदहो ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ ११ ॥
कदाचिन्मौनस्थः क्वचिदपि च वाग्वादनिरतः ।
कदाचित् सानंदं हसितभरसंत्यक्तवचनः ॥
कदाचिल्लोकानां व्यवहृतिसमालोकनपरो ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १२ ॥

कदाचिच्छक्तीनां विकचमुखपद्मेषु कवलान् ।
क्षिपंस्तासां क्वापि स्वयमपि च गृण्हन् स्वमुखतः ॥
तदद्वैतं रूपं निजपरविहीनं प्रकटयन् ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १३ ॥
क्वचिच्छैवैः सार्धं क्वचिदपि च शाक्तैः सह वसन् ।
कदा विष्णोर्भक्तैः क्वचिदपि च सौरैः सह वसन् ॥
कदा गाणापत्यैर्गतसकलभेदोऽद्वयतया ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १४ ॥
निराकारं क्वापि क्वचिदपि च साकारममलं ।
निजं शैवं रूपं विविधगुणभेदेन बहुधा ॥
कदाश्चर्यं पश्यन् किमिदमिति हस्यन्नपि कदा ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १५ ॥
कदाद्वैतं पश्यन्नखिलमपि सत्यं शिवमयं ।
महावाक्यार्थानामवगतिसमभ्यासवशतः ॥
गतद्वैताभानः शिव शिव शिवेत्येव विलपन् ।
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ १६ ॥
इमां मुक्तावस्थां परमशिवसंस्थां गुरुकृपा-
सुधापांगावाप्यां सहजसुखवाप्यामनुदिनं ॥
मुहुर्मज्जन् मज्जन् भजति सुकृतैश्चेन्नरवर-
स्तदा योगी त्यागी कविरिति वदंतीह कवयः ॥ १७ ॥
इति श्रीमच्छंकराचार्यविरचितात्मानंदलहरी समाप्ता ।

---

## ॥ भजनं शंकराचार्यकृतं ॥

ॐ नमः परमात्मने जय जय स्वामिन् श्रीनारायण करुणाकर करुणार्णव कारुण्यवारांनिधे कृपानिधान विष्णो पुंडरीकनयन हरे पुराणपुरुष पुरुषोत्तम ॥ १ ॥ जय जय जगन्नाथ जगन्मंगलालय जगदाधार जगज्जीवन जगन्निवास जगद्गुरो श्रीनिवास श्रीनिकेतन श्रीपते श्रीवल्लभ पतितपावन दीनोद्धरण वांछाकल्पतरो दुःखीजनबांधव ॥ २ ॥ जय जय परमेश्वर परमात्मन् परमानंद परमयोगेश्वर परनिधान परममंगल परमपूज्य परमपावन परमध्येय परमतत्व परमश्रेयः परमकल्याण परमपद परमाधार परमगते परब्रह्मन् ॥ ३ ॥ जय जय श्रीवासुदेव चतुरात्मन् सर्वांतर्यामिन् सर्वाध्यक्ष सर्वज्ञ सर्वभाविन् सर्वद सर्वस्व सर्वेश्वर सर्वतोमुख सर्वशक्ते ॥ ४ ॥ जय जय गोविंद गरुडारूढ गदाधर हृषीकेश गर्वाप-

हरिन् सर्वकरुणात्मन् गोकुलोत्सव कृष्ण देव भो कमलाकांत कमलनाभ कमलवदन कमलनयन कालीयमर्दन कंसवंशाटवीदहन दावानलप्राशन गोपिकानयनपानीयपात्र त्रिभुवनकमनीयरूप मुरलीवादन ॥ ५ ॥ जय जयानंत धरणीधर त्रिविधपरिच्छेदशून्य अचिंत्यमहिमन्नचिंत्यैश्वर्य पूर्णभगवन्नप्रमेयपराक्रमाचिंत्यशक्तेऽनंतशक्त्यधीशानंत विभावनदुर्निबोधभावागणितगुणगणार्णव त्रिगुणाधीश गुणातीत सर्वानंदकदंब जगदानंदकंद सांद्रानंदविग्रह ॥ ६ ॥ जय जयानुपमेयप्रभावातुल्यातिशयातर्क्यागोचराखिलकोटिब्रह्मांडाधीशाखिलजीवनिकेतन भक्तानुकंपिन् भक्तिभुक् भक्त्येकलभ्य भक्तवत्सल योगारूढ योगगम्य योगप्रिय योगात्मन् योगभाविन् योगानंद सदसदात्मक ॥७॥ जय जय विज्ञानघन सच्चिदानंद स्वप्रकाशानुभवैकवेद्याजादमनाचिंत्यलीलाविचित्रलीलाकदंब दुर्लक्ष्यागम्य भाव्यविनोद सर्वाश्चर्यमयाप्रमेयविलास कालात्मन् कालभुक् कालसूत्रधृक् ॥ ८ ॥ जय जय लावण्यार्णव सूर्यकोटिप्रतीकाश शुकनारदादिकास्वादितचरणसरोजप्रेममकरंद प्रणताशयक्लेशनाशन सदाकल्याणकर त्रिविधतापोपशमन योगनिरूढभाव कैवल्यपते कैवल्यनिधान शुद्धसत्त्वात्मकावतार श्रीवत्सांकित ध्येयलिंग कौस्तुभोद्भासितलक्षाकार भक्तभावानुगतपरधामन् सर्वैकलाधीश ॥ ९ ॥ जय जय वेदांतवेद्य वेदाधीश वेदातीत वेदगर्भ वेदसागर वेदात्मन् यज्ञेश यज्ञभुक् यज्ञमय विश्वेश विराडात्मन् निरीह सर्वात्मन् गोविंद मुकुंद वैकुंठ वैकुंठपते जनार्दन ॥ १० ॥ जय जय श्रीराम दूर्वादलश्याम जानकीप्राणनाथ सर्वधर्मसत्यधर्ममूर्ते सर्वविद्यात्मकाद्वय सर्वश्रेयोबीजात्मनामधेय नृहरे कृपानाथ अशरणशरण्य शरणागतव्रजपंजर तीर्थास्पद अद्वंद्वमहामायिन् महामायाधीश मायातीत मायामृगीनर्तक सदामहोदय उन्मीलनविद्यास्मृते ॥ ११ ॥ जय जय देवाधिदेव देवदेव महादेव महायोगिन् महाभोगिन् सौभाग्यसीमन् सकलाद्भुतकेलिसीमन् आत्माराम पूर्णकाम कारुण्यसिंधो जगदेकबंधो सदाविधान लक्ष्मीनिधान आर्तत्राण भक्तजीवनाधार सर्वाभीष्टसुखप्रद आधिव्याधिमहादुःखोपशमन पवित्रकीर्ते हतमानसार्ते सदसदात्मक ॥ १२ ॥ जय जय भक्तप्रेमसरोरुहराजहंस दुर्धर्षप्रताप इंदिराचित्तवल्लिविहंगम प्रसन्नसत्यानंद चातुर्यकर भवलुंठनकोविद भवविरिंचिनमस्कृतपदांबुज कमलाकरलालितपादसरोरुह भक्तानुरागशृंखलाबद्धचरणारविंद ध्रुवप्रह्लादादिभक्तवृंदाभयप्रद निबिडाज्ञानविदारण भाव्योदयनिर्वलिकभावग्राह्य प्रणतहृदयकंदरास्थितकटिवर अकिंचनजनप्रिय ॥ १३ ॥ जय जय परमकारुणिक दीनानाथैकशरणानाथबंधो सौजन्यसिंधो भुवनाभिराम निर्वाणपदपादांभोज विश्वमोहनाप्रतिहतप्रहारामोघवीर्य मतातीत प्रबोधश्रेयःसाध्यावलोकन विचित्राद्भुतानाद्य परमकौतुहलरचनाचार्याखिलसूत्रधारिन् सदुपकारिन् सत्यकारकात्मकसर्वोपकारिन् ॥ १४ ॥ जय जय चक्रधर

कंबुकंठ पीतांबरधर घनश्यामद्युते किरीटकुंडलकटककंकणकटिसूत्रनलप्रहारनूपुरदिव्यरत्नालंकृत कुंदमंदारपारिजातगंधाढ्य तुलसीनानाकुसुमविराचितवनमालाविभूषित करिकराकृतिचारुचतुर्भुज प्रसन्नवदनांभोज कृपार्द्रस्फुरितनयनारविंदातिकोमलारुणसुशोभितकरचरण श्वेतातपत्रचामरसिंहासनगीतनृत्यवाद्योपसेव्यमान ॥ १५ ॥ जय जय श्रीमहाराजाधिराज नंदसुनंदगरुडादिपार्षदमुख्योपसेव्यमान निगमशेषशारदादिभिः स्तूयमान भक्ताद्यनंतश्रीसदाभोग्यमानाष्टमहासिद्धिवरण्यादितत्ननानाशक्त्यादिभिः क्रीडमान

सर्वभावसदाभजनीय सद.

सदा नमस्करणीय सदाभिवंद्य जय जय स्वामिन् प्रसीद प्रसीद प्रसीद महाविष्णो ॥ १६ ॥

॥ श्लोक ॥

अनेन यः सदा स्तौति भगवंत भवांतकं ॥
जायते निर्मला भक्तिः कृष्णे सर्वार्थसाधके ॥ १७ ॥

समाप्तं

---

## प्रबोधसुधाकरे अष्टादशं प्रकरणम्.*

### आर्यावृत्तं

श्रुतिभिर्महापुराणैः सगुणगुणातीतयोरैक्यम् ।
यत् प्रोक्तं गूढतया तदहं वक्ष्येतिविशदार्थम् ॥ १ ॥
प्रेयः पुत्राद् वित्तात् प्रेयोऽन्यस्माच्च सर्वस्मात् ।
अन्तरतरोऽयमात्मेत्युपनिषदः सत्यताभिहिता ॥ २ ॥
भूतेष्वन्तर्यामी ज्ञानमयः सच्चिदानन्दः ।
प्रकृतेः परः परमात्मा यदुकुलतिलकः स एवायम् ॥ ३ ॥
ननु सगुणो ह्यनन्तनुरत्तथैकाविकासश्च ।
स कथं भवेत् परात्मा प्राकृतवद् दृश्यतेषु यतः ॥ ४ ॥
इतरे दृश्यपदार्था लक्ष्यन्तेनेन चक्षुषा सर्वे ।
भगवाननया दृष्ट्या नवेक्ष्यते ज्ञानगम्यः ॥ ५ ॥
साक्षाद् यथैकदेशे वर्तुलमुपलभ्यते रवेर्बिम्बम् ।
विश्वं प्रकाशयति तत् सर्वैः सर्वत्र दृश्यते युगपत् ॥ ६ ॥

---

* भाग ४१ वे पृष्ठांत प्रबोधसुधाकराचें १८ वें व १९ वें हीं प्रकरणें छापिलीं आहेत. त्यांहून ज्यास्त पद्यें ज्यांत आहेत अशीं हीं दोन प्रकरणें एका पोथींत आढळल्यामुळें तीं एथें पुनः छापिलीं आहेत.

यद्यपि साकारोऽयं तथैकदेशीव भाति यदुनाथः ।
सर्वगतः सर्वात्मा तथापि सोऽयं चिदानन्दः ॥ ७ ॥
एको भगवान् रेमे युगपद् गोपीष्वनेकासु ।
अथ वा देहे गेहे जनकश्रुतदेववर्ययोर्युगपत् ॥ ८ ॥
अथवा कृष्णाकारां स्वचमूं दुर्योधनोऽपश्यत् ।
तस्माद् व्यापक आत्मा भगवान् हरिरीश्वरः कृष्णः ॥ ९ ॥
वक्षसि यदा जघान श्रीवत्सः श्रीपतेः स किं द्वेषः ।
भक्तानामसुराणामप्यन्येषां फलं सदृशम् ॥ १० ॥
तस्मान्न कोऽपि शत्रुर्नो मित्रं नाप्युदासीनः ।
नृहरेः सन्मार्गस्थः सफलः शाखीव यदुनाथः ॥ ११ ॥
लोहशलाकानिवहैः स्पर्शाश्मनि भिद्यमानेऽपि ।
स्वर्णत्वमेति लोहं द्वेषादपि विद्विषां तथा प्राप्तिः ॥ १२ ॥
नन्वात्मनः सकाशादुत्पन्ना जीवसन्ततिश्चायम् ।
जगतः प्रियतम आत्मा तत्प्रकृतेर्न सम्भवति ॥ १३ ॥
वत्साहरणावसरे पृथग् वयोरूपवासनाभूषान् ।
हरिरजमोहं हर्तुं सवत्सगोपान् विनिर्ममे स्वस्मात् ॥ १४ ॥
अग्नेर्यथा स्फुलिङ्गाः क्षुद्रा व्युच्चरन्तीति ।
श्रुत्यर्थं दर्शयितुं स्वतनोरतनोत् सजीवसहदेहम् ॥ १५ ॥
यमुनातीरनिकुञ्जे कदाचिदपि वत्सकान् चारयति ।
कृष्णे तथार्यगोपेषु च सत्सु गाश्चारयत्सु स्वारात् ॥ १६ ॥
वत्सं निरीक्ष्य दूराद् गावः स्नेहेन सपरिभ्रान्ताः ।
तदभिमुखं धावन्त्यः प्रययुर्गोपैश्च दुर्वार्याः ॥ १७ ॥
प्रस्रवभरेण भूयः स्नुतस्तनीः प्राप्य पूर्ववत्सानि ।
पृथुरसनया लिहन्त्यस्तर्णकवन्त्योऽप्यपाययन् प्रमुदा ॥ १८ ॥
गोपा अपि निजबालान् जगृहुर्मूर्धानमाघ्राय ।
इत्यमलौकिकलोभस्तेषांस्तत्र क्षणं ववृधे ॥ १९ ॥
गोपा वत्सानि यथापूर्वं कृष्णाभिकान्यभवन् ।
तेनात्मनः प्रियत्वं दर्शितमेतेषु कृष्णेन ॥ २० ॥
प्रेयः पुत्राद् वित्तात् प्रेयोऽन्यस्माच्च सर्वस्मात् ।
अन्तरगतोऽयमात्मेत्युपनिषदः सत्यताभिहिता ॥ २१ ॥
उच्चावचेषु भूतेष्वात्मा सम एव वर्तते तु हरिः ।
दुर्योधनेऽर्जुने वा तरतमभावं कथं गतवान् ॥ २२ ॥

बाधिरान्धपङ्गुमूका दीर्घाः खर्वाः सुरूपाश्च ।
सर्वे विधिना दृष्टाः सगोपवत्साश्चतुर्भुजास्तेन ॥ २३ ॥
भूतसमत्वं नृहरेः समो हि मशकेन नागेन ।
लोकैः समस्त्रिभिर्वेत्युपनिषदा भाषितं साक्षात् ॥ २४ ॥
आत्मा तावदभोक्ता तथैव ननु वासुदेवश्चेत् ।
नानाकेतवयत्नैः परयुवतीभिः कथं रेमे ॥ २५ ॥
सुन्दरमभिनवरूपं कृष्णं दृष्ट्वा विमोहिता गोप्यः ।
तमभिलषन्त्यो मनसा कामाद् विरहव्यथां प्रापुः ॥ २६ ॥
गच्छन्त्यस्तिष्ठन्त्यो गृहकृत्यपराश्च भुंजानाः ।
कृष्णं विनान्यविषयं समक्षमपि जातु नाविन्दन् ॥ २७ ॥
दुःसहविरहभ्रान्त्या स्वपतीन् द्रुपदस्तहन् नरांश्च पशून् ।
हरिरयमिति सुप्रीताः सरभसमालिंगयां चक्रुः ॥ २८ ॥
कापि च कृष्णायन्ती कस्याश्चित् पूतनायन्त्याः ।
अपिवत् स्तनमिति साक्षाद् व्यासो नारायणः प्राह ॥ २९ ॥
तस्मान्निजनिजदयितान् कृष्णाकारान् व्रजस्त्रियो वीक्ष्य ।
आपुरमृतमिति तासामन्तर्यामी हरिः साक्षी ॥ ३० ॥
परमार्थतो विचारो गुडतन्मधुरत्वदृष्टान्तात् ।
नश्वरमपि नरदेहं परमात्माकारतां याति ॥ ३१ ॥
किं पुनरनन्तशक्तेर्लीलावपुरीश्वरस्येह ।
कर्माण्यलौकिकानि स्वमायया विदधतो नृहरेः ॥ ३२ ॥
मृद्भक्षणेन कुपिता विकासितवदनां स्वमातरं वक्त्रे ।
विश्वमदर्शयदखिलं किं पुनरयं विश्वरूपोसौ ॥ ३३ ॥
इति प्रबोधसुधाकरे सगुणनिर्गुणयोरैक्यं नामाष्टादशं प्रकरणम् ॥

## अथोनविंशं प्रकरणम्.

### आर्यावृत्तं.

विषविषमस्तनयुगलं पाययितुं पूतना गृहं प्राप्ता ।
तस्याः पृथुभायायासीत् कृष्णार्पणं देहः ॥ १ ॥
अनयत् पृथुतरशकटं निजनिकटं तं कृतापराधमपि ।
कण्ठाश्लेषविशेषादवधीद् वात्यासुरं कृष्णः ॥ २ ॥
यमलार्जुनौ तरुवरौ द्रावुन्मूल्योखलुले निरस्त्रिन्नौ ।
रिङ्गन्नङ्गणभूमौ स्वालयमप्रापयन्नृहरिः ॥ ३ ॥

नित्यत्रिदशद्वेषी येन च मृत्योर्वशीकृतः केशी ।
काकः कोऽपि वराको बकोऽप्यशोकं गतो लोकम् ॥ ४ ॥
गोवत्सगोपनिकरानुदरे परिपीडयन्तमपि वेगात् ।
पृथुतरमुरगेश्वरं [illegible] भगवान् ॥ ५ ॥
पीत्वारण्यहुताशं हताशमकरोत् तमोजसां निहतः ।
दग्धान् मुग्धानखिलान् जुगोप गोपान् कृपासिन्धुः ॥ ६ ॥
गुप्तं गोकुलमाकुलमनिलतडिद्वर्षणैः कृष्णः ।
सप्ताहमेकहस्ताद् गोवर्धनमुद्धारोच्चैः ॥ ७ ॥
हत्वा मुमोच भवतो मृधेनुगं धेनुकं दनुजम् ।
अकरोत् कालियमबलं व्यालेशं गलगलद्गरलम् ॥ ८ ॥
यद्वापुरस्य भार्याः पन्नगमस्मात् तदत्र किं चित्रम् ।
तदगण्यपुण्यनिचयैर्मृच्छद्ब्रह्मागमद् गेहम् ॥ ९ ॥
वासोलोभाकुलितं धावद्रजकं शिलातलैर्हत्वा ।
विस्मृत्य तदपराधं विकुंठवासोऽर्पितस्तस्मै ॥ १० ॥
त्रेधा वक्रशरीरामतिलम्बोष्ठीं स्खलद्वपुर्वचनाम् ॥
[illegible] ॥ ११ ॥
[illegible]
नित्यप्रतिकूलत्वात् कोदण्डं दण्डयामास ॥ १२ ॥
निहतः पपात हरिणा हरिचरणाग्रे कुवलयापीडः ।
तुङ्गोन्मत्तमतङ्गः पतङ्ग इव दीपकस्याग्रे ॥ १३ ॥
युद्धमिषात् सह रङ्गे श्रीरङ्गेनाङ्गसङ्गमं प्राप्य ।
मुष्टिकचाणूराख्यौ ययतुर्निश्रेयसं सपदि ॥ १४ ॥
देहकृतादपराधाद् वैकुण्ठाकुण्ठितान्तरात्मानम् ।
यदुवरकुलावतंसः कंसं विध्वंसयामास ॥ १५ ॥
नृहरिसुदर्शनयोगाद् धारातीर्थे निमज्जते भगवान् ।
प्रददावनवद्यं यः सद्यश्चैद्याय सायुज्यम् ॥ १६ ॥
उपजाति–हिरण्यकेशो रजसो विसार इत्यालपद्भिर्मुनिभिर्निरुक्तम् ।
दुश्चक्रवादासुराभिघातात् कृष्णस्य माहात्म्यमतीव रम्यम् ॥ १७ ॥
उपजाति–मूर्तित्रयं यस्य विभोः स्वरूपं तत्र प्रमाणं भगवद्वचांसि ।
स विश्वभृद्विश्वमयः परात्मा कृष्णः परब्रह्म किमत्र चित्रम् ॥ १८ ॥
आर्या—मीनादिभिरवतारैर्निहताः सुरविद्विषो बहवः ।
ते ययुरासुरयोनिं तत्र च मोक्षस्य का वार्ता ॥ १९ ॥

यदुनन्दननिहतास्ते पुनरपुनर्भवं प्राप्ताः ।
तस्मादवताराणामन्तर्यामी प्रवर्तते कृष्णः ॥ २० ॥

शार्दूलवि०-ब्रह्माण्डानि बहूनि पङ्कजभवान् प्रत्यण्डमत्यद्भुतान् ।
गोपान् वत्सयुतानदर्शयदजं विष्णूनशेषांश्च यः ।
शम्भुर्यच्चरणोदकं स्वशिरसा धत्ते स मूर्त्तित्रया-
दुत्कृष्टः पृथगस्ति कोप्यविकृतः सच्चिन्मयो नीलिमा ॥ २१ ॥

शिखरिणी—कृपापात्रं यस्य त्रिपुररिपुरम्भोजजनिः ।
सुतो जन्होः कन्या चरणयुगनिर्णेजनजलम् ॥
अपादानं यस्य त्रिभुवनपतित्वं वपुरपि ।
प्रदानं सोऽस्माकं जयति कुलदेवो यदुपतिः ॥ २२ ॥

स्रग्धरा-मायाहस्तेऽर्पयित्वा यदि भरणकृते मोहमूलोद्भवं मां ।
मातः कृष्णाभिधाने चिरसमयमुदासीनभावं गतासि ॥
कारुण्यैकाब्धिवासे सकृदपि वदनं नेक्षसे यन्मदीयं ।
तत् सर्वज्ञे न कर्तुं प्रभवति भवती किं नु मूलस्य शान्तिः ॥ २३॥

शिखरिणी-उदासीनस्तब्धः सततमगुणः सङ्गरहितो ।
भवांस्तातः का मे परमिह भवेज्जीवनगतिः ॥
अकस्मादस्माकं न यदि कुरुषे स्नेहमथ तद् ।
इहस्व स्वीयान्तर्विमलजठरेऽस्मान् पुनरपि ॥ २४ ॥

स्रग्धरा-लोकाधीशे त्वयीशे किमिति भवभवेदना स्वाश्रितानां ।
सङ्कोचः पङ्कजानां किमिह समुदिते मण्डले चण्डरश्मेः ॥
भोगः पूर्वार्जितानां भवति भुवि नृणां कर्मणां चेदवश्यं ।
तन्मे दुष्टैरदृष्टैर्ननु दनुजरिपोर्लर्जितं निर्जितं ते ॥ २५ ॥

शार्दूलविक्रीडितं.

*नित्यानन्दसुधानिधेरधिगतः सन्नीलमेघः सता-।*
मौत्कण्ठयप्रबलप्रभंजनभरैराकर्षितो वर्षति ।
विज्ञानामृतमद्भुतं निजवचो धाराभिरारादिदं ।
चेतश्चातक चेन्न वाञ्छसि तृषाक्रान्तोपि सुप्तोसि किम् ॥ २६ ॥
चेतश्चञ्चलतां विहाय पुरतः सन्धाय कोटिद्वयं ।
तत्रैकत्र निधेहि सर्वविषयानन्यत्र च श्रीपतिः ।
विश्रान्तिर्हितमप्यहो क्व नु तयोर्मध्ये तदालोच्यतां ॥
युक्त्या वानुभवेन यत्र परमानन्दश्च तत् सेव्यताम् ॥ २७ ॥
पुत्रात् पुत्रमय स्त्रियोन्यपुवर्ती वित्तात् तथान्यध्दनं ।

भोज्यादिष्वपि तारतम्यवशतो नालं प्रभुत्कण्ठया ॥
नैवम् यदुनायके समुदिते चेतस्यनन्ते विभौ ।
सान्द्रानन्दसुधार्णवे विहरति स्वैरं यतो निर्भयम् ॥ १८ ॥
काम्योपासनयार्थयन्त्यनुदिनं केचित् फलं स्वेप्सितं ।
केचित् स्वर्गमथापवर्गमपरे योगादियज्ञादिभिः ॥
अस्माकं यदुनन्दनाङ्घ्रियुगलध्यानावधानार्थिनाम् ।
किं लोकेन धनेन किं नृपतिना स्वर्गापवर्गैश्च किम् ॥ १९ ॥

आर्या.

आश्रितमात्रं पुरुषं स्वाभिमुखं कर्षति श्रीशः ।
लोहमपि चुम्बकाश्मा सम्मुखमात्रं जडं यद्वत् ॥ २० ॥
अयमुत्तमोयमधमो जात्या रूपेण संपदा वयसा ।
श्लाघ्योऽश्लाघ्यो वेत्यं न वेत्ति भगवाननुग्रहावसरे ॥ २१ ॥
अन्तःस्वभावभोक्ता ततोऽन्तरात्मा यथा महामेघः ।
खदिरश्चम्पक इव वा प्रवर्षणं किं विचारयति ॥ २२ ॥
यद्यपि सर्वत्र समस्तस्यापि नृहरिर्निजाश्रिते पुरुषे ।
ममताभिमानमुच्चैर्वहति विवस्वान् यथोत्पले जगति ॥ २३ ॥
साक्षान्न किमपि दत्ते न वदति मिष्टं तथाप्येते ।
भक्ताः परमानन्दे रमन्ति सदयावलोकेन ॥ २४ ॥
सुतरामनन्यशरणाः क्षीराद्यमन्तरा यद्वत् ।
केवलया स्नेहदृशा कौर्म्यो तनया प्रजीवन्ति ॥ २५ ॥
यद्यपि गगनं शून्यं तथापि जलदामृतांशुरूपेण ।
चातकचकोरनाम्नो दृढभावात् पूरयत्याशाम् ॥ २६ ॥
तद्वद्भजतां पुंसां दृग्वाङ्मनसामगोचरोऽपि हरिः ।
कृपया फलत्यकस्मात् सत्यानन्दामृते विपुले ॥ २७ ॥

इति प्रबोधसुधाकरेनुग्राहिकं प्रकरणमूनविंशम् .

---

## रामस्तवः औपच्छंदसिकं वृत्तं.

रघुनाथ दयां कुरु प्रपन्ने मयि दीनेलसमेनमद्य मुंच ।
सदयः सदयत्वमेव किं ते मुनिगीतं न यशः श्रुतं पवित्रं ॥ १ ॥
असदंतकराः खराः शरास्ते यमदंडात् सततं सतां सहायाः ।
किमदो न मदोनयन्मनोभूरतनुः सर्वगामिना कृतोपि ॥ २ ॥
ग्रसते त्वदिपुर्द्विषं न राहुः स तथेदुं कवयो नरेश्वराहुः ।
नहि रोपमलं सतामलं का सरूपो हंत धियो न राम लंका ॥ ३ ॥
यदि वानरसख्यमेवमीड्यं किमु वक्तव्यमहो नरैस्तदेभिः ।
अधिसंसृतिसिंधु सेतुमेकं कुरु भोः किं स्वकृते कृतेन तेन ॥ ४ ॥
विरहे न पितापि सांत्वितो यो विलपन्नेव मृतस्त्वदेकचित्तः ।
अहमज्ञतमस्तमद्य याचे तृणवत् त्यक्तसदंगनानुजं त्वां ॥ ५ ॥
न हि तन्न हितं नतैर्यदीश स्मृतमेकं खलु तावकं पदाब्जं ।
अमरैर्भ्रमरैरिवातिलुब्धैः परिपीतं मुनिभिश्च राजहंसैः ॥ ६ ॥
न फलं विषयाः फलं तु दास्यं तव जंतो वरमत्र जीवनस्य ।
तदृतेन हतेरिवास्य राम क्षणमप्युच्छ्वसितं सतां प्रशस्यं ॥ ७ ॥
दुरितोदधितो दरप्रयत्नान्मुनिदारान् दयया यदुज्जहार ।
पदपद्मरजस्तवास्तु तन्मे नतरक्षाविकलं कलंकनुत्यै ॥ ८ ॥
विषयप्लवगैश्चलस्वभावैः सह सख्यं गतमेनमात्मतुल्यं ।
रहितं प्रिययापि शुद्धवृत्त्या बत सत्या व्यसनेऽव मां नृपालं ॥ ९ ॥
वितर त्वमृतं करैरनेकैर्न जडात्मानमहं भजेपि तप्तः ।
अमृतं तव नाम पातुमीहे यदभूच्छूलभृतोपि तापशांत्यै ॥ १० ॥
बहवः सवितुः कुले प्रसूतास्त्वमुरुस्तेम्य उतापि गोत्रकर्तुः ।
द्विकरोप्यकरोः समूलमेको जगतस्तापतमक्षयं स्वयं यत् ॥ ११ ॥
सुधियो युधि योधमूर्धरत्नं विकिरंतं विशिखानरिष्वसून् ।
करुणं तरुणं पुराणमाहुर्नरमीशं कथमुग्रमक्रुधं त्वां ॥ १२ ॥
परिपालय मामनाथमार्तं भवरोगेण न सोढवेदनेन ।
सुखयत्युदितश्चकोरमिंदुः कमलं भानुरयो मयूरमब्दः ॥ १३ ॥
यशसा च जनेन मत्सदृक्षाः शुचिनोदारतरेण निस्तुलेन ।
विपदोत्र समुद्धृताः प्रभूताः किमिदं राघव विस्मृतोहमेकः ॥ १४ ॥
अहिपूग्रमरं गरं तमस्ते न परोत्कर्षसहाः सुराः समस्ते ।
भुवने परिदर्शितः समस्ते समनुक्रोशभरः प्रभो नमस्ते ॥ १५ ॥

कृपया नृप याः स्वधाम नीता विरहं सोढुमनिश्चुराः प्रजास्ताः ।
अपि भो मयि भोगलालसे तत् कठिनत्वं त्वयि वा किमत्र युक्तं ॥ १६ ॥
यशसा विमलेन सम्मतेनापि च गीतेन मुनीश्वरेण तेन ।
कथमार्यमुखात् तदादृतोहं परिपीतेन न पावितोस्मि पापः ॥ १७ ॥
बलिना स्वबलेन राहुणेंदोरिव तेजो यशसस्तवापि पीतं ।
कथमेवमहं ब्रवीम्यशंकं बुधशिष्योपि च सत्स्वहो विगीतं ॥ १८ ॥
यशसाप्यचिकित्स्य एक आहोस्विदहं निस्तुल एवमेव दोषी ।
न सतां मतमेतदप्यसारं विपहेद्‌ धाम तमो न गाढमार्कं ॥ १९ ॥
कुरु यत्सदृशं व्रतस्य लोके यशसश्चापि सुविश्रुतस्य तस्य ।
किमतोधिकमेष दीनबंधो गतिमंभो गहने न वेत्ति दीनः ॥ २० ॥
शमनं न हि पश्यति प्रभो त्वां शमनं तं लभते जनः प्रपन्नः ।
असकृच्छ्रुतमित्यमार्यवक्त्रात् सदसि स्वादुवचः सतां सुधातः ॥ २१ ॥
अनवद्यगुणार्य राम भोः किं बहुनोक्तेन पदोपकंठमेत्य ।
स्वदृशः सदृशः प्रभो भवेद्यः कृपणे त्वं मयि तं कुरु प्रसादं ॥ २२ ॥
नमदुद्धरणं सुदुष्करं ते मृतमुज्जीवयतः शिशुं द्विजातेः ।
दृषदप्यतिसुंदरी कृतैव प्रभुणा किं न वचः श्रुतं शुनोपि ॥ २३ ॥
यशमाहृतमिंगितज्ञमाज्ञाकरमप्याकुलयंति मामनाथं ।
अनयं जनयंति राम कामप्रमुखा हंत कथं भवत्पुरेपि ॥ २४ ॥
न जने भजनेलसः प्रमादीत्यपटुर्वेत्यद्य द्वयं मयीश ।
न हितैरहितैरयं न बद्धः कथमेवं सति किंकरः करोतु ॥ २५ ॥
द्विषता दशकंधरेण रुद्धा पुरि शुद्धा दयितापि सा तदानीं ।
भवतो भजनं किमीश चक्रे स च नक्रेण वशीकृतः करींद्रः ॥ २६ ॥
चरणस्मरणं सदा न दासस्तव कर्तुं क्षम उत्सुकोप्यभाग्यः ।
सुतपौत्रमुखानुवर्तिना यन्मनसांतर्बत यंत्रितो स्वतंत्रः ॥ २७ ॥
स्मरण शरणं ममेति युष्मच्चरणाब्जस्य न चान्यदस्ति जाने ।
बहिरंतरपि द्विषन्निरुद्धोप्यहमार्तार्तिहरं क्वचित् स्मरामि ॥ २८ ॥
द्विरदे चिरदेवनाभितप्तेत्युचितश्चेत् करुणाकटाक्षपातः ।
पद एव स शत्रुणा गृहीतः प्रबलैः षड्भिरहं तु सर्वतोरि ॥ २९ ॥
बहुवारमहं द्विषद्भिरुग्रैरवहे पातित एव गर्भगर्ते ।
शृणु देव तदेव कुम्भमातोभितकल्पानधुनापि तत्र वर्ते ॥ ३० ॥
द्विषतोप्यनुजे कृतः प्रपन्नेथ च सुग्रीववलीमुखे प्रसादः ।
दरसादरसात्वया तथा मय्यपि दीने स सदार्यकार्य एव ॥ ३१ ॥

रिपुभिः कृतगंजनं जनं कः कृपणं स्वं शरणं भियातमार्यः ।
सदयः परिपालयेन्न शक्तः स्वनुरक्तः सुकृते नये यशोर्यी ॥ ३२ ॥
कुपितोसि किमागसा नसा धुः कृतमंती प्रणते जनेऽप्रसन्नः ।
नमनादितरन्निसर्गसिद्धं किमिवार्येश न पापिनामसन्नः ॥ ३३ ॥
शरदा वरदाधिराज कृत्स्नः पयसो वार्यत एव मंक्षु पंकः ।
तव तूदितया दशातमस्कः क्रियते चंद्रिकयेव सर्वरंकः ॥ ३४ ॥
पिबतोखिलतापपापहंत्री तव कीर्तिर्द्रुतमेव सत्सुधातः ।
अपि चेश शिरोपिदेवतातः श्रुतमुच्चैरिति किं न सत्सुधातः ॥ ३५ ॥
नहि मामहिमावहं विभो मां जनमेवंविधमन्यमप्यवद्यं ।
अयसा हि विना सुवर्णहेतोर्न गुणः स्पर्शमणेः प्रसिद्धिमेति ॥ ३६ ॥
सुकृतं न किमस्य पंकमग्नामबलां गां विपदः समुद्दिधीर्षोः ।
मृतिभीतमरिं तृणास्यमाजौ जयिनस्त्वादृश एव पालयंति ॥ ३७ ॥
करुणावरुणालय प्रभो स्यान्मम किं स्वर्जनुषा जडेन तेन ।
तरुणा तरुणार्कतप्तमूर्तेः सरसाल्पेन गजस्य वा भवेत् किं ॥ ३८ ॥
शिलया कपिभिर्निशाचरेण द्विजराजेन महेश्वरेण सेव्यः ।
त्वमितीश भवंतमाश्रितोहं ससुरा मुक्तिमितास्त्वयैव देव्यः ॥ ३९ ॥
सहितं प्रियया श्रियात्तमूर्त्या महितं भूपमुनींद्रदेववृंदैः ।
रहितं विगुणैर्गुणैर्युतं कं स्वहितं त्वाद्य विनान्यमाश्रयामि ॥ ४० ॥
अयि तं श्रित एष इंदिराया दयितं त्वामहमात्ममीश्वराणां ।
मयि तंत्र इहाप्यशर्महासं शयितं तर्तुमघाब्धिमद्य विश्वं ॥ ४१ ॥
मनसि स्मृतिरस्तु तापहंत्री वदने नाम भवामयौषधं च ।
श्रवसी च वशीकरोतु कीर्तिस्तव सीतादयितेति मे मनीषा ॥ ४२ ॥
वरदेश्वर देव देहि दास्यं दयया दर्शय पादपद्ममाशु ।
अयनं नयनं विपक्ष्मपातं तव गोर्वत्सवदेव पश्यतीश ॥ ४३ ॥
रदशाता दृषदं पदेन युक्तं दयितां भूमिभुवं सदा हृदा ते ।
बत बाहुयुगेन धन्व चेशो कुत आतं कठिनत्वमार्यदर्म्या ॥ ४४ ॥
न जनं व्यजनं प्रियागृहीतं सरसोशीरसरोजपत्रकॢप्तं ।
सुखयत्यतितापतप्तमातोत्तम ते नाम यथा कथासु पीतं ॥ ४५ ॥
सततं यदि दीनबंधुरेतद्वदु ते संमतमात्मनाम राम ।
अयि किं मयि किंकरेपि दीने करुणां कर्तुमियान् कुतो विलंबः ॥ ४६ ॥
नवतामरसेन भृंगपोतस्तृषितो राम यथा व्ययाहरेण ।
भवतामरसेव्यपादुकेन स्वगुणैस्तोषकरैर्वशीकृतोहं ॥ ४७ ॥

तव नाम भवेद्गतेः सुदूरादपि चेत् कर्णमुपैति सज्जनेन ।
उदितं मुदितं करोति चेतो दयिताया इव वाचिकं प्रियस्य ॥ ४८ ॥
धनिनः सुखिनस्तथैव नाम्ना परतः प्राकृततो धनादनित्यात् ।
धनिका न निकाममोदपात्रं जठराद्बिभ्यति ये स्वकादपीश ॥ ४९ ॥
भवतो भवतोपदेन नाम्ना भिदुरेणामृतगर्वपर्वतस्य ।
भवतो नवतोकमात्मनोऽहेरिव मोच्यः स्वहितेच्छुनाहमज्ञः ॥ ५० ॥
तव सद्भिरुपासकैरुदारैः सदयैराप्ततमैरुपेक्षितः किं ।
न विनश्यदुपेक्षमस्य कार्यं त्विति यत् सा खलु पत्युरप्युपास्तिः ॥ ५१ ॥
महदीश निपीयते प्रसादामृतमाकंठमिता मुदं हि संतः ।
वितरंति न मह्यमीषदेते बत कुक्षिंभरिरीतिमाद्रियंते ॥ ५२ ॥
सकृपाः कथमार्तमत्यशक्तं कृपणं मां शरणागतं न पांति ।
अमिताश्च दयामृतादुदारा अपि दातुं कथमीषदुत्सहंते ॥ ५३ ॥
विभवोऽधिगतेऽमिते सुहृद्भिर्न समं केवलमेव साकमन्यैः ।
कृपणै रहितैरपि प्रकामं सुखमार्येश्वर साधवो भजंते ॥ ५४ ॥
त्वमुदारवरः कथं सखायस्तव सख्युर्ननु नो समानशीलाः ।
मयि तेऽत्रभवान् कृपाविचार्येऽ वतु बुद्धं ह्युभयेऽपि तुल्यलीलाः ॥ ५५ ॥
यदि नाथ गतोऽसि साकमिष्टैर्वरमस्मान् कृपणान् श्रितान् स्वमेव ।
ननु पालयिता कृतोऽत्र कः स क्व च किं चानिलनंदनो परो वा ॥ ५६ ॥
स तु संप्रति गंधमादनाद्राविति नाथ श्रुतमस्तु नः किमूनं ।
परमेकमिहान्यसर्वकार्यस्मृतिरोधि व्यसनं महाद्भिरुक्तं ॥ ५७ ॥
स हि किंनरचारणादिगीतं मुनिभिः साकमुदश्रु मीलिताक्षं ।
सततं चरितामृतासवं ते पिबति त्यक्तभयोऽस्मृताखिलेहः ॥ ५८ ॥
* श्रुतमेवमपीह यत्र नाम्नस्तव संकीर्तनमेव तत्र तत्र ।
रचिताञ्जलिरश्रुपूर्णदृक् चेत्यपि वाल्मीकिमुनेर्न गीरपार्था ॥ ५९ ॥
अपि नाथ कथं नु तर्हि साधुर्बत सोद्यापि कपिर्मया न दृष्टः ।
यदि पातकनष्टदृष्टिरस्मि प्रतिमां तेऽहमहो कथं पिबामि ॥ ६० ॥
स्वजनो परमात्मनः प्रियत्वात् प्रतिमातः किमितीश चेत् तथाऽस्तां ।
भवतो भवतोषदाच्च नाम्नोऽप्यधिकः किं श्रवणोत्सुकोऽस्मि दीनः ॥ ६१ ॥
अधिको निजनामतो मतोऽयं स्वजनस्ते यदि तर्हि राम तेन ।
क्षमिणातिदयावताथ सद्योऽखिलतापापह कीर्तनेन भाव्यं ॥ ६२ ॥

* यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिं ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसांतकं ॥ ५९ ॥ इति वा पाठः

अलमोमिति चेत् कथं न नाथ द्रुतमद्याप्युपयाति हंत पातुं ।
असकृद्धि पुरा स्मृतस्तदास्तामधुनैवापि तु चेतसा स्मरामि ॥ ६३ ॥
अयि कीशवराप्तवर्य साधूत्तम सीताहृदयव्यथौषधोक्ते ।
रघुवीर यशःसुधाकरस्य त्वमनंतोऽस्यनवद्यपक्ष एकः ॥ ६४ ॥
अधुनापि च संस्तुतो न चास्यां स कवींद्रो मुदितः स्तुतौ कथं स्यात् ।
इति वाच्यमहो यतोऽधिकस्ते भजकस्त्वत्त उदार आशुतोषः ॥ ६५ ॥
कृतयैव यया कयापि नुत्या मुदमाप्नोषि विभो भवज्जनेन ।
किमु योऽभ्यधिकः कृपालुरार्यो भवतो भगवतो मतोऽतिसाधुः ॥ ६६ ॥
भगवन् स समीरसूनुरार्यस्त्वयि ते नाम्नि च साधुमोदधाम्नि ।
परमादृत इत्यवैमि तद्वत् स्मरतामुद्धरणेन नूनमद्य ॥ ६७ ॥
स समीरसुतः कृतप्रयासः सुतरां संप्रति साधुविश्रमार्थं ।
सखिभिश्चरितासवं तवालं परिपीयाद्य समं सुखं नु सुप्तः ॥ ६८ ॥
न कृतः खलु लक्ष्मणेन देव्या भवता वात्र सुहृन्मणौ प्रसादः ।
कथमेष न खिन्नमानसः स्यादनुरूपामनवाप्य सत्कृतिं स्वां ॥ ६९ ॥
स हि कष्टभुगेव देव नीता इतरे तु स्वपदं सहैव सर्वे ।
न कुशस्य लवस्य वाप्यमात्येष्वपि ते हासपदः कृतो महात्मा ॥ ७० ॥
अथ किं बहुना भवान् कृतज्ञो न दयालुर्न वरप्रदो न चाप्तः ।
त्यजतानुजदारमारुतींस्ते कृतिना किं सुकृतं कृतं कृपालो ॥ ७१ ॥
न भवान् न भवज्जनोपि दीनेष्वशुचिष्वद्य कलाववद्यकाले ।
करुणो वरदं कृतघ्नमेकं तव तेषामपि रामनाम कामं ॥ ७२ ॥
इति मयूरकविकृतो रामस्तवः समाप्तः

---

## अथ शंकरस्तवः—स्वागतावृत्तं.

पर्वरात्रिरमणामृतभासां सर्वगर्वहर निर्मलकांते ।
पर्वतेश्वरसुताधव शंभो शर्व मामव नतं जनमार्तं ॥ १ ॥
पंकराशिमपि पावनकीर्ते रंकराजमव मां करुणाब्धे ।
शंकरानतमलं तव कर्तुं कं कराब्जमनघं न सदीड्यं ॥ २ ॥
पादपा दिविषदां न यथा ते पादपांसुरखिलेश सुखाप्त्यै ।
सादरा तव मतिर्भजदिष्टे या दरादवति संश्रितवर्गं ॥ ३ ॥
स्वर्गवास्यरिततिक्षयकर्मानर्गलप्रथितनिस्तुलशक्ते ।
भर्ग तेद्य भजतोपि न षण्णां वर्ग एष निहतो द्विषतां मे ॥ ४ ॥
नेदमन्नवसनादपि कालात् ते दरव्यसनमीश लभंते ।

वेदगीतगुण ते शिव दृष्टा ये दयामृतरसार्द्रदृशाम्र ॥ ५ ॥
व्यालदष्टमिव भेकशिशुं मां कालदष्टमव दीनमनाथं ।
भाललोचन महेश्वर शंभो बालशीतकरशेखर शर्व ॥ ६ ॥
संतु कल्पशतसंचितनानामंतुकोटय उमेश तथापि ।
जंतुभिस्तु शरणीकरणीयस्त्वं तुषाररुगिवाखिलतप्तैः ॥ ७ ॥
कामकोपमुखशत्रुभिरुग्रैराम्यैरतितराकुलचेताः ।
हा महेश किमहं वद कुर्यां नाम तेप्यलमलं न गृहीतं ॥ ८ ॥
देव या मुदिह सा खलु तोयादिव यादसि महत्यपि वाल्पे ।
सेवया तव सुखं जगति त्वामेव यामि शरणं श्रुतकीर्तिः ॥ ९ ॥
इंदुचूड गृणतां तव कीर्तिं बिंदुतां भजति संसृतिसिंधुः ।
बिंदुना तदिह सेव निषेव्या किं दुरीश्वरगुणैर्बत गीतैः ॥ १० ॥
दासवत्सल भजंति सुरास्त्वां वासवप्रभृतयः प्रभुमाद्यं ।
हासहासपदमेव न नम्रो व्यासवत् कविरपि स्वगुरुं यः ॥ ११ ॥
क्वापि नाकजनमंगलमूर्तिर्यो पिनाकसमलंकृतपाणिः ।
पापिना करुणया द्रुतचित्ताप्याहृता नत मया न हृदिस्था ॥ १२ ॥
मूलमुग्रविपदां स्मरमद्दणा तूलमग्निरिव योदहदीशः ।
कूलमस्य महतो भवसिंधोः शूलपाणिरभयाय ममास्तु ॥ १३ ॥
साहिमुग्रमपटं जटिलं त्वां सा हिमाद्रितनयेश यथासौ ।
भो जडस्य मम धीस्तव पादांभोजमुत्कहृदयाप्युपयाता ॥ १४ ॥
अस्तु नाम तव संपदभावो वस्तुना मम मुदीश्वर येन ।
तत् त्वयास्ति विधृतं खलु कंठे तत्त्वमाद्यमुरु मंगलमेकं ॥ १५ ॥
अद्य हंत कृपणः किमु कुर्यां यदहं तव दृशा न हि दृष्टः ।
चित्रमेतदपि पंकजबंधुं मित्रमेव भवतो बहु मन्ये ॥ १६ ॥
योगिभिर्न शिव केवलमुग्रैर्भोगिभिः श्रितपदोप्यसि शंभो ।
त्वां ततोस्म्युपगतः शरणं तत् स्वांततोषद पयोर्णव पाहि ॥ १७ ॥

औपच्छंदसिकं वृत्तं.

किमनंगपिशाचयुक् सदाहं न मनो भूतभयंकरं श्मशानं ।
भवता भवतापभागशुद्धं मम वासाय हरारसीकृतं ते ॥ १८ ॥

शिखरिणी.—नतोहं ते हंतेश्वर चरणयोर्भूरिदययो-
रतः शंभो शं भो वितर हर मह्यं त्वमतुलं ।
कृतं नागो नागोत्तमवलयकैर्न भ्रमवशैः ।
क्षमा कार्या कार्या भव तव कया न क्षमितुता ॥ १९ ॥

पृथ्वी—अमाद्दतमुमेश ते श्रुतिशतस्तवैकास्पदं ।
पदं तदितरद् गुरु स्वहितमित्ययं सेवितं ॥
अनेन बत येन तत् सपदि तस्य कालाकुलं ।
किमुग्रविपदां भवेन्न जनकंपदकं पदं ॥ २० ॥
पुनाति न भवान् प्रभो कमिह कीर्तितः कीर्तितो ।
ददाति न फलं मुदामतिशयाचितं याचितं ॥
किमास्त उत नातिकेप्यहह मेनया मेनया ।
तयेव कुधिया प्रभो त्वमपमानितोसि ध्रुवं ॥ २१ ॥
प्रसादमुपवर्णितं शिव तवोपमन्यावहं ।
शृणोम्यसकृदादरात् कविभिरुत्तमैरुत्तमं ॥
भवंतमपि भूतपं सदयमाशुतोषं भवं ।
प्रभुं त्रिजगतां गुरुं शरणमागतस्त्वामतः ॥ २२ ॥

## द्रुतविलंबितं वृत्तं.

भव न तेऽनते कठिनं मनः सुरगुरोरगुरोरिव भोगिनि ।
कुरुचिरं रुचिरं शिरसीश मे *स्वपदमापदमाशु यदुद्धरेत् ॥ २३ ॥

## हरिणीवृत्तं.

वरद करदः संमृत्यब्धौ त्वमेव निमज्जतां ।
सदसि यदसि ख्यातः स त्वं सतामिति सर्वथा ॥
भवति भवतिर्मांशौ सत्याः कथं न तमःक्षतिः ।
सदयपद यदुक्तं तद्धीः कुरुष्व नमोस्तु ते ॥ २४ ॥

पुष्पिताग्रावृत्तं-स्मरहर करुणाघन त्वमेकां शृणु निजभक्तमयूरमुग्धकेकां ।
त्वमसि तमसि दिव्यदृष्टिरंधो भ्रममिह दीन इतोस्मि दीनबंधो ॥ २५ ॥

इति श्रीमद्रामनंदसत्कविराजमयूरविरचितः शंकरस्तवः संपूर्णः

---

## अथ अम्लानपंकजमालाबंधपंचकं—स्रग्धरावृत्तं.

दाता धाताविता त्वं गृह इह गहने लोकशोकप्रकर्मा
दीनानां नाथ नान्यो हतमतपतनस्त्वां विना विश्ववित्तं ॥
मायेशाये न ये त्वामनु ननु मनुजास्तैः कृतं रूरनकल्यं ।
वाग्विद्यावित्तविभ्रैर्वत हतमतयो राम या मद्यमत्ताः ॥ १ ॥
ज्ञानात्मानादिनाथः स्वजनजयजनुः पावनो यर्ण्यवर्यः ।

---

*—"मुनिपनं निपनं स्वपरं द्विषां" इति वा पाठः

सेवा ते वासवाद्यैः किमुत मुनिमुदे राम भूमन् नमस्ते ॥
कालं कालं बलं त्वद्भुजमज न जहातीश भो शर्वशक्ते ।
त्वंद्वंदो हंत हंता हरिररिहरिणो रावणोवद्यवर्मा ॥ १ ॥
धीरो धीरो गुरो त्वं शुचिरुचिरुचितं सेवितुर्विज्ञवित्तं ।
मोदाढ्यो दासदायः खलबलविलयो भावनावस्तु वश्यः ॥
शांतोनंतेऽतितोयात् सममरमणे भासि पासि स्वसिद्धः ।
साधुर्वैधुर्विधुर्भो कुरु गुरुकरुणां सेवकेव स्ववत्स ॥ २ ॥
माने दाने वनेलं त्वमसि महिमनो मोहनो हर्षहर्षे ।
कीशादीशातिशांतं सुरनरवर ते ह्यादरादत्र दत्तं ।
स्वाचारं चापचारुव्रतमत इतरे त्वां न केनर्घ्यनम्राः ॥
सेवां ह्येवांग वांछन् कपिरपि स पिनाकी सदा सख्यसक्तः ॥ ४ ॥
स्वौजा राजा प्रजानां स्वमतिमहिमहः पालकालब्धलक्षो ।
भोगी त्यागी भगी सोत्सवनवसवको मंदकंदर्पदर्पः ॥
आशानाशाश्च शाठ्यं कुरुमुत नितरां घात एतच्च तज्ज्ञै-।
र्गीतं तातं हितं त्वां जगुरगुरुगुरुं ज्ञानिनो नित्यनिष्ठाः ॥ ५ ॥

इति मयूरकविविरचितमम्लानपंकजमालाबंधपंचकं समाप्तं.

---

## अम्लानपंकजमालाबंधरचना.

### श्लोक १.

| | |
|---|---|
| दा | ताः |
| धा ता वि | या म य |
| त्वं | रा |
| गृ | यो |
| इ ह ग | ह त म |
| ने | र्व |
| लो | मि |
| शो क म | दा वि त्त |
| मी | मान् |
| दी | त्यं |
| नां ना य | तं क्र ह्न |
| न्दो | स्तेः |

| | |
|---|---|
| ह | जा |
| न त प | न नु म |
| न | म |
| त्वां | त्वां |
| ना वि श्व | ज्ञा ये न |
| तं | मा |

श्लोक २.

| | |
|---|---|
| ज्ञा | त्मीं. |
| त्मा ना दि | णो व द्य |
| यः | रा |
| स्वे | णो |
| न ज य | र रि ह |
| नुः | ह |
| पा | ता |
| ना व र्ण्य | दो हं त |
| यैः | त्वं |
| से | क्ते |
| ते वा स | भो श वै |
| र्हा | र्ता |
| कि | हा |
| त मु नि | म ज न |
| दे | द्धु |
| रा | त्व |
| भू म न्न | का लं व |
| स्ते | का |

श्लोक ३.

| | |
|---|---|
| वी | त्त |
| धी रो गु | के व स्व |
| त्वं | से |
| शु | णो |
| रु चि रु | गु रु क |
| तं | कु |

## श्लोक ५.

| | |
|---|---|
| स्थौ | ष्ठाः |
| रा जा प्र | नो नि त्य |
| नां | ज्ञा |
| स्त्र | रु |
| ति म हि | र गु रु |
| हः | ज |
| षा | त्वां |
| का ल ब्धु | ता तं हि |
| स्तो | ज्ञां |
| मो | जैज्ञः |
| त्या गो भ | ए त च्च |
| सो | घा |
| त्स | रां |
| न व स | मु त नि. |
| को | क |
| मे | ठचं |
| कं द र्प | ना शा स्न |
| पः | आ |

समाप्त.

---

## पांडुरंगस्तोत्रं-पज्झटिकावृत्तं.

बालदिगंबर एको धूर्तः स्वांतहरो मनुरेव स मूर्तः ।
भीमरथीसरितस्तट आस्ते लोकाः स्ववशं नीता आस्ते ॥ १ ॥
सर्वस्वस्य करोत्यपहारं तदपि वदंति जनास्तमुदारं ।
द्रष्टुं यांति च वारंवारं प्रेम्णा श्लिष्यंत्यपि समुदारं ॥ २ ॥
श्लिष्यंतेनं सुदृढं योषाः स्वामिसमक्षमचिंतितदोषाः ।
चित्रमिदं विगलेर्ष्यारोषाः सर्वेपि भवंत्येव सतोषाः ॥ ३ ॥
यस्य पुरः स्वजनेष्वनुकालं विवशा आपंडितमाबालं ।
गायंत्युच्चैः कृतकरतालं नृत्यंति च विहसंति बतालं ॥ ४ ॥

यं दृष्ट्वैव सकृत् खलु देहं सधनतनयदायितं निजगेहं ।
स्मरति न हृदयं त्यक्तस्नेहं वशिनं मन्ये तमसंदेहं ॥ ५ ॥
इति रामनंदनमयूरेश्वरविरचितं पांडुरंगस्तोत्रं संपूर्णं.

---

## अथ मनःप्रार्थनाष्टकं-सारंगवृत्तं.

कामेन मूढः स्वकामेक्षणोत्कोत्र कामेतिनार्तिं न धामेह मोदाय ।
मा मे मनो वाचमामेति मन्यस्व रामे त्रिलोकीललामे रमस्वाशु ॥ १ ॥
सव्यं करं यस्य भव्यं श्रितं धन्वदक्षे द्विषन्नाशदक्षेषुयुग्मं च ।
क्षत्रेश्वरं पद्मपत्रेक्षणं राममेकं भज स्वांत केकं परार्थाय ॥ २ ॥
धामात्मजद्रव्यरामादिकं चित्त कामाप्तयायैव मा मा श्वसित्यत्र ।
क्षमामानरात् त्वं सतामाश्रयाद्धंत रामादृते यासि कामात्मसिद्धिं नु ॥ ३ ॥
लंकावरारिं कलंकापहं भ्यूष्यलंकारमिच्छाबलं कामदं चित्त ।
साकेतपं हेतुना केन नो यासि नाकेपि नम्रा मुदा केन तं हंत ॥ ४ ॥
ये वासवेशादिदेवा भजंत्येनमेवाधिपं पादसेवारताः साधु ।
सीताधवं दत्तभीताभयं चित्तशीतागुणं मेदिनीतारकं मीहि ॥ ५ ॥
पापक्षयेहं स्वतापन्नमीशानमापद्गजाधारमापद्धरं मंक्षु ।
शोकापहं सर्वलोकाधिपं याहि मोकावदंबा न तोका सुखं हंति ॥ ६ ॥
कर्तास्य विश्वस्य भर्तापि चांते स हर्ता श्रियः प्राणभर्ता शृणु स्वांत ।
माता पिता सैव दाताविता कोनु धातापरोस्माद्विधातायमेवांग ॥ ७ ॥
श्रुत्या पदं यस्य नुत्या वृतं यः प्रकृत्या मृदुः साधुकृत्याश्रयश्चित्त ।
व्यासादिभिः सद्भिरासादितं सर्वदासात मे ह्यमयासाय मोदय ॥ ८ ॥
इति मयूरकविकृतं मनःप्रार्थनाष्टकं.

---

## अथ स्फुटे पद्ये.

दोहावृत्तं—भक्तास्ते धनमिति मया श्रुतं श्रुते ननु राम ।
अतस्त्वावुमत्रानिशं यक्षीभूतं नाम ॥ १ ॥
मदिरावृत्तं—राम रघूत्तम रावणकाल मयि प्रणते करुणां कुरु रंके ।
धर्मधनः सदयोसि समुद्धर मुंच न मामिह दुस्तरपंके ॥
त्वां प्रणतासमृते जनमापदि पातुमलं जगदीश्वर कं के ।
वत्वशासा जित आधिमितो विधुरस्त्यपरेण्यहमेव न शंके ॥ १ ॥

---

## अथ हरिहर-प्रार्थना-गीतिवृत्तं.

किमु माधव भगवन् मामतिदीनमुपेक्षसे न युक्तमिदं ।
भो नाथ भवव्यसने त्राता त्वं परमवत्सलो वरदः ॥ १ ॥
प्रभुता जगत्सु भवतो नतजनभवदुःखलयमहादेव ।
कुरु हर उचितं शुचि तं स्वयमेव स्वं विचिंत्य महिमानं ॥ २ ॥
मामव शंभो भगवन् नवनीरदनीलकंठ पतितं त्वं ।
किमशक्यं तव लोके करुणावरुणालय प्रभोरेतत् ॥ ३ ॥
गौरीश ननु त्राता भवता शरणागता निकामहित ।
यशसाखिलसाधुसभा कामं शोभनदशाक्तारमिता ॥ ४ ॥
न हि केशव तुल्यास्ते भक्ता व्यक्तातिशायितवात्सल्य ।
मंतुं क्षमस्व नमतो भवतापं चास्य हर दया कार्या ॥ ५ ॥
भो भव हर शरणागतसंगोपनसद्व्रताच्युत स्वामिन् ।
का मदनकाल शक्तिः प्रभवति पुरतस्तव प्रभो स्थातुं ॥ ६ ॥
जगतां गुरुं विना त्वां संसारे कोत्र वामदेव हितः ।
न रमापतेद्य मार्ते त्राता भ्राता सखा पिता पुत्रः ॥ ७ ॥
पालयसि सर्वमपि जनमचिरात् कर्पूरगौर कीर्तिरतं ॥
एतमपि तथा पालय मालयमेतु त्वमेव देवगतिः ॥ ८ ॥
प्रभुरसि यशः श्रुतं ते कृतवांस्त्वं पर्वतं पुरा रेणुं ।
धाव विनाशं कर्तुं मम पापस्याशुतोपकरकीर्ते ॥ ९ ॥
याचे त्वां निस्तारं भ्रांतोत्र चिरं भवांधकारेहं ।
मा राधिकाप्रिय त्यज मां करुणानीरदाश्रितमयूरं ॥ १० ॥

श्रीमद्रामनंदनसत्कविमयूरेश्वरकृतहरिहरप्रार्थना समाप्ता

---

## अथ पांडुरंगस्तोत्रं-स्रग्धरावृत्तं.

श्रीजाने पांडुरंग त्वमिह कलियुगे दर्शनात् पासि पापा- ।
नित्याख्यातं दयार्द्रैः सुमतिभिरसकृत् सज्जनैः सत्यसंधैः ॥
तत् सत्यं मन्यमानोहमपि तव विभो प्रापमेवांघ्रिपद्मं ।
निष्पापोस्मीति मन्ये तदपि खलु कुतोद्यापि नो तापशांतिः ॥ १ ॥
वैराग्यं नो न भक्तिर्न च परिचरणं सज्जनानां बतास्मा- ।
द्धेतोस्तापोपशांतिर्न मम यदि विभो सत्यमंगीकृतं मे ॥
को ब्रूयात् साक्षिणस्ते पुर इह वितथं देव किंत्वत्र किंचित् ।

पृच्छामि त्वां नमस्यन् ननु कलुषहतेस्तानि किं संति पूर्वं ॥ २ ॥
नाम्नो माहात्म्यतस्ते बहव इह कलौ विठ्ठल प्रापुरग्र्यां ।
शांतिं भक्तिं विरक्तिं गतिमभिलषितां योगिभिर्नारदाद्यैः ॥
तत् ते नाम श्रुतं मेऽसकृदपि च विभो गीतमुच्चैस्त्वदीयैः ।
हा कष्टं नष्टमद्याप्यतिगुरु न कथं जाल्मा संशयानां ॥ ३ ॥
त्वं तु स्वामिन् स एव स्वयमसि तमसि स्वाश्रितानां प्रदीपः ।
त्राता योतेवसाधिप्रभृतिमलधियां कीर्तनादेव नाम्नां ॥
विप्रस्त्यादरस्तेंऽवासि यदि शरणं तान् स्वपादाब्जमाप्तान् ।
किं चित्रं विठ्ठलायं द्विजकुलज इति त्राहि मां दीनमद्य ॥ ४ ॥
पापोहं पापकर्मेति च सततमहं स्नानकाले ब्रवीमि ।
कृत्वा पापं कथं मे कृतमिति बहुशश्चापि तप्तो भवामि ॥
स्वामिन् रक्ष क्षमस्वेत्यसकृदपि विभो प्रार्थनां ते करोमि ।
मूढोन्यत् किं करोमि प्रभुवर चरणौ तेतिशांत्यै स्मरामि ॥ ५ ॥
दीनोहं दीनबंधुस्त्वमहमघनिधिः पावनस्त्वं प्रसिद्धो ।
भीतोहं कालदंडाच्छरणमुपगतस्त्वामसि त्वं शरण्यः ॥
दाता त्वं सद्वराणां वरदगुरुरहं याचकस्त्वं दयावान् ।
आर्तोहं त्वं क्षमावानहमपि विनतः पादयोः सापराधः ॥ ६ ॥
मां कामक्रोधलोभादिभिररिभिररं चेतसा मोहितेन ।
प्राप्तं किं नाथ दुष्टोयमिति परवशं मन्यसे मे न दोषः ॥
यातो दैवेन दीनः प्रबलखलवशं निर्दयैः पीड्यमानः ।
त्वां स्मर्तुं नालमन्यत् किमथ कथय ते कोत्र सेवावकाशः ॥ ७ ॥
साक्षात् पश्यस्यपि त्वं स्वयमनयकर्तॄरीन् षडुग्रान् समर्थो ।
हुंकारेणापि दुष्टानसि भुवनपते भस्मसात्कर्तुमेतान् ॥
हुंकारेणाल्पमात्रा प्रभुवर भवतो मास्त्विहायासपात्रं ।
दृष्ट्वा किं न स्फुरेत्ते भसितमयि विभो मय्युपेक्षैव नूनं ॥ ८ ॥
दीनोपेक्षां न कर्ता त्वमहमिति विभो वेद्मि तत्तूक्तमर्त्या ।
मर्त्यानां देवतानामपि खलु न हि भोस्त्वां विनान्योवितास्ति ॥
श्रांतः प्राप्तोषि निद्रां ननु किमयि विभो तिष्ठतापीष्टकायां ।
लोकैराह्लागितेनाप्यविरतमपि सा सेव्यते चित्रमेतत् ॥ ९ ॥
भो नाथ प्राकृतोपि प्रभुरिह भवति त्यक्तनिद्रः कुटुंबी ।
पंचानां पालकोपि क्षणमपि न मनाग्जातु निद्रार्पचित्तः ॥
त्वं लोकस्यास्य सहायोपि च खलु जगतां साधुभर्ता पुराणो ।

निद्रामासेवसे चेत् कथयतु भगवान् का गतिर्विष्टपस्य ॥ १० ॥
योगीशो स्वप्ननाथः कथमवनविधावेकदक्षः कथं वा ।
यन्निद्रालुत्वमेयं सति मति न त्वत्पदः किं यशोघ्नं ॥
कालाद् दस्योः सुलुब्धादलमपहरतो मोचयेत् कः समर्थः ।
स्वत्तोन्यो दीनदासद्रविणनिधिमिमं मां द्रुतं जागृहीश ॥ ११ ॥
नेयं निद्रा यदि स्याद्भगवति जगतां भर्तरि त्वय्यपीशे ।
सुप्ते क्वापि जीवव्यवहृतिरनिशं किं यथापूर्वमास्ते ॥
न ह्यस्तं तिग्मरश्मावचलमुपगते भासके भव्यभासि ।
लोके दृष्टा श्रुता वा मृगजलतटिनी तत्र चैषां प्रवृत्तिः ॥ १२ ॥
नो निद्रा नो समाधिः क्वचिदपि न च ते यातमन्यत्र चित्तं ।
नूनं रोषः सदोषे मयि तव भगवन् विद्युते तेन मौनं ॥
नैवैतत् तर्कितं मे सुमतिमतमये प्राकृतोपि प्रभुर्यत् ।
सद्यः क्रोधं जहाति प्रणतिमतिकृतागस्यरातावपीश ॥ १३ ॥
शंके रंके मयि त्वं प्रभुवर कुरुषे कंचनामुं विनोदम् ।
किं वक्तायं कविर्मामिति कुवुकितया श्रोतुकामो वचो मे ॥
नो चेदुच्चैः कृपालुः कथमियदणुतोप्यूनमद्यापि कार्यं ।
कर्तुं कर्ता विलंबं न हि गिरिधर ते स्यात् तृणस्यातिभारः ॥ १४ ॥
ग्रस्तोस्म्याकंठमुग्रप्रकृतिमनसिजेनाहिना बालभेकः ।
पाह्यस्मांस्त्वं त्वदन्यो ननु दशमकरोत् सानुकंपामिभे कः ॥
स्तोत्रं चेच्छ्रोतुकामोस्यपि मयि विकले बालिशे सेवके कां ।
शक्तिं पश्यस्यदृष्ट्वा घनमपि कुरुते किं शिखी देव केकां ॥ १५ ॥
त्वं चेदद्य प्रसादं ध्रुव इव कुरुषे देव बाले मयीह ।
स्तोतुं स्यामेव कामं निपुणतरकविः श्राव्यभव्यप्रबंधः ॥
कः स्तोता तात जातस्तव जगति विनानुग्रहाद्विप्रदेवे- ।
ष्वन्येष्वप्यब्जयोनिः प्रभुरपि भवतोनुग्रहादेव सुज्ञः ॥ १६ ॥
मह्यं देहि प्रभो स्वस्तवकवनवरं स्वस्य च प्रीतिहेतुं ।
यस्त्वं स्तुत्यातितुष्टो हृदि भवसि तथा नान्यसत्कारकोट्या ॥
नुत्या नत्या च तद्वैरजित न विजितः कैर्भवान् पाददासि- ।
रासिरासो न मोदं प्रभुतिलक यया भक्तवृंदैरसंगैः ॥ १७ ॥
आरब्धासु त्वदंघ्रिस्तुतिषु सुरधुनीवीचिमालामलासु ।
प्रादुर्भूते पुरस्ते नवमुदिरघटागर्वसर्वंकषेगे ।

भावैरालिंगितोहं सखिभिरिव समं सात्विकैस्तत्समो* ।
युक्तो मुक्तोक्तिनत्या दर इव च जनी त्वं वदान्यां कदा स्याम् ॥१८॥
श्रीमत्या भीमरथ्यास्तटभुवि भवता तिष्ठता विष्टपेश ।
स्वामिन् सौभाग्यमस्या गमितमतिनुतिं स्वर्धुनीभाग्यतोपि ॥
पापःस्पर्शादपंकामलमियमवनीमेव नो चंद्रभागा ।
कर्तुं कार्त्स्न्यां त्रिलोकीमपि च विनयते तीर्थपादप्रिया ते ॥ १९ ॥
देवास्तीर्थानि संतः खलु सततमपि स्नातुमायांति हर्षा- ।
दित्यं साधूक्तमेव श्रुतमसकृदपे देव दासेन ते मे ॥
तस्मादस्माकमेषा सकलमलधिया नाथ मातेव सद्यः ।
पंकप्रक्षालनेन प्रियमुचितमरं किं न कुर्याद् दयार्द्रा ॥ २० ॥
भोः श्रीमद्विठ्ठल श्रीपतिमतिथिरहं त्वामुपेतोस्मि किं मां ।
सत्कार्यं नाद्रियंते बत भवदनुगाः साधवः सद्विचाराः ॥
ब्रह्मण्यस्त्वं तु लक्ष्म्या वससि दयितया नित्यमंतःपुरे हा ।
कष्टं नष्टं व्रतं ते मम च यदफलप्रार्थनः सन् निवृत्तः ॥ २१ ॥
भो ब्रह्मन् पुंडरीक द्विजवर भवतः स्वास्थ्यमभ्येतु चित्तं ।
दीनांस्तापत्रयार्तान् शरणमुपगतानुद्धरिष्येहमाशु ॥
इत्येवं सुप्रसिद्धं सुरमुनिसविधं यत् प्रतिज्ञातमग्रे ।
तत् सत्यं सत्यसंधस्त्वमिह कलियुगे कुर्वधीरे नमस्ते ॥ २२ ॥
दुःखाब्धेरुद्धृतानां प्रभुवर भवता मादृशानां जनानां- ।
माकंठं तर्पितानाममलममृतरसेनोत्तमेनादरेण ॥
आशीर्भिः पुष्कलाभिर्जगति नृपसुरैरप्यरं दुर्लभाभिः ।
प्राप्तं पूर्वं यशस्ते परममिह पुनः प्राज्यमप्याप्नुहीश ॥ २३ ॥
दीनानां दैन्यनाशात् समुपगतमुदामाननादादरेण ।
प्रोद्भूता आशिषस्त्वां पतिमभिवृणते कांतमेकं वरेण्यं ॥
वंद्यो दुष्टोस्मि यद्याप्यहमुचिततरा मे ग्रहीतुं कुबुद्धेः ।
राशाराशीविषस्यार्पितमणिरिव ते स्यात् प्रभो भूषणाय ॥ २४ ॥
इति श्रीमद्रामनंदनमयूरेश्वरकृतं पांडुरंगस्तोत्रं संपूर्णम्

---

## अथ गंगाविज्ञप्तिः.

जय जय भगवति गंगे त्वं गेयगुणा प्रतीप-सुत-दयिते ।
अपि तेऽस्तु दया त्वत्तोऽन्ये ये दीने न हि क्षमा मयि ते ॥ १ ॥

---

* या चरणांत एक अक्षर कमी आहे.

बलिना कलिना मलिनानुद्धर्तुमसि त्वमेव सत्यमलम् ।
गायन्ति यशः कवयस्तव यत्पीयूषतोपि सत्यमलम् ॥ २ ॥
भविता त्वयि मज्जनतः शुचिराशु तथा तपन्न गंगेऽहम् ।
रुचिरमपि वपुः पापं हेयमिह यथा सपन्नगं गेहम् ॥ ३ ॥
शरणागतो दयावति दीनस्त्याज्यस्त्वया न गंगेऽयम् ।
कः स्मरति त्वां हित्वा संताने विषयिनां नगं गेयम् ॥ ४ ॥
भागीरथि तव दृष्टिः प्रभवति पुरुषार्थसंपदे विनते ।
ईषन्मात्रमपि श्रुतमौदासिन्यं जनेषु देवि न ते ॥ ५ ॥
मूर्तिमती त्वमसि दया देवस्य हरेर्जगद्भयादवतः ।
प्रातं हि लीलयेदं विश्वं संसारतस्त्वया दवतः ॥ ६ ॥
जय देवि जन्हुकन्ये भजदघसंहारसद्व्रते धन्ये ।
संतु बहवः किमन्ये त्वामेव जगद्धितावहां मन्ये ॥ ७ ॥
वससि विशंकं शंभोः कृतसिजितविहितमर्मरा शिरसि ।
दुर्गाया अपि तेन त्वं भगवत्यतुलशर्मराशिरसि ॥ ८ ॥
शरणागतजीवानां प्रक्षालितसर्वपापजंबालाम् ।
वंदे हरेर्हरंतीं त्रासं त्वां त्रिविधतापजं बालाम् ॥ ९ ॥
पतितः काकोपि भवति पयसि भवत्याः सुरापगे हंसः ।
भजति यशः सुकृतौघस्त्वयि च निमज्जन् सुरापगेहं सः ॥ १० ॥
दुरितां ददामि जान्हवि जंतुभ्यस्त्वं तथा मुदा हरताम् ।
किं मे न दर्शनं वाक् सत्यास्तु त्वां कथामुदाहरताम् ॥ ११ ॥
उत्तम ईशितुरंगे नटसि नदीश्वरि नटी यथा रंगे ।
कृतजगदघनगभंगे सम्मतसंगे नमोस्तु ते गंगे ॥ १२ ॥
स्वस्त्वत्यनभिज्ञेपि त्वत्करुणा मयि कृतानतावस्तु ।
वस्तु मालोलयमयि जलजंतुभिरपि तवाप्यते स्वस्तु ॥ १३ ॥
दयमानमानसे त्वं पुण्यात्यपि दर्दुरं बकं मीनम् ।
पीनं कुरुषे मकरं धनहीनं त्यजसि किं द्विजं दीनम् ॥ १४ ॥
भक्तमयूरघनघटेऽकुधियामस्माकमुचितमत्यागः ।
स्वयशो मा त्यज मातर्महतां महितो न शुचितमत्यागः ॥ १५
विष्णुपदि प्रतिकूलं व्यावर्तयितुं क्षमाऽसि नतादिष्टम् ।
सति सति सामर्थ्येपि प्रणमज्जपनं यदंब न तदिष्टम् ॥ १६ ॥
काऽस्ते त्रिविक्रमभिर्व्येया स्वर्दोरिहाप्तजन्माऽन्या ।
सर्वासु देवतासु स्वर्धुनि मातस्त्वमेव सम्मान्या ॥ १७ ॥

नमनादमनाग्घृणे देवि भवत्या भवभयाच्छमनाः ।
शमिताः प्रजाः कृतार्थाः प्राप्ता भव्यं परं परं शमनाः ॥ १८ ॥
स्पृष्ट्वा त्वां मां वातः स्पृशतु सुखं स्वपितु बालकं तातः ।
मास्तु मम विपदि पातः संसारात्तारयाशु भो मातः ॥ १९ ॥
भवतीं विनात्र मुदितं कर्त्तारो दीनमातुरं के ते ।
मलिनोपि शिशुरशंकं सुखमयमपि लुठतु मातुरंके ते ॥ २० ॥
शरणागतस्य मम खलु तव चापि यशस्करीमिमामुक्तिम् ।
मानय मा नय निकटं परिपालय देहि वत्सले मुक्तिम् ॥ २१ ॥
संतापमपाकर्तुं कादंबिन्या यथा मयूरेण ।
गंगाया विज्ञप्तिः प्रेम्णैव तथा कृता मयूरेण ॥ २२ ॥

श्रीरामनंदनमयूरेश्वरकृता गंगाविज्ञप्तिः समाप्ता

---

## अथ श्रीहरिसंबोधनस्तोत्रम्-शार्दूलविक्रीडितवृत्तं.

कौसल्यासुत देवकीसुत यशोदापुत्र गोगोपिका- ।
सूनो पृश्नितनूजनेऽदितिविकुंठाजानहूत्यात्मज ॥
रोहिण्यात्मज देवहूतितनय श्रीरेणुकानंदन ।
ब्रह्माद्युद्भवमूल निस्तुल गुणैकालंकृते पाहि मां ॥ १ ॥
कालिंदीतटकेलिलोल ललनालापैकबद्धादर ।
क्रीडानिर्जितकालिय स्मयमहादावानलप्राशन ॥
कृष्ण क्लेशविनाशनाखिलकलाकौतूहलालंकृत ।
क्रूरारातिसमूहकाल करुणावारांनिधे पाहि मां ॥ २ ॥
कस्तूरीतिलकाभिराम कलिताकालांबुदाभच्छवे ।
कुंजारण्यविलासकोकिल कलालापैकलुब्धश्रुते ॥
कर्णालंबिविलोलकुंडल करे वेणो गले कौस्तुभ ।
प्राज्यकांचनकांतिचैल शिखिपिच्छोत्तंसभृत् पाहि मां ॥ ३ ॥
खड्गालंकृतबाहुदंड खगमेशस्यंदन ख्यातिभृत् ।
खर्वीभूत कृतप्रसाद खलखद्योतप्रदीपायित ॥
खेदानाश खरासुरांतक खरेषुस्तोमतुणीरभृत् ।
खेलत्खेचरखंजरीटनयनागीतोन्नते पाहि मां ॥ ४ ॥
गोधीगोचर दूरगूढगिरिमन् गीतामृतांभोनिधे ।
गोपीगोरसमुग्गृहागत गृहस्थश्रेष्ठ गुणाश्रय ॥
गीःपत्युत्तम गुर्वनुग्रहगृहीतागाधलीलातनो ।

गुह्यज्ञानगभीरतत्त्व गगनग्रस्तायते पाहि मां ॥ ५ ॥
गोविंदाच्युत गोपबालक गिरां दूरेत्यगोपीपते ।
गंगातात गजेंद्रतारक गदापाणे गदाग्रेभव ॥
गोसंरक्षक गेयसद्गुणतते गोवर्धनोद्धारक ।
ग्रैवेयीकृतगुंज गोकुलवधूलीलागुरो पाहि मां ॥ ६ ॥
गंगाभृद् गिरिभृद्गदाभृदरिभृत्पाथोजभृत्कंबुभृत् ।
श्रीभृत्कौस्तुभभृन्महीभृदसिभृत्तूणीरभृच्छार्ङ्गभृत् ॥
गुंजाभृच्छिखिपिच्छभृत्तुलसिकाभृद्वंशभृद्वेत्रभृ- ।
च्छिक्यभृत्कंबलभृन्मनुष्यतनुभृच्छ्रीवत्सभृत्पाहि मां ॥ ७ ॥
चक्रिन् चित्तचकोरचंद्र चतुरास्यादे चतुर्वेदवित् ।
चातुर्याकर चारुचित्रचरितानिर्वाच्य वाचस्पते ॥
चेतश्चोर चिरंतनाचल चमत्काराचिंताचंचल ।
चाराप्रच्युत चिंतकाखिलजगच्चिंतामणे पाहि मां ॥ ८ ॥
छिन्नानेकभवार्तवासनगुण च्छंदानुगेच्छावश ।
छद्मद्यूतहृतात्मसंपदवनीपालासुरच्छेदक ॥
छत्रीभूतफणींद्रवारितघनासारच्छलानाकुल ।
छंदोभिष्टुतपादपंकजरजः स्वच्छच्छवे पाहि मां ॥ ९ ॥
ज्योतिर्जीवनकृज्जनार्दन जगज्जीवातुकृज्जान्हवी- ।
जन्मक्षेत्र जरादिवर्जित जयैकाधार जीवाश्रय ॥
ज्याजाने जगदीश्वर व्रजवधूजाराज जन्यानित ।
ज्याघातांकितरम्यदोर्जलधिजामातः प्रभो पाहि मां ॥ १० ॥
तीर्थाधीश तपस्विमुख्य तपन प्रत्यगात्मक त्राणकृत् ।
तत्त्वज्ञानद तारक त्रिभुवनस्थायिन् तमालद्युते ॥
ताराचक्रगत त्रिविष्टपगुरो तेजोनिधे तूर्णग ।
त्यक्षेपोऽननुतापशामक तुरंगास्य प्रभो पाहि मां ॥ ११ ॥
दैत्यारे दलिताघ दानवरिपो दामोदर द्रौपदी- ।
दुःखारण्यदवादिदेव दमितादांनावदातादृत ॥
दूरास्तोदय दीर्घदर्शन दयासिंधोऽतिदेवद्रुमो- ।
दार द्राग्दितदामदैन्य दरभृद्दिव्यद्युते पाहि मां ॥ १२ ॥
दूर्वाश्यामल दासदूत दुरितारष्ट द्युमन्देवकी- ।
दायाद द्युसदां पते द्विजपते दर्वीकरारिध्वज ॥
दत्तात्रेय दिगंतविश्रुत दृशां दुर्लक्ष्य दीनावनो- ।

दुःखादीनवदावदाव दयितानादिस्मृते पाहि मां ॥ १३ ॥
दोषघ्न द्रविणप्रद प्रथमजाभिन्न क्रिशान्न करो ।
वैकुंठाधिपते दृढव्रत जितक्रोध प्रतीपांतक ॥
कैवल्येश्वर देव केशव हृषीकेशाक्षराधोक्षज ।
द्वारावत्यधिराज रुक्मिमदजित्स्त्रीभातकः पाहि मां ॥ १४ ॥
धर्मांभ्यावन धन्य धीर धरणीआधार धीप्रेक ।
ध्येयध्याननिविष्ट धार्मिक धुतानेकाघ काल ध्रुव ॥
धानामुष्टिसुतुष्ट धेनुचरणप्रोद्भूतधूलीमिल- ।
द्धाराधूसर धीमतां घन धृताजीर्यद्रुते पाहि मां ॥ १५ ॥
नित्यानंद निसर्गनिर्मल निधे नागेंद्र नारायण ।
न्यासीशान नवीननीतिनिपुण न्यग्रोध नासीरभृत् ॥
नानारूप निरीह नाथ नृहरे निर्मीय नाकेश्वर ।
न्यायात्मन्नृपते नमस्कृतिगते नानानुते पाहि मां ॥ १६ ॥
नंदांगप्रसनोत्सुकाजगरभिद्युग्मार्जुनोन्मूलन ।
द्रव्येशानुग शंखचूडदमनारिष्टप्रलंबांतकृत् ॥
केशिद्वेषण धेनुकांतक तृणावर्तघ्न विघ्नापह ।
स्वीयानंदकरावतार खलजिद्राधापते पाहि मां ॥ १७ ॥
पद्मावल्लभ पद्मनाभ परमप्रख्यात पापोदर ।
प्रख्य प्राज्ञ परात्पर प्रशमितापारप्रपन्नापद ॥
पृथ्वीपालक पाविपावन पुरारातिप्रमोदास्पद ।
प्रेष्ठ प्रेमल पार्थसूत पुरुजित्पूर्णस्तुते पाहि मां ॥ १८ ॥
पारावारग पापपर्वतपवे पर्जन्यकापूतना- ।
प्राणप्राशन पद्मसंभवपितः प्रेक्षावतां पूर्वज ॥
पुण्याख्यान पुराणपूरुष पदानम्रापदुद्धारकृत् ।
पूताख्य प्रणवापराजित विपत्पापस्तरे पाहि मां ॥ १९ ॥
प्रद्युम्न प्रथितप्रभाव शिशिराशाज्ञ प्रजापालक ।
प्रह्वप्रेप्सितकृत् प्रसादसुमुख प्रांशोऽपवर्गप्रद ॥
प्रीत प्रीतिकर प्रयागसदन प्राणिप्रतापापह ।
प्रज्ञानाकलित प्रपंचरहित प्राचीपते पाहि मां ॥ २० ॥
बह्वाश्चर्य बुधेंद्र बुद्धिद बलिन् बुद्धाख्य बुद्धाखिल ।
ब्रह्मन् ब्राह्मण बाणबाहुदलन ब्रह्मण्य देवाब्जदृक् ॥
बीभत्सुप्रिय बालकृष्ण बलभिद्बंधो बकारे बकी- ।

क्ष्वेडरतन्यनिबद्धतृष्ण बलिभूयाश्चावटो पाहि मां ॥ २१ ॥
बद्धोन्मोचनकृद्विभीषणसख ब्रह्मद्विडुत्सादन ।
ब्रह्मास्त्रानलदाधशात्रव बृहत्कीर्ते बलेकार्णव ॥
बाणव्रातनिकृत्तराक्षसचमूतुंगोत्पतन्मस्तक-।
व्यूहाच्छादितबिंबभास्कर कृतानेकस्तुते पाहि मां ॥ २२ ॥
भीमास्त्रवंतक भीष्मसंस्तुत भुजंगेंद्राभबाहो ऽभव ।
भ्राजिष्णोऽभयदानदक्ष भरतभ्रातर्भृशोदाहृत ॥
भूषाभूषण भूतिभासुर भिषग्भैषज्यकृद्धारभृत् ।
भैष्मीभर्तरिभारिविक्रमगते भृत्यारिभित्पाहि मां ॥ २३ ॥
भक्ताभीप्सितभद्रभव्यचरितांभोधेऽभिरामाकृते ।
भूमन् भीहर भूभरापह भवभ्रांतिघ्न भूतिप्रद ॥
भावायत्त भजज्जनाप्त भगवन्भास्वत्पराध्यप्रभ ।
भ्रूसंकेतवशानुवर्तिजगदुद्भूतिक्षते पाहि मां ॥ २४ ॥
मेघश्याम मनोजमन्मथखने मानाय मीनाकृते ।
मायाधीश्वर मानमानमधुभिन् मायिन्मुरद्वेषण ॥
मूर्तानंद महेश माधव मुने मात्सर्यमोहातिग ।
म्लायत्सज्जनसस्यपूर्णकरुणावृष्टे महन्पाहि मां ॥ २५ ॥
मार्कंडेयगुरो मृडार्चितमहाशक्ते मनो मंत्रकृत् ।
मांगल्याभिध मंजुरूप मघवन् मार्तंड मृत्युंजय ॥
मुक्तालंकृत मुक्तपूजित मनोवाक्कायकर्मातिग ।
मूर्छोत्सादन मुक्त मुक्तिद महोराशे मधो पाहि मां ॥ २६ ॥
यज्ञाधीश यशोनिधे यदुपते योगेश योगीश्वर ।
ध्येयांघ्रिद्वय यत्नलभ्य यमिहृद्विश्राम यत्युत्तम ॥
यातायातविरामकारण यमाद्यष्टांगयोगस्थिते ।
यज्ञन् यज्ञशरीर यज्ञफलभुक् यज्ञांतकृत्पाहि मां ॥ २७ ॥
रोलंबालक रोहिताक्ष रणजिद्रागिन् रसज्ञर्धिकृत् ।
रत्नाधीश्वर रेणुकेय रिपुभिद्राजीवपत्रेक्षण ॥
रक्षादक्षिग रैवताहितरते रोगघ्न रौद्राकृते ।
रुद्राराधितपादपल्लव रमारंग प्रभो पाहि मां ॥ २८ ॥
श्रीमद्राघव रामभद्र रमणीयोदारकीर्ते रवे ।
राजाभिद्रुत राजराज रघुवंशोत्तंस रक्षोंतक ॥
रामारंजन राम रावणरिपो रात्रिचरत्रासकृद् ।

रोचिष्णो रघुवीर रत्नरचिताकल्प प्रभो पाहि मां ॥ २९ ॥
लावण्याकर लोभनीयललितव्याहार लक्ष्मीपते ।
लीलामानुष लक्ष्मणाग्रज लयोत्पत्तिस्थितिप्रेक्षक ॥
लोभानास्पद लोकलोचन लसल्लक्ष्मन् ललामांबुधे ।
लंकेशांतक लोलमोचनयशोलोल प्रभो पाहि मां ॥ ३० ॥
वेदोद्धारक वेदवेद्य विषयव्यावृत्त विद्यानिधे ।
विश्वव्यापक वेणुवादनपटो विद्युल्लताभांबर ॥
विष्णो वामन वासुदेव विनतावंशावतंसध्वज ।
व्यालाधीश्वरतल्प वासववरव्यूह व्रतिन्पाहि मां ॥ ३१ ॥
वीर्योदारविराजमानविरते वर्ण्यावदान व्रजा- ।
लंकार व्यसनघ्न वारिरुहभृद् विद्वंद्य विश्वंभर ॥
विश्वासप्रव्यपकारवित्तम वराहाकार विश्वंभरो- ।
द्धारोदार विशिष्ट विश्ववरद व्योमावधे पाहि मां ॥ ३२ ॥
वालिध्वंसन वार्धिबंधन वसिष्ठाद्यात्मदृक् विश्वदृग् ।
विश्वामित्रमखावन व्रतिपते वैदेहकन्यापते ॥
विख्याताद्भुतलील वाडववधूव्रीडाव्ययावारण ।
व्यापारांघ्रिरजस्कवारितविपन्नाधे विधे पाहि मां ॥ ३३ ॥
शौरे शाश्वत शुद्ध शोभन शतानंद श्रितानंदकृत् ।
शर्व श्लाघ्यगुण श्रमापह शरण्याब्धे शुभोत्पादक ॥
शोचिष्केश शताब्द शोकशमन श्रेयस्तते शापद- ।
प्लंभो शंकर शर्वरीकरशरच्चंद्रास्य भो पाहि मां ॥ ३४ ॥
शूराग्रेसर शांत शांतिद शमिन् शोभाकर श्रीकर ।
श्रीकांत श्रुतिशेवधे श्रुतिशतांतःशंसित श्रीपते ॥
श्यामांग श्वसनस्वरूप शरणप्राप्तावनैकादृत ।
श्रीज्ञाने शिशुपालशासन शिव श्रीश्रीनिधे पाहि मां ॥ ३५ ॥
शीलालकृत शेषतल्पशयन श्रद्धालुसंशीलित ।
श्वेतद्वीपपदस्थिते शतधृते शंपाशताभांशुक ॥
शर्मासे शिपिविष्टशत्रुशमन श्रेष्ठश्रुते शारदा- ।
शब्दागोचर शक्तिशसन शुचे शास्त्रारणे पाहि मां ॥ ३६ ॥
शब्दब्रह्मशरीर शास्त्रकुशल श्लाघार्ह सच्छेखर ।
श्रोत्रप श्लक्ष्ण शिखंडिपिच्छमुकुट श्यामासमालिंगित ॥
शश्वच्छोभित शार्ङ्गकृच्छ्रनमल श्राद्धेश शुद्धागम ।

श्रीवत्सांकितवक्ष शारदशशिच्छत्र प्रभो पाहि मां ॥ ३७ ॥
सूक्ष्म स्वच्छ सुधांशुसुंदर सुदृक् सर्वज्ञ सर्वेश्वर ।
स्रष्टः साधुसहाय सज्जनसख स्वाधीन सत्यप्रिय ॥
सत्यावल्लभ सत्यसंगर सुभद्रासोदर स्वंगद ।
स्त्रग्विन् सामग सीरहेत्यनुजने सन् सत्कृते पाहि मां ॥ ३८ ॥
सुत्रामानुज सात्वतर्षभ सहस्राक्षांघ्रिदोर्मस्तक ।
स्वर्भूसिद्धसमूहसेव्य सुभग स्वंग स्वतःसंभव ॥
सर्वाध्यक्ष सुजात सिद्धिद सुहृत्संसारसंतारण ।
स्वामिन् सारसनेत्र सात्विक सुखस्तोमारणे पाहि मां ॥ ३९ ॥
सत्यज्ञाननिधे कलाकुलनिधे कारुण्यवारां निधे ।
शब्दब्रह्मनिधे यशोमृतनिधे विश्वेष्टलीलानिधे ॥
नानारत्ननिधे जगत्त्रयनिधे लावण्यपाथोनिधे ।
कल्याणैकनिधे महागुणनिधे तेजोनिधे पाहि मां ॥ ४० ॥
हर्यक्षानन होमनिष्ठ हुतभुग्घोतर्हविर्भोजन ।
ह्रीमन् ह्रेपितकाल हंस हितकृद्धेलाजितद्वेषण ॥
हारालंकृत हेमभूषण हताराते हराराधक ।
ह्लादिन्याभ धनुर्लताधर हरे हर्षांबुधे पाहि मां ॥ ४१ ॥
क्षेत्रज्ञ क्षामिणांवर क्षितिभरक्षत्रापह क्षोभण ।
क्षुत्तृष्णादिविकारषट्करहित क्षमानिर्जरैकप्रिय ॥
क्षत्तृप्रेमपद क्षताहितमद क्षेमालय क्षौद्रवाक् ।
क्षेप्रेश क्षणदाचरेशदमन क्षोणीपते पाहि मां ॥ ४२ ॥
क्षीरांभोनिधिमंदिर क्षणकर क्षांतापराध क्षम ।
क्षाम क्षीणविवर्धन क्षपितरुक् क्षुण्णासुरानीकप ॥
क्ष्वेडग्रीवनुत क्षुमासुमनिभ क्षुब्धाब्धिफेनस्मित ।
क्षिप्रोद्धारकरोद्दित क्षरपर क्षेत्रास्थिते पाहि मां ॥ ४३ ॥
सत्याद्यप्रकृते परास्तनिकृते निर्दोषमोदाकृते ।
सर्वत्रोपकृते विगीतविकृते लब्धात्मविस्तृकृते ।
नित्यानंदधृते दयाल्पमतेऽन्वर्थापवाधस्तुते ॥
भक्तस्वर्त्रततते क्षताहिततते लक्ष्मीपते पाहि मां ॥ ४४ ॥
विद्वद्वृंदपते तपोनिधिपते तत्वज्ञगोष्ठीपते ।
पुण्यारण्यपते बहुप्रदपते सद्वीरसेनापते ॥
योगाभ्यासिपते क्षमाधनपते विश्वाद्यपाथःपते ।

दीनानाथपते जगत्त्रयपते सीतापते पाहि मां ॥ ४५ ॥
वाणीनाथगुरो सनंदनगुरो सद्भक्तसंसद्गुरो ।
प्रह्लादादिगुरो बिभीषणगुरो सुग्रीवसेनागुरो ॥
गीर्वाणर्षिगुरो पराशरशुकव्यासांबरीषोद्धव- ।
व्याधाक्रूरकिरीटिविदान्यजनकश्रीसद्गुरो पाहि मां ॥ ४६ ॥
भक्ताब्जद्युमणे महीपतिमणे शस्त्रज्ञचूडामणे ।
भास्वद्वंशमणे सुलक्ष्मणमणे शास्त्रज्ञसंसन्मणे ॥
वैराग्याढ्यमणे सुरद्रुममणे देवर्षिभूषामणे ।
पुण्यश्लोकमणे पुरातनमणे चिंतामणे पाहि मां ॥ ४७ ॥
अक्रूरेक्षितदिव्यरूप रजकव्यापादन स्वेष्टकृत् ।
कुब्जारूपद पुण्यदर्शन जगन्नेत्रोत्सवैकाकर ॥
मालाकारकृतप्रसाद कुशलालंकार रामानुज ।
व्यस्तेष्वास हतद्विपेंद्र रदभृच्चाणूरभित् पाहि मां ॥ ४८ ॥
मत्तभोद्भटमल्लमर्दन महावीर प्रजारंजन ।
स्वायत्तोग्रपराक्रमाद्भुतरुचे कंसासुविध्वंसन ॥
सद्बंधो वसुदेवबंधहरण स्वीयेप्सितापूरण ।
श्रीसांदीपिनिशिष्य कालयवनाराते प्रभो पाहि मां ॥ ४९ ॥
कौन्तेयप्रतिपालनोत्सुक जरासंधाभियाते नृगो-
द्धर्तः पौंड्रकमूर्धकर्तन सुधन्वक्षर्क्षराजार्चित ॥
भामेच्छावशपारिजातहरण प्रत्यूहकृद्वज्रभृद्-
वैमानित सन्मयूरकरुणांभोद प्रभो पाहि मां ॥ ५० ॥
इति श्रीमद्रामनंदनमयूरपंडितवर्यविरचितं हरिसंबोधनस्तोत्रं संपूर्णम्

---

## पदं.

कथं तं न भजे पावनकथं । शमितामितदद्रुव्यथं ॥ ध्रु० ॥
त्रातुं क्षममनलसमखिलं जगदिदं खलु यथातथं ॥
कुर्वंतं शरणागतजनसमवनमतुलशपथं ॥ १ ॥
पूरितसंश्रितनिजजनधनतनयाद्यखिलमनोरथं ।
कमलावरमजममलाशयमरिकमंडजवररथं ॥ २ ॥
भक्तमयूरदयाघनमिनकुलपतिमतिभावुकपथं ।
यमभजतो जनुरमरपतेरपि वरमपि भवति वितथं ॥ ३ ॥

---

## अथ रामनामाष्टकं-गीतिवृत्तं.

राम तव नाम हित्वा मंत्रानितरान् जपन् जनो मुग्धः ।
त्यक्त्वा चिंतारत्नं गृण्हन्नन्यान् मणीन् कथं सुज्ञः ॥ १ ॥
तव नाम्नैव कविमुखं भाति न चान्येन शब्दशास्त्रेण ।
अविवमसिंदूरतिकलमपि रत्नभृदेव सुभ्रुवो वदनं ॥ २ ॥
यो नाम वज्रकवचं तव चंद्रकलावतंसधन धत्ते ।
रघुनाथ जगति सकले स कलेरतिदुःसहः पुमानेकः ॥ ३ ॥
अपि यस्मै कस्मैचिज्जपते दीयंत एव नाम्ना याः ।
दातुमलं ताः सिद्धीरधिकारापेक्षिणो हि नाम्नायाः ॥ ४ ॥
मज्जयति श्रितमितरा जनमनकुलतिलक का न नौकाऽस्तां ॥
तद्वं श्रिता वयं यां पदयुगुलां ते सकाननौकास्तां ॥ ५ ॥
स्फुटतु शतधा श्रुते त्वयि यन्नाश्रुस्नपितमेव तत् तुरः ।
धत्ते भक्तः पशुरपि नृत्वं कनकत्वमिव स धत्तरः ॥ ६ ॥
भूतिं बिभर्ति तनुते गतिमपि च वृषेण सत्यसुप्रियकृत् ।
कामं हरति हरति ते नाम श्रीराम वैश्रवणमित्रं ॥ ७ ॥
नाम्नैवाप्नोति न शं कारुण्यनदीन मातुरंकेपि ।
नाम्नोऽन्ये प्रातुमलं लोकेषु न दीनमातुरं कोपि ॥ ८ ॥
मातुः स्तन्येन यथा बालास्त्यक्तास्तवार्य नाम्ना ये ।
स्पष्टं तदितररस इव शक्तिस्तास्त्राहुमस्ति नाम्नाये ॥ ९ ॥

---

## श्रीपांडुरंगस्तोत्रं-द्रुतविलंबितवृत्तं.

भजपते जपतेऽस्य भयप्रदः सुरसदो रसदो महिमा तव ॥
अघनगे घनगेयरुचेऽशनिस्त्वमवं मामव मामकरार्वरं ॥ १ ॥
सततमस्तु मयि प्रणतेखिलप्रणतवत्सल भव्ययशोनिधे ।
चरणभक्तिरुदार तव प्रभो रविवगाविवरासनमुक्तिधिः ॥ २ ॥
इह कलावपि जंतुमजामिलादधिकमच्युत नाम यदृच्छया ।
सकृदयाप्यसमप्रमितं नु कं न समलं समलंकुरुते भवान् ॥ ३ ॥
इदपि ते शिवकृद्भगवन् ह्रियां प्रणमतां किमु युष्मदनुग्रहः ।
परमदुर्लभमीश सुनिर्भयं पदमिता दमिता भवताऽखिलाः ॥ ४ ॥
सपदि संप्रति भीमरथीतटे स्थितिमुपेत्य जडा अपि जंतवः ।
इह कृता निजकीर्त्यमृतेन के न भवता भवतापविवर्जिताः ॥ ५ ॥

सितसरोरुहसान्द्रमुनेः पितृमत्तयशाश्वतमः प्रशमोद्यत ।
प्रणतवत्सल विठ्ठल ते यशः कविशते विशते स्वयमादरात् ॥ ६ ॥
श्रुतिनुतस्य जने कृपणे कृपा परमते रमतेपि सदाशिवः ।
तव यशस्यमले विपुले सुधासरसि को रसिको न निमज्जति ॥ ७ ॥
बत कबीरमुखा यवनाः कृताः शुचितमा निजनामपरास्त्वया ।
भवति पात्रमपि प्रजडः सतां सुनग ते न गतेरिह को हरे ॥ ८ ॥
वरदराज मुकुंद तुकाभिधो भणितिमालिप्रथितः स्तवनैस्तव ।
सकलसाधुमनःपरितोषकृत् कविवरो विवरोज्झितशुद्धवाक् ॥ ९ ॥
स्वकरुणां वदसि भुवमंत्यजः स्मरणकृद्यदि देविनतं त्यज ।
पतितपावन नाम च तन्मृतावपरे यस रे यदने श्रुती ॥ १० ॥
श्रुतकथे भवतः स्वजनापदामगदयागदया क्रियते न सा ।
पितृशतैः करुणा करुणानिधे तनुभवेनुभवेन सतामिदं ॥ ११ ॥
दिश दयार्णव चक्रमनर्घद्दत् स्वशरणागतविघ्नविनाशकृत् ।
त्वयि मनोस्तु मम प्रणतोद्धृतावनलसेनलसेवितसत्कथे ॥ १२ ॥
सुपतिता अतितापसमाकुला अशरणाः शरणागतवत्सल ।
तव मुकुंद सकृच्छ्रुतसत्कथाः सुरगुरोर्गुरुतोकाति सत्कृति ॥ १३ ॥
जडसमुद्धरणं प्रथितं कलौ करुणविठ्ठल तेधम हा प्रभो ।
अनुभवन् श्रुतवांश्च सदुक्तितो नयमतो यमतोपभयोलिखः ॥ १४ ॥
सदयकोटिशताधिककर्मणे नतसमस्तजनाशनिवर्मणे ।
भगवते ननु तुभ्यमहं करोम्यज नमो जनमोहहराभिध ॥ १५ ॥
वादितहार्दभरैः कृतकीर्तनैस्त्वमिह विठ्ठल भीमरथीतटे ।
लसदभंगगुणैस्तव सद्यशः सुरसिकैरसि कैर्न वशीकृतः ॥ १६ ॥
श्रुतिरहस्यविदः स्वपदं गता अपि भवंतमुदारगुणं प्रभुं ।
परमकारुणिकं सुहृदं परं मुनिजना निजनाथमुपासते ॥ १७ ॥
स्वपरिरंभसुखातिशयोचितं प्रणतमाशु करोष्यखिलं जनं ।
अपि वदान्यगुरोद्य तवाधिकं हनुमतोनुमतोप्यलसो जडः ॥ १८ ॥
तव पुमर्थदपुण्ययशःकथाश्रवणविस्मृतदेह इतस्ततः ।
भवति विठ्ठल कोपि जनस्तपोवनमना न मनागपि तीर्थधीः ॥ १९ ॥
य इह रुग्भवचरणांबुजानपदमूनमुपैशवृतात् पदात् ।
खलु लभंत उदारशिरोमणेस्त्वदयिते दयितेप्यदपि श्रिय ॥ २० ॥
निजयशोधिककर्मातिरमादरं प्रकटयंतमुदारगुणं प्रभुं ।
स्वजनसद्यशसः श्रवणे सदा कृतमहं तमहं शरणं गतः ॥ २१ ॥

निजयशोमृतसेवनसक्तया सततसात्त्विकभावसमृद्धया ।
भगवता भवता बहवः कृताः स्वसभया सभया भृशनिर्भयाः ॥ २२ ॥
अनुष्टुभ्वृत्तं—प्रियस्तुतेर्भगवतः पांडुरंगस्य पादयोः ।
मयूरेणार्पिता भक्त्या या स्तुतिः सास्तु तीर्थवाः ॥ २३ ॥

## पदं शिवस्य.

शंकरेश शिव शरण्य शर्म शेवधे ॥ ध्रु० ॥
त्र्यक्ष सकळभक्तवृंदरक्षणप्रविणचरण दक्षमहाध्वर—
विनाशदक्ष चंद्रगिरिपयोवलक्षदेह रक्ष मां द्रुतं ॥
यक्षनाथसख भवाभिधार्युपद्रुतं न क्षमत्यज क्षमस्व बहुभयाद्रुतं ॥ १ ॥
स्वर्वधूसमर्चितांघ्रिपर्व समुदितेंदुकांतिगर्वतस्करास्यपद्म पर्वतेंद्र-
जाधव गंधर्वगीतगुणजगत्पते । शर्व कुर्वये दयां त्वदंघ्रियुगनुते ॥
सर्वभुवननाथ न समुचितमदो नते ॥ २ ॥
भालदृगाविर्भवत्कराळवीतिहोत्रखरज्वालदग्धरातिप्राणपाल ।
सज्जनस्वमानसालयाद्य पालयाकुलं ॥
व्यालमुंडमालधर न मेन्यदिह बलं । कालकूटकंठ समव रामसुतमलं ॥३॥

## पांडुरंगस्तोत्रं—अनुष्टुभ्वृत्तं.

संसृतौ कलिकाले यः स दरः सदरस्तुते ।
विठ्ठलादभयं प्राप्तः करुणावरुणालयात् ॥ ४ ॥
यच्चेतः पांडुरंगस्य सदा चरणसादरं ।
तं संतं नान्यमूचुर्ज्ञाः सदाचरणसादरं ॥ ५ ॥
विठ्ठलेति जपेन्नाम पांडुरंगस्य यः सदा ।
कृपाकटाक्षा न विभोस्त्यजं तं त्यजंत्यहो ॥ ६ ॥
यः पिबत्यसकृन्नाम प्रभोर्भवगदार्दितः ।
न्हेपयत्यमृतं किं न स कलौ सकलौषधं ॥ ७ ॥
मोचिताः पांडुरंगेण पतिता अतितारतः ।
अयमेव कलौ कीर्त्या निजया विजयावहः ॥ ८ ॥
नाम्ना यः पाति यमलं नाम्ना यः स्तौतुमीश्वरं ।
यशसा यस्य सद्वृंदं समहं तमहं भजे ॥ ९ ॥

* या स्तोत्राचे पहिले तीन श्लोक कोणाचे समही असल्यास ते आमचेकडे पाठविण्याची कृपा व्हावी.

धैर्यस्य दर्शिना स्वर्गो कलौ वैरस्य कारिणा ।
यशसास्य प्रभोस्तीर्थे सज्जना मज्जनालसाः ॥ १० ॥
वदंति विठ्ठलं विज्ञा जडेभ्योप्यतिदुर्लभा ।
या दीयते प्रभो भक्तवश सा यशसा तव ॥ ११ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा येऽन्येपि संकराः ।
रंकराजमुखाः सर्वे कृताः श्रीशेन शंकराः ॥ १२ ॥
पूर्वं प्रयासेनाविद्याविनाशमलभंजनाः ।
अद्य नाम्ना प्रभोः कष्टं विना शमलभंजनाः ॥ १३ ॥
दयालुना भगवता पांडुरंगेण बंधुना ।
दीना हीना निजगतिं गमिता अमिता जनाः ॥ १४ ॥
पांडुरंगः प्रभुर्भक्तबहुमानवशंवदः ।
बिभर्ति भर्ता जगतां शिरसातिरसाच्छिरं ॥ १५ ॥
शृण्वन्नभंगाननिशं तृप्तो नाद्यापि विठ्ठलः ।
कथं हरंतु न सतां न सतामुक्तयोगिनः ॥ १६ ॥
धीः श्रियं जनतां भक्तौ तामसीमामुदारतां ।
जानात्वच्छा प्रभोर्वेत्ति तामसीमामुदारतां ॥ १७ ॥
मधुपा अप्सु राजीवे सुरा जीवं यथा दिवि ।
उपासते तथा संतं पांडुरंगपुरे जना ॥ १८ ॥
पांडुरंगपुरस्था ये जीवन्मुक्ता हि तेखिलाः ।
यत्प्रभूक्तिः स्वतीर्थाप्तमज्जना मज्जना इति ॥ १९ ॥
मज्जनं चंद्रभागायां पांडुरंगस्य दर्शनं ।
कीर्त्तनश्रवणं यस्य स महा समहा भवे ॥ २० ॥
विदा ज्ञानेन ठान् शून्यान् लाति गृण्हाति विठ्ठलः ।
निरुक्तमिदमस्माकं चरमं परमं बलं ॥ २१ ॥
जडोद्धारयशोग्रंथग्रहव्हीतसुमेधसे ।
नमस्तस्मै भगवते पांडुरंगाय वेधसे ॥ २२ ॥
नमोस्तु पितृभक्ताय पुंडरीकाय साधवे ।
जडोद्धारव्रतं पुण्यप्रभावाद्यस्य माधवे ॥ २३ ॥
मलौघहृत्स्वमहसा सहसा रचितेंजलौ ।
क्षेत्रं तीर्थं पांडुरंगो नामसंकीर्तनं कलौ ॥ २४ ॥
ज्ञानदेवैकनाथाद्या नामदेवादयोपरे ।
तेभ्यो नमोस्तु यैर्भक्त्या रंजितोऽरंजितोऽजितः ॥ २५ ॥

नामसंकीर्तनप्रायं पांडुरंगपुरं विना ।
भ्रमन् भवति मेदिन्यां परितोऽपरितापभाक् ॥ २६ ॥
पांडुरंगपुरे पीतप्रभुनामयशःसुधाः ।
बुधाः स्मरंति न स्वर्गे दृष्टचक्रगदायुधाः ॥ २७ ॥
तीर्थान्यायांति सर्वाणि देवतान्युत्सुकानि यत् ।
द्रष्टुं भगवतः को न त्वरं त्वरं व्रजेत् ॥ २८ ॥
पांडुरंगपुरं प्राप्य सर्वो ना रमते स्फुटं ।
हरिनामयशोगानानिरतोऽविरतोत्सवः ॥ २९ ॥
पांडुरंगपुरं संतो भूवैकुंठं वदंत्यहो ।
एतत् तु सर्वसुलभं कुलभंजनमंहसां ॥ ३० ॥
प्रवर्तितेन परमामृतसत्रेण सर्वदा ।
पुंडरीकेण सर्वोपि सत्रपः सत्रपः कृतः ॥ ३१ ॥
पुंडरीकेण सर्वार्थैः सत्कृतं तत् कृतं तथा ।
ब्रह्मांडे न केनापि कविना भविनामलं ॥ ३२ ॥
अमुना यमुनारोधः पूर्वं भीमरथीतटं ।
पश्चादलंकृतं गोपच्छद्मना पद्मनाभिना ॥ ३३ ॥

इति श्रीरामनंदनमयूरविरचितं श्रीपांडुरंगानुष्टुभं स्तोत्रं संपूर्णं.

---

## पद.

पांडुरंग मामिहाव शरणमागतं ॥ ध्रु० ॥

कुंडलीशशयन मकरकुंडलिन्ननंतगुण मृकंडतनयदर्शितचिदखंडमोहरूपसद-घखंड नैकपंडित प्रभो ॥ पुंडरीकवरद भुवनमंडनाद्य भो । पुंडरीकनयन शमय भवभयं विभो ॥ १ ॥

चंडपराक्रम स्वभुजदंडबलविमर्दितारिमंडलानवद्यगुणकरंड मुकुरतलस्वच्छगंडचतुरतुंडजनितनो ॥ खंडपरशुजप्यनामधेयसन्मनो ॥ अंडकूपरोमकूपसकलतनुतनो ॥ २ ॥

अंडजेंद्रवाहन वेतंडपत्राणपटूद्दंडदयाधारदद्दावंडलानुजने शिरस्यंजलिं निधाय नुतिरतं ॥ दंडवत् प्रणम्य चिंतयंतमविरतं ॥ दंडपाणिभीतिमलं रामसुतमितं ॥ ३

---

## पद.

वंदे मन्मथहरं हरं तं । शंकरं चंद्रशेखरं ॥ ध्रु० ॥

ब्रह्मपुरंदरमुखवृंदारकवृंदवंद्यमीश्वरं । मंदरमंदिरमिंदीवरदलरुचिबंधुरकंधरं ॥ १ ॥

हिमनगपतिनिजदुहितमुखसलिलरुहमधुरसमधुकरं । स्वचरणयुगपरिचरणरत हृदयजनसमुदयसुखकरं ॥ २ ॥
वामदेवममितामरनुतपदतामरसं सुखकरं । रामतनूजभवामयवैद्यमकामदतत्परवरं॥ हरं तं वंदे मन्मथहरं ॥ ३ ॥

---

## अथ दशमस्कंधगीतिः

### पज्झटिकाछंदः

सच्चित्सुखमूर्तिर्विधितातः । श्रीदेवककन्योदरजातः ॥ १ ॥
नंदयशोदापुत्रीभूतः । पीतबकीप्राणोप्यतिपूतः ॥ २ ॥
क्षिप्तपदाब्जविचूर्णितशकटः । साधुषु चरितैः सुतरां प्रकटः ॥ ३ ॥
लीलालवनिहततृणावर्तः । शरणं विदुषां खलसंवर्तः ॥ ४ ॥
स्तनपाने मुखदर्शितलोकः । शिशुचरितामृतहतभवशोकः ॥ ५ ॥
यो गोपीनवनीतस्तेनः । सुखपति यशसि मनः शस्ते नः ॥ ६ ॥
स मृदोदर्शयदशने मात्रे । पदने विश्वं कंपं गात्रे ॥ ७ ॥
बद्ध उलूखल आगसि दाम्नां । बहवो मुक्तिमिता यन्नाम्ना ॥ ८ ॥
बद्धेनापि कृतानलयमलौ । धनपतितनयावगमौ यमलौ ॥ ९ ॥
वत्सबकाघासुरखलकालः । पद्मजमोहनगोव्रजबालः ॥ १० ॥
धेनुककालियमर्दनदक्षः । सुयशःप्रमुदितसज्जनलक्षः ॥ ११ ॥
बलमुद्वोढ्य प्रलंबो नीतः । प्रलयं येन ज्वलनः पीतः ॥ १२ ॥
गोपकुमारीजनपटचौरः । कांत्या श्यामो यशसा गौरः ॥ १३ ॥
हृतमाथुरविप्रस्त्रीमोहः । प्रणताखिलजनसुखसंदोहः ॥ १४ ॥
लीलोद्धृतगोवर्धनगोत्रः । शक्रमदहरः पुण्यस्तोत्रः ॥ १५ ॥
यस्मान्मुक्तो वरुणान्नंदः । प्राप्तः स्वीभी राधानंदः ॥ १६ ॥
नंदमजगरान्मुनिशापात्तं । यो मोचितवानतितापात् तं ॥ १७ ॥
गोपीहृदवरचूडारातिः । स्त्रीजनवर्णितवेणुख्यातिः ॥ १८ ॥
लीलालेशध्वस्तारिष्टः । केशिवधानंदितबहुशिष्टः ॥ १९ ॥
गुणरंजितनारदमुनिपालः । शिशुदस्युव्योमासुरकालः ॥ २० ॥
दुर्लभदर्शनसुखिताक्रूरः । संनिहितोप्यभवद् व्रजदूरः ॥ २१ ॥
यत्र घने खलकलशो न्युब्जः । पाटीरार्पणतारितकुब्जः ॥ २२ ॥
नाशितमाथुरजनदृक्पीडः । क्रीडानिहतकुवलयापीडः ॥ २३ ॥
भुजसमरप्रमथितखलमल्लः । स्मितरसभरपरिशोभितगल्लः ॥ २४ ॥
रणवेलाहेलाहृतकंसः । सात्वतमानसहंसवतंसः ॥ २५ ॥

सदनुग्रहगुरुकुलजनितनयः । मोग्जीवितसांदीपिनितनयः ॥ २६ ॥
उद्धवमुखहृतगोपीतापः । कुब्जारातिवरदकुसुमचापः ॥ २७ ॥
आश्रितदानपतिप्रियकर्ता । पितृभगिनीयाचितजरहर्ता ॥ २८ ॥
असकृत्कृतमागधबलविलयः । सागररचितात्यद्भुतनिलयः ॥ २९ ॥
कालयवनमतिवंचनदक्षः । कृतमुचुकुंदक्षितिपतिरक्षः ॥ ३० ॥
मगधमहीपतिकैतवभीतः । रैवतजादेवर इति गीतः ॥ ३१ ॥
भीष्मककन्या राक्षसविधिना । येन हृता करुणामृतनिधिना ॥ ३२ ॥
रुक्मिण्यामुत्पादितकामः । स्वीकृतजांबवतीमणिभामः ॥ ३३ ॥
कालिंदीं मित्रोत्तरविंदां । हृतवान् सत्यामपि गतनिंदां ॥ ३४ ॥
भद्राजानिर्माद्रीभर्ता । व्यष्टसहस्रस्त्रीप्रियकर्ता ॥ ३५ ॥
*वैदर्भीचेतोहरनर्मा । अनुमतरुक्मिवधाग्रजकर्मा ॥ ३६ ॥*
प्रेमभरसमरनिर्जितशर्वः । शातितबाणासुरभुजगर्वः ॥ ३७ ॥
नृगनृपशरणगतिवितरणवित्तः । कृटतरणिजागोपीचित्तः ॥ ३८ ॥
पौंड्रककालः कृत्याशमनः । क्रूरद्विविदमहाकपिदमनः ॥ ३९ ॥
हलखेलोन्मूलितनागपुरः । सुरमुनिमोहकरचरितचतुरः ॥ ४० ॥
मागधनृपवधविरिमितवैद्यः । क्षतसात्वपचैत्यसहनचैद्यः ॥ ४१ ॥
धर्ममखादृतभूसुरदास्यः । कुर्वधमस्खलितोदितहास्यः ॥ ४२ ॥
शाल्वघ्नो दंतावक्त्रघ्नः । पापेल्वलहतविप्रोपघ्नः ॥ ४३ ॥
श्रीमद्धर्मनरेश्वरदूतः । क्षितिभरखलवधपरनरसूतः ॥ ४४ ॥
श्रीदामद्विजदारिद्र्यहरः । स्वविरहमग्नसुहृद्धृतकरः ॥ ४५ ॥
सुतदर्शनहृतमातृक्लेशः । स्वसृहरणानुमतगुडाकेशः ॥ ४६ ॥
उद्धृतबहुलाश्वश्रुतदेवः । पातिवृकत्रातमहादेवः ॥ ४७ ॥
भृगुगीतावुकशांतिसुशीलः । भूसुरसुतानयनाद्भुतलीलः ॥ ४८ ॥
भक्तमयूरदयामृतजलदः । सततस्वचरितवर्णनबलदः ॥ ४९ ॥
समहं वंदे खगपतिकेतुं । सुखहेतुं भवसागरसेतुं ॥ ५० ॥
अनुपदमेतद् ध्रुवपदमुदितं । वितरतु रसिकाननुपममुदितं ॥ ५१ ॥
अनुष्टुप्छंदः—दशमस्कंधमुख्यार्थगीतिरेषाऽघहारिणी ।
संपूर्णा यादवेशानकृष्णसंतोषकारिणी ॥ ५२ ॥
इति *श्रीमद्रामनंदनमयूरविरचिता दशमस्कंधगीतिः संपूर्णा*

---

## अथ श्रीगणेशस्यारार्तिक्यं.

जय देव जय देव गजमुख सुखहेतो । नेतर्विघ्नगणानां जाड्यार्णवसेतो ॥ ध्रु० ॥
येन भवदुपायनतां नीता नवदूर्वा । विद्यासंपत्कीर्तिस्तेनासाऽपूर्वा ॥
मुक्तिर्लभ्या सुखतरस्तव नित्यापूर्वा । धार्या जगतः स्थितये भूमौ दिवि धूर्वा ॥ १ ॥
प्रथमनमस्कृतिभाक् त्वं तव लोकप्रथितं । दृष्टं सद्व्यवहारे गुरुभिरपि च कथितं ॥
यः कश्चन विमुखस्त्वयि निजसिद्धेः पथि तं । विविधा विघ्ना भगवन् कुर्वते व्यथितं ॥ २
बालं सकृदनुसरति त्वद्दृष्टिश्चेत्ता । मनुराशीमिव दास्यो विद्याः स हि वेत्ता ॥
पविपाणिरिव परं परपक्षाणां भेत्ता । भवति मयूरोवेरिव मोहस्य छेत्ता ॥ ३ ॥

## अथ श्रीदेव्याः

जय देवि प्रणमदखिलवरवितरणदक्षे । जय जगदंब समुद्धतशरणागतलक्षे ॥ ध्रु० ॥
सर्वस्य त्वमसि मता सद्विदुपामाद्या । श्रुतिभिः स्मृतिभिः शास्त्रैः कविभिः प्रतिपाद्या ॥
गायंति त्वच्चरितं निपुणा वृतबाद्याः । सा का त्वत्तोऽन्याऽ वति नाम्ना पापाद्या ॥ १ ॥
मातर्जगदुत्पत्तिस्थितिसंहृतिर्लीले । संश्रितजनकल्मषवनकल्पदहनकीले ॥
सर्वत्र सदा सादरनतलालनशीले । स्वविमलगुणगणरंजितविधिशिवघननीले ॥ २ ॥
तव सेवार्थिजनानां चिंतामणिशाला । भक्तमयूराणां ते स्मृतिरंबुदमाला ॥
त्वां स्तोतुं त्वत्पुरतो गीरपि खलु बाला । का तत्रान्यकविकथा क्व सुधा क्व च हाला ३

### अथ श्रीकृष्णस्य.

मुचुकुंदेन यवनमिव दह गुरुणा मोहं । स्पर्शमणिर्न सुवर्णं कुरुते किमु लोहं ।
पतितोजामिल इव गजपतिरिव विकलोहं । प्रभुरसि वेत्सि च दातुं वरसुखसंदोहं १
जय भगवन् चक्रगदाशंखांबुजपाणे । कुरु मयि दृष्टिं सकृपामसति यथा बाणे ॥ ध्रु०
अघामिव मामपि दुरितात् कुरुषे यदि मुक्तं । भवतो नवतोयदमदहरकांति युक्तं ॥
पालय न मे प्रणश्यति भक्त इति यदुक्तं । स्मर तत् कलुषनगभिदुर विदुरगृहे भुक्तं ॥
॥ २ ॥ मायामुदेन्न नने ह्युवाले दोषं । मातुर्न मनस्तोके दृष्टं कृतरोषं ॥
ब्रह्मण्योसि विधेहि त्वं ब्राह्मणपोषं । वितर मयूरे भक्ते करुणाघन तोषं ॥ ३ ॥

### अथ श्रीशिवस्य.

हालाहलविषपानं त्रिपुराणां मथनं ॥ नाथ कथंकारमहं कुर्यां तत्कथनं ॥
चरितममितमंधकमुखजगदहितश्रथनं ॥ यदलंकृतये तवद्धतशिरसां ग्रथनं ॥ १ ॥
जय जय शिशुशशिशेखर शिव कामाराते ॥ ज्ञातमिदं परमेश्वर करुणा स्फारा ते ॥ ध्रु०
उपमन्यव ईशकृतं दुग्धोदधिदानं ॥ कारयं दीयत एव प्राणिभ्यो दाने

यस्फुरितः शिरसि पदं दत्त्वापि विमानं ॥ बहुमतमिदमेव सतां कीर्त्तिसुधापानं ॥२॥
नान्यस्त्वादर ईश ग्रीष्म इव व्यजने ॥ बालस्य क्रीडन इव वा भवतो भजने ॥
मामुद्धर मामुद्धर नश्यतु मे भजने ॥ भक्तमयूरघन त्वं परिगणय स्वजने ॥ ३ ॥

## अथ श्रीसूर्यस्य.

जय दिनकर जय भास्कर जय भग जय तरणे ॥
तरणिस्त्वमसि तमसि जनिमृतिभवभयतरणे ॥ ध्रु० ॥

कर्मणि सतां प्रति प्रकरोषि च दृष्टिं ॥ किं च, ददास्यंधानामिव जगतां दृष्टिं ॥ पाश्यनलस एव परिभ्रमणपरः सृष्टिं ॥ मन्ये लोकं वत्सं त्वां भगवन् गृष्टिं ॥ १ ॥ जगदालयदीपस्त्वं चक्षुर्लोकानां ॥ दुःसहविरहमहार्तेरगदः कोकानां ॥ हेतुर्मंदेहासुरसेनाशोकानां ॥ तव भावुरुहां सुखदारणिरिव तोकानां॥२॥ किंबहुना स्तवमेकं ब्रूमस्तव सारं ॥ कुरुते पुरतस्तेंजलिमजयद्यो मारं ॥ त्वं खलु सद्गतिभाजामार्याणां द्वारं ॥ मुदिर इव मयूरकुलं सुखयसि सद्वारं ॥ ३ ॥

## अथ श्रीनृहरेः.

यः कनककशिपुरकरोत् साधौ संरंभं ॥ पुष्ट्वा गर्वं क्रोधं सद्वेषं दंभं ॥ कर्तुमृतं भृत्यवचो भित्वाशु स्तंभं ॥ मार्तंडमिवात्मानं कृतवानसि तं भं ॥ १ ॥
जय देव जय देव श्रीनरहरिमूर्ते ॥ यस्तवनाग्नि फलमलं तन्निष्टापूर्ते ॥ ध्रु० ॥
भो भगवन् सर्वसुजनमानसजलजाले ॥ करुणा सर्वत्र कृता नैकस्मिन् बाले ॥ मोचय मामपि दीनं पतितं भवनाले ॥ यत् तेजोस्ति तव नखे न हि तत् करवाले ॥२॥ प्रल्हादं पितुरिव मां मोहादव दासं ॥ दह दुरितं द्रुतमिद्धोदमुना इव घासं ॥ दीनानामसि बंधुर्मां कुरु परिहासं ॥ भक्तमयूरधनार्पय पदपंकजवासं ॥ ३ ॥

## अथ श्रीरामस्य.

जय जय सीतावल्लभ दशवदनाद्रिपवे । भवतापदमुरुदत्तं निजसदनाद्रिपवे ॥ ध्रु०॥
जनुषालंकृतमिनकुलमथ मुनिमखरक्षा । यदपि विहिता कर्मसु पदरजसा दक्षा ॥
त्र्यंबकधनुरपि भग्नं तदनु वृता स्वक्षा । विजितः पथि पाटितपरपृथ्वीप्रतिपक्षाः १
राज्यं तृणवत् त्यक्तं गुर्वर्थं सहसा । या शूर्पणखा विकृताऽकार्यरिदुःसहसा ॥
सुग्रीवमतिर्मुदिता व्यरचि धनुर्महसा । लंकादाहात् प्रभृति त्रिदशसभा सहसा ॥२॥
बंधनमब्धेः कपिभी राक्षसबलदलनं । भक्तबिभीषणराज्यं यस्यास्ति न चलनं ॥
भक्तमयूरं प्रति यत्करुणाघनवलनं । वाल्मीकेरपि यशसोऽशक्यं परिकलनं ॥३॥

## अथ श्रीविठ्ठलस्य.

जय जय विठ्ठल भगवन् करुणामयमूर्ते । धूर्ततरखलदुष्पनतसर्वेप्सितपूर्ते ॥ धु० ॥
श्रुतिशास्त्राचारानधिकारादतिमलिना । जीवास्तव स्मरमृतवंदितपदनलिनाः ॥
ते सांजलिना दूराच्छमिताः खलु कलिना । कालेनापि कवलिताखिलजगता बलिना॥१॥
भवताधिष्ठितमनिशं भीमरथीतीरं । वैकुंठीकृतमिह नो रमयति कं धीरं ॥
जडमपि कुरुषे सुपटुं याचि यथा कीरं । शिरसि बिभर्ति धृतं ते येन चरणनीरं २
त्वां मेघमिव मयूरा दृष्ट्वा तव भृत्याः । प्रेमाश्रुप्लुतनयना भृशाविस्मृतकृत्याः ॥
व्यक्तं मंक्षु भवंति प्रमुदात्तकृपया । मुक्तिर्वृणुते तानुरुगाय मनोवृत्या ॥ ३ ॥

---

## मोरोपंतकृता मुक्ता-माला.

### गीतिवृत्तम्.

पुण्यश्लोकशिखामणिचरणं शरणं सतामतापकरम् ।
वन्दे नतनरकपिसखमखिलजितं मखभुजां महः प्रथमम् ॥ १ ॥
वरदानव्रतवित्तं वन्दे करुणासुधैकघनचित्तम् ।
निस्पृहनिर्भयवित्तं श्यामलमतिशयितदयितमनिमित्तम् ॥ २ ॥
बहुभिः कृतं चतुर्भिः पङ्क्तिरयः पुत्रिणामभूत् प्रथमः ।
बहुदानामपि पुत्रो धर्मार्थसमो दशो यदौदार्यात् ॥ ३ ॥
गाधिज भवतोऽधीतं शिष्यैः कतिभिर्न गालवप्रमुखैः ।
वरमेको दाशरथिः पिबतामुदधेरपोम्बुदो ह्यधिकः ॥ ४ ॥
मातरहल्ये स्पृष्टा येन पदा तमपि पूजयसि बालम् ।
नूनं स तव सतीर्थ्यः पदाहतोप्युरसि यो ननाम भृगुम् ॥ ५ ॥
अबलाकृष्टमपि सदसि धनुरैशं हा कथं नु भग्नमिति ।
भीतमिवानतकन्धरमाश्लिष्य ददाविवाभयं भगवान् ॥ ६ ॥
सर्वंसहापि धनुषस्तस्य चकम्पे रवेण घोरेण ।
बालापि भृशं मुमुदे सीता मृदुनेव वेणुनादेन ॥ ७ ॥
गुरुणा योगं कर्तुं सञ्जीविन्येव सीतयाऽङ्गुल्या ।
सर्वमतेन विनाशश्चापेनाङ्गीकृतः कचेनेव ॥ ८ ॥
बहुभुजमरिमजयमिति किमनेन दैवं तु हेतुरत्रैकम् ।
ग्रसते सहस्रकरमपि काले राहुर्हि विकलोपि ॥ ९ ॥
भगवन् वसिष्ठ कथमिदमधुनैव मुहूर्तमीदृशं दत्तम् ।
क्क वनप्रयाणमहह क्क च पुनराज्याभिषेक-महकालः ॥ १० ॥

पङ्केरुह-श्यामध्वानि तं केवलमङ्गनानुजानुगतम् ।
शङ्के धावितमीक्षितुमङ्के विस्मृत्य शिशुमपि स्त्रीभिः ॥ ११ ॥
नृत्यन्मयूरपरिवृतमेणकुलानुगतमलिभिरुपस्पृष्टम् ।
तं घनदूर्वापुञ्जश्यामलमञ्जाननं भजेऽनन्यम् ॥ १२ ॥
सीताप्यमृतकरी यो राजपरैः सदा शिरोधार्यौ ।
गौरासितौ वरमणी पौरा बत हारितौ प्रमादेन ॥ १३ ॥
मात्रा मात्रास्वेति प्रहितो वनमाल्यपालिजं धर्मम् ।
पित्रापि त्रातुं यस्तं धर्मज्ञोत्तमं जगुः कवयः ॥ १४ ॥
किमिति निषाद विषादः पश्य कुमारोऽयमर्ककुलपालः ।
वनमागतोऽपि वल्कधरोऽपि जटिलोऽपि नृपोत्तमश्रिया श्लिष्टः ॥ १५ ॥
कुशली तेऽस्ति कुमारो मारोदीरेव तं बहोः कालात् ।
तृषिताः पिबन्तु वन्याः संन्यासिन उत्सुकाः सुकार्थमिताः ॥ १६ ॥
पर्वे पितुरुरसङ्गे सङ्गे मातुः पुरे पुरेव सुखम् ।
इति भवदात्मजमतमत आत्मानं देवि कानने मंस्थाः ॥ १७ ॥
नन्दन वनं भजेति त्वमवोचः सत्यमजकुलोत्तंस ।
स तु वनमगात् तमीक्षितुमविचार्य गतोसि नन्दनं हन्त ॥ १८ ॥
अमृतमपि नाम पिबतस्तापो बहुलीभवत्पदः किमिति ।
भर्तुं नु दशरथ त्वं दशावस्थाकुलेक्षणो यातः ॥ १९ ॥
स्त्रैणं त्वामूचुरहो रहोगता मन्त्रिणो न मुनयोऽपि ।
साकममरपतिना के नाकेऽपि भवन्तमागतं वीक्ष्य ॥ २० ॥
शोच्यासि त्वमयोध्येऽपहतमटव्या त्वदीयसौभाग्यम् ।
पतिमिच्छन्त्या भाव्यं त्वयाद्य मातर्विपक्षवेषजुषा ॥ २१ ॥
मा मातरमवमंस्था भरत स्वगुणप्रकाशहेतुमिमाम् ।
सेकादधिकमशोके कुशलं पादाहतेर्यदि वरं सा ॥ २२ ॥
विषयविरक्तिर्गुरुपदभक्तिरखिलसज्जनेषु महितत्वम् ।
इत्थं सत्यं वद परपक्षं मा जातु मातुरवमंस्थाः ॥ २३ ॥
मातः कैकेयि जगति कृतिषु कृतोपकृतिषु त्वमेव वरम् ।
यदखिल-लोकहितं कृतमुररीकृत्यापि दुःसहं व्यसनम् ॥ २४ ॥
कास्यान्यास्याज्ज्ञासवमधुपी त्वत्तो नृपस्य बहुमान्या ।
दास्या हास्यास्पदतां सरले नीतासि देवि मन्थरया ॥ २५ ॥
उदिते नीतिमदमतं मुदितं सिद्धिं समीक्ष्य भोक्तुमलम् ।
उदितं फलमनय तरोरुदितं बत मन्थरे त्वया किमिति ॥ २६ ॥

शोक-दव-ज्वालावृत-शुद्धान्त-वनैकसंश्रया मृगयः ।
बाष्प-स्नातारितव्रत जीवनदः क्व नु स साम्प्रतं मृगयः ॥ २७ ॥
दीपक इव निश्वासैर्न हि शोकशिखी प्रयाति निर्वाणम् ।
बत वर्धतेऽश्रु-सलिलैरपि तूष्णीं कैरत्वयं सुखं नेयः ॥ २८ ॥
चिन्ते किं ते विषयैर्ध्यातैः क्षणभंगुरैर्विषादफलैः ।
दास्यति लब्धा कामं कामं का मङ्गला मुदं सम्पत् ॥ २९ ॥
मूर्तः सदयः सदयः सरसः सरसः सुधैकपरिपूर्णात् ।
शमयन् नमतां ममताशमलं शमलं ददाति कोपि जटी ॥ ३० ॥
क्वापि तपस्विजनानां तपसां सिद्धिर्महेश-गल-माला ।
नीलापीलाधरमुपहसति गुणैरिन्दुमपि पयोधिमपि ॥ ३१ ॥
भवने पटुस्त्रिजगतामवनेशाः प्रियोपि जामाता ।
भवने विधातुरीड्यः स वने सवनेत्रिनायको नयति ॥ ३२ ॥
रक्षो-बल-दलन-विधौ दक्षो वक्षोनगिरिहरिर्लक्ष्यः ।
पक्षो नयति वलक्षोऽस्माकमधिक्षोणि शक्र-नील-निभः ॥ ३३ ॥
अव्ययमदस्युगोचरमुर्व्यपि न मदमदं पदं प्रमुदाम् ।
वित्तमनीह मनोहरमस्माकं चित्तमात्मसात्कुरुते ॥ ३४ ॥
अङ्करहितममृतकरं शङ्करहितमनिशमेधमानकलम् ।
मित्रं त्वया श्रियाप्युपकुर्वाणमहं भजे चकोरशिशुः ॥ ३५ ॥
कति न जटिला वटा इव धन्वधराः कति न कानने शबराः ।
एकः कोप्यनकुलजः कपर्दिसुमधन्वनोः श्रियं हरति ॥ ३६ ॥
यामे रजनेश्चरमे या मेघनिभा मुनिरसैश्चिन्त्या ।
सामेतरैरुपायैः सा मे भूतिर्न कैश्चिदपि लभ्या ॥ ३७ ॥
द्यावाभूमिभ्यामिव याभ्यां स्त्रीभ्यामपि प्रजाः सुचिरम् ।
निर्भयमराजकेपि त्रातास्तां पादुके नमस्यामः ॥ ३८ ॥
भरत भगवता गुरुणा सुशिक्षितनयो युवाप्यधीरस्त्वम् ।
मन्ये धन्ये त्वत्तो जडेपि खलु पादुके समे व्यसने ॥ ३९ ॥
लब्धा विराध भवता सीताऽपत्रेण मृत्यवे न मुदे ।
कपटपटुना क्षणं सुरपङ्क्ताविव राहुणा सुधाधारा ॥ ४० ॥
जङ्गम-निर्जर-तरुणा तरुणारुण-पाद-पल्लवेन सह ।
दृष्टा कनकव्रततिर्व्रत-तीर्थ-तपः-फल-प्रदा वनिभिः ॥ ४१ ॥
धन्वी जटी फलाशी तन्वी-रत्नेन सादरं सततम् ।
अन्वीयमान ईदृक् सन् वीतभयः सतामगादुटजम् ॥ ४२ ॥

अभ्रामलदीप्तिमहो बभ्राम चिराय दण्डकाभूमी ।
दभ्रामदश्चकार भ्रामपमलिनशश-धर-ज्योत्स्नाम् ॥ ४३ ॥
सहसैव पञ्चवट्यां हरिणा हरिणानुयायिना स्वगृहा ।
सापि च भुक्ता मुक्ता नीता बत वञ्चकेन केनापि ॥ ४४ ॥
नीता शुनाशु नाशायात्मन एवासि पुत्रिके मोहात् ।
हास्यति नो निधनमृते न मृते स्वयमत्र किं तवोत्कर्षः ॥ ४५ ॥
तदिदमुपस्थितमचिरादयचोचोऽनागसं किमप्यम्ब ।
पात्रे दानं क्षेत्रे बीजं बहु भवति गुप्तमुप्तमपि ॥ ४६ ॥
तप्तो वाचालतया विषमय्या भुक्तयेव बालमृगः ।
शप्तो वाचालतया कथमनघोऽप्येष देवरो देवि ॥ ४७ ॥
एकं क्षणमपि धीरैरपि नूनमसह्यवेदनावाचः ।
स यदपससार सहसा सौमित्रिः साश्रुराश्रमादाशु ॥ ४८ ॥
दस्यो क्व त्वं यास्यसि हृत्वा रत्नं जगत्त्रिवासस्य ।
कुत्र निलीय स्थेयं मत्स्येनागस्कृता पयोराशेः ॥ ४९ ॥
अदृश्यां कथमनया त्यक्तां छायामिव स्ववत्सलताम् ।
गरलप्रसवां कथयस्यमृतमयीमादितोऽपि मत्स लताम् ॥ ५० ॥
सा कुत्र पर्णशाले माले हार्दैव या मया निहिता ।
लब्धा मिथिलाजानेर्जानेऽस्या सापहारिणीं लाहम् ॥ ५१ ॥
गोदावरि सा क्व गता जगता सत्येति संस्तुता त्वमसि ।
तमसि च्युतरत्नं जनमञ्जनदानेन मामनुगृहाण ॥ ५२ ॥
कासार-कुन्द-कदलि-करि केसरि-कृष्णसार-केकि-पिकैः ।
अलि-चम्पक बन्धूकैः शून्ये बत सुन्दरी विभज्य हृता ॥ ५३ ॥
अयि ते दयिते मयि तेऽमी सन्ति कृतप्रतिक्रियाः कृतिनः ।
गुण-लव-जितोऽमृत-द्युति-हरिणः करिणस्तथैव केसरिणः ॥ ५४ ॥
यद्यपि गणरात्रं गतमद्यैवाहं समागतोऽस्मि वनम् ।
यद्रहितो भद्रहितोऽसवसुवसत्या श्रिया तया सत्या ॥ ५५ ॥
मृगया-वीक्षण-विजितं शक्ष्यसि नो वीक्षितुं बत त्रपया ।
मृगयामि क्व नु तां वद मित्रमहं ते वनेचरो रामः ॥ ५६ ॥
सीनाऽसि किमेकान्ते कांते कां ते त्वलङ्घ्यं वाचम् ।
विरह-ज्वर-विपदपि ते दयिते दयितेतिदुःसहा धीरे ॥ ५७ ॥
सत्यन्तकेऽप्यराती सत्यं सोढुं तमप्यहं धीरः ।
सत्याश्रिताङ्गि ब्रूमे सत्यं ज्वलतोन्तरेऽपि किं विरहे ॥ ५८ ॥

दृष्टं यत् सत्या गो-वत्स-व्यायोगोचितं मयि प्रियया ।
तत् किं त्वया न वीक्षितमक्षि तथाप्यनलसं मदाचरणे ॥ ५९ ॥
वीजय मामत्र स्वतः पत्रस्वतः पल्लवोमृतवततेः ।
सुदति श्वयस्ते व्यजनान्मुदातिशयस्यैक-हेतुरव्जकृतात् ॥ ६० ॥
कानन तदासि नन्दनमधुना पितृकाननं सुविरपष्टम् ।
अहमपि हरिरभवं त्वामृते त्विदानीं श्रियं महाभूतः ॥ ६१ ॥
नित्यं निरन्तराभ्यां सुदति गुरुभ्यां निसर्ग-कठिनाभ्याम् ।
मृदमुपदिष्टं हृदयं तव स्तनाभ्यां स्वभावमृदुलमपि ॥ ६२ ॥
किं दोषाकर यच्चयहीमिन्दो निन्दोचितं कुरु स्वैरम् ।
यस्य श्रियासि सुभगस्तस्मिन् मित्रे गतेऽस्तमुल्लससि ॥ ६३ ॥
वत्स न यदि ललना किं लोलेनालिङ्गिता मया लतिका ।
अस्तु तदनुकृतिदयितामहमेनां झटिति नोत्सहे हातुम् ॥ ६४ ॥
असवः क्व स यः प्रिय-सख एकाकी वन इतो गतो दूरम् ।
अलसा जलसारसयोर्न हि शोभा जीवनं मिथो विरहे ॥ ६५ ॥
नीता वधूर्न दस्योस्त्रातिस्त्यक्तमार्य तेन पापेन ।
शापेनेव सखा तेऽधर्मेण हतोऽस्यनेन पापेन ॥ ६६ ॥
कश्चन युवा तपस्वी विरही परिपत्वने तरु-ततती: ।
व्रत-तीर्थ-परा मुनयोऽनुनयोदारोक्तयस्तमानर्चुः ॥ ६७ ॥
अमृतममृत-फलवदरं बदरं प्रेम्णा बभक्ष चित्रमिदम् ।
तदपि च शबरी-दत्तं मत्तं मङ्क्ष्वं न यामियं मुनिवाक् ॥ ६८ ॥
किमधिकमतोऽस्ति चित्रं मित्रं विपिनौकसां श्रुतिरहस्यम् ।
यद्दर्शनाय यतिभिः पतिभिः पृथ्व्या मृगायितमरण्ये ॥ ६९ ॥
वासव-वैभवमूनं चक्रुः कपयोऽप्यहोऽद्भुतं शृणुत ।
पपुरमृतमागलं ददुरग-नग-खग-मृग-रिपुभ्य उत्सवतः ॥ ७० ॥
पत्युः करतस्त्वामप्युटजान्मामिव कथं बलाद्धृतवान् ।
न स मुद्रेऽत्र समुद्रे नौ नौवत् त्रातुमागतः कस्मात् ॥ ७१ ॥
स्वपतिस्त्वसतां हन्ता हन्ताऽहं तापमनुभवाम्यबला ।
तुल्यैवाधिसमुद्रे मुद्रे मुद्रेत्वया लिखितयाप्सु ॥ ७२ ॥
अखिल-प्रश्रय-पात्रे सखि लक्ष्मीवान् स लक्ष्मणः कुशली ।
निखिललक्ष्यगुरुर्हरिरिव मखिलब्धास्त्रः स चापिवीरमणिः ॥ ७३ ॥
स्वं भागमिवादातुं हरिरिव हरिणेष्विहागमिष्यति किम् ।
मां सान्त्वयितुमनाथां नूनं त्वं प्रेषितासि दयितेन ॥ ७४ ॥

द्रष्टुं मातरिह त्वामार्य-प्रहितोऽहमागतो दूतः ।
सूतः प्रथमं रविणा नलिनीमिव जयति सोऽस्त्रिपुरुहूतः ॥ ७५ ॥

ग्रीष्मे गज इव सरसीं त्वां सीतां काननेष्वनासाद्य ।
भ्रान्तस्वान्तः श्रान्तः को तद्वयथां प्रवीण्यम ॥ ७६ ॥

गोष्पदमिव तीर्ण उदधिमयमहमबलोऽपि यस्य दासवरः ।
कथमर्णवमेकमरिं पत्रिपति-जवस्तरेन्न तस्य शरः ॥ ७७ ॥

अदहदज-भव-प्रहितोऽनन्त-बलो रिपुमाशुगः स हरिः ।
अयमपि तथैव वित्तः पश्यत पीताम्बर-श्रियाश्लिष्टः ॥ ७८ ॥

कोप्याह यतो धर्मस्ततो जयः सत्यमिति कविप्रवरः ।
यत् खलु विजितः सदनुग-कपिना स पिनाकि-वर-सुरोन्मत्तः ॥७९॥

न कपिरनुक्रोधिरपि न परवान् वन-भङ्गमरि-पुर-दाहम् ।
किन्तु क्षुब्धाः सत्या निश्वासा एव चक्रुरत्युष्णाः ॥ ८० ॥

असुर-प्रियाभिरारात्पाखण्डोक्तिभिरशङ्कमशिवाभिः ।
रुद्धा वने कलावुपनिषदिव कुटिलाशयाभिरेकसती ॥ ८१ ॥

आर्यमय र यमहित-स्त्री-रुद्धां तां नितान्त-तान्त-तनुम् ।
अधिकंटकारिकावृतिधर्मे इवोत्खात-रोपितां जातिम् ॥ ८२ ॥

कपयः स पयः केवलमब्धेस्तीर्णः सखो न बाहुभ्याम् ।
व्यक्तं नक्तंचर-वर-बलमपि कपि-सैन्य-दैन्य-हर-तेजाः ॥ ८३ ॥

रक्षति कथमपि तन्वी देहादधिकं श्रुतीदशावपि सा ।
अरि-सुन्दरी-विलापं मधुरं त्वामपि च पातुममृतमिव ॥ ८४ ॥

दग्धुमना अप्यबला बाल-तृणानि क्षणादनार्द्राणि ।
दहन-शिखेव सखायं त्वामेवास्ते सती प्रतीक्षन्ती ॥ ८५ ॥

बन्धुरपि वस्थ्ये यः संश्रयदः स नष्टधी रिपोरिष्टः ।
किं प्रार्थ्यतेऽतिविलं बध्यो लङ्घ्यस्त्वया जनश्चाब्धिः ॥ ८६ ॥

राज्ञा गुरुणा त्यक्तो न विषयसक्तः सतां मतोऽत्यर्थम् ।
दैवात् खलु समशीलव्यसनः प्राप्तः सखा बिभीषण ते ॥ ८७ ॥

जीवेत्याशीरुचिता दातुं नमते विचार्य दत्ता श्रीः ।
न मनाक् पात्र-विचारो नमनात् सर्वस्व-दानमाश्चर्यम् ॥ ८८ ॥

राम त्वया त्वयात् खलु सम-दुःख-सुखः सखा समासादि ।
व्यसनमुदधिं सुदुस्तरमन्योन्यबलेन यत् सुखं तीर्णौ ॥ ८९ ॥

अविलङ्घित-मर्यादं बबन्ध बन्धुं गुरुं ललङ्घ बली ।
भक्तं जघान शम्भोर्मुनिसुतमपि कोऽपि हंत दारकृते ॥ ९० ॥

वन्दे तं देवीनां हत-शोकं राक्षसी-विलाप-गुरुम् ।
वंगुरुकच्छवृत्तयो यं तापापहमसभोगिनामगुरुम् ॥ ९१ ॥
जटिलस्तमाल-नीलो वन-वासिसखः पतङ्ग-कुल-पालः ।
कश्चन ददाह खे-चर-भूभृतमधिजलधि तापहा दावः ॥ ९२ ॥
मेघेन केनचिदहो धनुष्मता भू-गतेन शर-वृष्ट्या ।
जल-पूर्णा वाहिन्यः खगमा निर्जीवनीकृताः सिन्धौ ॥ ९३ ॥
तृणकाननं ददाह न कीलाल-नदीः ससर्ज ताप-हरः ।
कश्चन पतङ्ग-कुल-जस्तमाल-नीलस्तनूनपात् तरुणः ॥ ९४ ॥
कपि-सख एकः कश्चन चक्रे नाकौकसां क्षणात् कुशलम् ।
यत् कुलिश-कर-सुदुष्करमकालकूटाश-शिखि- साध्यम् ॥ ९५ ॥
आस्तां यद् वधमकरो रक्षोधिपते रणे पणेन त्वम् ।
सोऽपि प्राप्यं राज्यं प्राणान् प्रजहौ न तु प्रतिज्ञां स्वाम् ॥ ९६ ॥
आपदमाप्तुं स्पृष्टस्तापदमुग्रं कथं पर-कलत्रम् ।
पाप-दवानल-दग्धो हा पदमखिल-श्रियां त्वमपि वीर ॥ ९७ ॥
अन्य- कलत्रं विषमं विष-वन्हेरपि तमं पदामूलम् ।
स्पृष्ट्रैकदैव दग्धो गुण-दोषज्ञोऽपि बत समन्त्रि-कुलः ॥ ९८ ॥
नक्रमिवाशोकवनेऽप्यनिरीक्ष्य प्रिय-त्तमं तमां ताता ।
दृष्ट्वा तु वन्हि-कुण्डेप्यहनीव सरोजिनी बभौ कान्ता ॥ ९९ ॥
सुहृदो वियोग-योगौ नान्यौ स्तस्तापतोषयोर्हेतू ।
प्रमद-वने ग्लानिमिता तुष्टि दहनेऽपि यत्प्रिये दृष्टे ॥ १०० ॥
विमल-कनक-मूर्तिरिव ज्वलनेऽप्यसि देवि लब्ध-परभागा ।
मागा विषादमधिकोक्षतिमाता त्वं जगत्सु यदनागाः ॥ १०१ ॥
अवताद् बिभीषणस्त्वां लङ्के यं केसरीव मेरुगुहाम् ।
आकल्पमचल-पद-भागेष पतिर्भुव-सखस्तवास्तु सुखी ॥ १०२ ॥
भवमिव दुस्तरमुदधि तीर्णास्त्वां देवि सुगतिमिच्छन्तः ।
अव-लम्ब्य स्वोत्पादितमचलात्मानं सु-पुत्रमिव सेतुम् ॥ १०३ ॥
सुषमा-जित-घन-शम्पे पम्पेयं पेय-वाणि चिरमस्याम् ।
सुदति रुदितमपि शिखिभिर्नृत्यद्भिरसद्भिरिव भृशं मुमुदे ॥ १०३ ॥
पञ्चवटि त्वय्युषिताः श्रमयोध्यायामिवाप्त लब्धाः स्मः ।
मामियमितारि-कीर्त्या सह सिन्धुं स्वरपगेव कालिन्द्या ॥ १०५ ॥
भो मातर्गोदावरि यावरि-करि-हरि-पती सती- सहितौ ।
सु-चिरमुषितौ त्वदङ्के कौसल्याया इवाम्ब तावेतौ ॥ १०६ ॥

तुभ्यं बद्धोञ्जलिरयमीश-शिरःशारसाराने देवि ।
गुर्वीमुल्लङ्घ्य त्वां तीर्णाः कथमापदं प्रतिज्ञां स्याम् ॥ १०७ ॥
तृषितोऽसि बाल-चातक तातं करुणया गतोद्य जीवनदः ।
पद्मयोन्मीलय नयने नयनेहामृतमनेहसं पातुम् ॥ १०८ ॥
शृणुत मयूरा यं प्रियमीक्षितुमत्यन्तमुत्सुका मुचिरम् ।
स महाभागत आगत उत्सव ऐकान्तिकेऽद्य नृत्यध्वम् ॥ १०९ ॥
सिंहासन किं शासन पतिरद्य स्मर्यते महेन्द्र-सखः ।
ये नास्यखिल-नृपति-पति-नति-भाजनममृतपायि पीत-यशाः ॥११०॥
नाके साकेत-यशो-रुचिममृत-रसेऽमृतान्धसामकरोत् ।
स्त्र्ये स्त्वेक-पदं स्वं ताण्डव-पण्डितं मृडानीशम् ॥ १११ ॥
परपदो पदा साध्वीं विश्वस्तं वीरमपि जघान वने ।
तत्याज सतीं कोऽपीनवंशजानां सतां मतः कुपतिः ॥ ११२ ॥
यदमृतममृत-भुजामपि यच्च सुखं योग-संपदामतुलम् ।
उपनिषदां यत् तत्त्वं तदयोध्या-वासिनां विधेयमहो ॥ ११३ ॥
मातरयोध्ये भुक्ताः पतयः पारे शतं त्वया सत्या ।
स्मरसि कथं न तदधुना मधुना ननु मोहितामुना पत्या ॥ ११४ ॥
इति श्रीरामनंदन-मयूर-कृता मुक्ता-माला संपूर्णा.

---

## त्रिविक्रमकृतं व्याजोक्तिशतकं.

### शिखरिणीवृत्तं.

मधूलीभिर्भृंगान् मधुरफलसारैरपि शुकान् ।
समुन्मीलन्मंचत्किसलयभरैः कोकिलचयान् ॥
प्रणेतुं सौहित्यं प्रभवति नितांतं कटु रटन् ।
रसालः प्रत्यूहो भवति न हि चेत् कोपि करटः ॥ १ ॥
अनौचित्यो धातर्विधिरनवधिस्ते विजयते ।
यदस्मिन् माकंदे शुकपिकमुखानंदजनके ॥
अनेकानत्यंतं श्रुतिकटुरसोत्पादनपटून् ।
स्त्रजन् काकान् लोकान् हृदि निहितशोकान् कलयसे ॥ २ ॥
मिलिंदैर्माकंदः स्वकुसुममरंदैकरसिकैः ।
रमंदं गुंजाद्भिः श्रुतिमधुरझंकारसुभगं ॥
मृतो धन्योसि त्वं करटहतकात् किं कलयसे ।

न ते तत्वं जानात्यहह खलु निर्भेदपणिनः ॥ ३ ॥
प्रसूनैरुन्निद्रैः परिणतफलैः पल्लवचयैः ।
परागैश्छायाभिर्मधुरमधुभिः सौरभभरैः ॥
जनानामानंदं जनयदपि माकंद भवतो ।
विगीतं जन्माभूत् कटुरटदरिष्टाहितपदं ॥ ४ ॥
विकासे पुष्पाणां परिमधुरमाध्वीमविरतं ।
पिबन् गुंजन् मंजु भ्रमतु परितस्त्वां मधुकरः ॥
कषायं यत्किंचित् तव किसलयं चर्वितवता ।
पिकेनैव ख्याति दिशि दिशि रसालासि गमितः ॥ ५ ॥
न रम्यं सौरभ्यं न च मधुररसस्योदयकथा ।
फलं तन्नोद्भिन्नं भवति यदि तत्कंटकयुतं ॥
रसालं किं हित्वा भजसि सरसं भृंग पनसं ।
विवेकप्रोन्माथी भवति हि दुराशाव्यतिकरः ॥ ६ ॥

## शार्दूलविक्रीडितं.

कोकानंदकरः सरोरुहकुलं यद् द्वेष्टि शीतद्युति-
र्बीजं तत्र किमस्य पंकजनिता किं तस्य दोषोदयः ॥
ज्ञातिस्त्वं किमयाब्जयोस्तदुभयोरब्जं न किं कैरवं ।
तन्न द्वेष्टि कुतः शशी विलसितं दैवस्य तत् तादृशम् ॥ ७ ॥
शीतांशो द्विषता सरोरुहकुलं लब्धं त्वया किं फलं ।
का हानिः सरसीरुहस्य भविता द्वेषेण ते तावता ॥
किं मन्नः प्रणयो रवेरपहृतं किं सौरभं किं रसो ।
नीतः किं निहिता विकासकलना किं न्यूनमंभोरुहे ॥ ८ ॥
माध्वीकाय मधुव्रताः फलरसास्वादाय हारीतका-
श्चंचत्पल्लवचर्वणाय च पिका माकंद संतु त्वयि ॥
किं ते. [illegible]
योयं [illegible] ॥ ९ ॥
उद्यत्सौरभसंभृते मधुरसोदारे रमामंदिरे ।
हे रोलंब चिरं तनोऽसि सुखितो यस्यांबुजस्योदरे ॥
तस्मिन्नद्य निमीलिते विधिवशाद् धिक् कैरवं सेवसे ।
स्यादेवं पुनरेत्य तद्विकसितं न त्वं कथं लज्जसे ॥ १० ॥
लोके पुष्पफलोद्गमैरविरलैरानम्रशाखाशिखा ।
वृक्षाः संतु नितांतकांतवितनच्छायायुताः कोटिशः ॥

ये दावानलदाहितार्धवपुषोप्यामोदिभिः सौरभैः।
लोकानंदमुदंचयंति त इमे धन्याः पटीरद्रुमाः॥ ११ ॥
मीनाद्याः कति नो वसंति जलजाः किं तैरनंतैर्वयं।
धन्यं सारसलक्ष्मणस्य सफलं जन्मेति मन्यामहे॥
येनैवात्र मधुव्रता मधुरसैः संप्रीणिता दिङ्मुखं।
सौरभ्यैः सुरभीकृतं सितगरुद्वृंदं विसैस्तोषितं॥ १२ ॥
धूमस्तोम नभः समेत्य भवता मेघानुकारे कृते।
भ्रांतो नृत्यतु नाम संभ्रमलसद्दर्हो मयूरीगणः॥
सौहित्यं किमु चातकः कलयते किं वातिसज्जृंभते।
किं भूः शाद्वलशालिता कलयते कुर्वंति किं हालिकाः॥ १३ ॥

शिखरिणीवृत्तं.

चकोराणां तोषं कुमुदवनवाटीविकसनं। तमःस्तोमच्छेदं सकलजगदानंदनविधिं॥
प्रकुर्वन् यां कीर्तिं भुवि समभजस्त्वं हिमरुचे। हता सेयं कोकीकृतविरहशोकेन सकला।

उपजातिवृत्तं.

स्वतः प्रफुल्ले सति पद्मकोशे रसं प्रभूतं कलयेन्मिलिंदः।
बलाद्विकासं गमिते तु तस्मिन् न तत्र गंधो न च वा मरंदः॥ १५॥

शार्दूलविक्रीडितं.

भृंग क्षुल्लकफुल्लहल्लकवनीमेना चिरं संश्रिता।
मुंचन् सौरभमात्रसंभृततया धिक्केतकीं सेवसे॥
सा किं त्वां प्रधिनोति कौसुमरसैर्यद्योपि निष्कंटकः।
स्तस्याः भविता भुजंगमविषज्वालाकरालात्मनि॥ १६॥
माकंदादिमहीरुहाश्च लतिका मल्लीमतल्लीमुखा।
लोकानंदविधायिनः क्षितितलेप्येतेषु सर्वेष्वपि॥
भूयिष्ठं सरसो लभेत सरसं भृंगः पतंगाधमैः।
किं लभ्यं रसगंधबंधकलमागंधानभिज्ञैरिव॥ १७॥
कासारान् समुपेत्य सारसवनोत्तंसांस्तुषारांभसो।
हंसाश्चर्वितकांतकोमलबिसाः खेलंति तद्वीचिषु॥
विंदंतः सरसं प्रसूनजरसं गुंजंति चेंदिंदिरा।
निष्पंदं नियमंत्यहो नव बकाः कीयान् निहंतुं चिरं॥ १८॥
सच्छिद्रप्रसवप्रभूतविभवे ये तां विनापि क्षणं।
न स्यातुं प्रभवंति भूरि मधुभिः संतर्पिताः षट्पदाः॥




चित्तेनापि न हि स्पृशंति थिगमूं मद्वीमिमां केऽ[illegible]
धन्यात्पापि पिपीलिका ह्यनुगता कालेप्यकालेपि [illegible] ॥ १९ ॥
क्षीराब्धेः सममेव किं न जनितौ शीतांशुरौर्वानल[illegible]
श्चानंदं प्रथमस्तनोति जगतां पादैः सुधास्पंदिभिः ॥
अन्यस्तूत्कटकीलजालजटिलः संशोषयत्यंबुधिं ।
नैवात्राभिजनः प्रमाणमुदितं शीलं हि तत्कारणं ॥ २० ॥
शीतांशुत्वमुखाः सुनिर्मलगुणा दोषाकरत्वेन ते ।
नक्षत्राधिपते हता यदुदयं प्राप्तेन येन त्वया ॥
कोकाः शोकमिता निमीलनदशां नीता सरोजाटवी ।
भीताः प्रोषितभर्तृका मृगदृशो यातं सतां तेजसा ॥ २१ ॥
दूराच्चंपक किंपचा न भवतोभ्यर्णं समभ्यागतान् ।
भृंगानंग निराकरोषि नितरामत्युत्कटैः सौरभैः ॥
किं तेषामथवा तव क्षतिरसौ सत्येव मद्धीमुखा-
स्तद्विश्रांतिकृते रसज्ञविमुखं जन्मैव ते निष्फलं ॥ २२ ॥
मुक्ताहार हरावतंसविलसत्कांते कपिः कंधरां ।
त्वां नीतं कुधिया भवंतमधुना निघ्नन् क्षिताविक्षिपन् ॥
का हानिस्तव तावता मृगदृशां वक्षोजकुंभस्थले ।
लीलाखेलनयोग्यता विनिहता मूल्येऽभवन्न्यूनता ॥ २३ ॥
त्वं खेदं करभावहेलनकृतं माकंद मागाः सखे ।
तेषां चेतसि पारिभद्ररसिके किं ते विशेषुर्गुणाः ॥
अस्तु स्वस्त्यलिने समस्तसुमनःपालीमधूलीमिल-
न्माधुर्याधिकमार्मिकाय भवतः सोयं रसज्ञो भुवि ॥ २४ ॥
आखेलंतु लुठंतु मीनकमठा भेकाः परेनेकशः ।
स्वैरं पाथसि भंगकारि वल्गनैः कासार किं तैस्तव ॥
आजीवंतु चिराय तानि कमलान्यत्रस्थभृंगांगना-
गीतख्यातगुणानि यज्जननतः ख्यातोसि पद्माकरः ॥ २५ ॥
आशासंभृतभूरिसौरभभरप्रोन्मीलिताशावशा-
दत्र स्यादपि कौसुमो रस इति भ्रांत्यागमः केतकी ॥
का नामात्र कथा रसस्य वलनेप्यत्रावकाशः क्व ते ।
भृंग त्वं यदि यासि कंटकशतैरच्छिन्नपक्षः कृती ॥ २६ ॥
कासारेषु दलत्पयोरुहचयेषूल्लिद्रनानालता-
कुंजेषु प्रसवस्रवन्मधुरसस्फीतासु वन्यास्वपि ॥

सायन् भृंग सलीलमंग कुसुमायातोसि तां शाल्मलीं ।
किं तस्यां रसगंधयोरिह सखे गंधोपि लब्धस्त्वया ॥ १७ ॥

स्रग्धरावृत्तं.

आमूलादाफलान्तं कलय परिचयं मौन पाथोरुहिण्या ।
उड्डीयोड्डीय यातः पत परिलुठ वा किं कृतं तेन तस्याः ।
किं कैलासे विमाना कथयसि च रुचिं सारतायं रसानां ॥
पीशाणां पेसि किंवा गमयसि सुरभिं गंधमाशामुखानि ॥ १८ ॥

शालिनीवृत्तं.

काकैः सार्कं कोकिलानेकशालं माकंदद्रो त्वत्प्रसूनैकवृत्तीन् ।
नीत्वा गर्हामर्हसि त्वं नितांतं वाणी तेषां कल्पते गौरवाय ॥ १९ ॥

शार्दूलविक्रीडितं.

आयाताः खलु दूरतः शुकपिका माकंदमुद्यप्रिया ।
मामित्येव न गर्वमुद्वह पुनर्प्रार्तिर्न केषामिह ॥
निब त्वद्गुणसंस्तवे सति न ते तिष्ठंति नाम क्षणं ।
येषां त्वं प्रणयी तव प्रणयिनस्ते संतु काकास्त्वपि ॥ २० ॥
कैलासं व्रज मानसे चर भज स्वाम्यं यशःसंपदां ।
स्वाप्यस्याम्बुजदृशां विलासगमनस्याचार्यकं प्राप्नुहि ॥
हंस त्वं बिसमात्रपर्यवसितग्रासः परं खिद्यसे ।
धन्योयं परभृद् द्विजार्पितबलिं भुक्त्वा सुखं जीवति ॥ २१ ॥
कीराः स्वादुफलान्यदंति मधुपः स्फीतं मधूकोरसं ।
भुंक्ते पल्लवतल्लजांकुरमभी खादंति पुंस्कोकिलाः ॥
एते मत्कृतजीवना इति मुधा माकंद मागाः सखे ।
गर्वं तन्मधुनाधुना कृतमिदं तेन त्वमत्र कृतः ॥ २२ ॥
नो पुष्पोद्गमसंकथा फलरसैर्नानंदनं देहिनां ।
न छायाश्रयणे फणाधरभृतो विस्रंभगंधस्तव ॥
लोकानंदकरं वदंति तदपि त्वां गंध गंधय– ॥
श्यामाक्षिकुचभारसंभृतभवत्पंकेन तद्गौरवं ॥ २३ ॥
पद्मासद्मनिकेतनोसि सुदृशां धम्मिलसाम्यश्रिया ।
पाधारोसि मिलिंद सर्वजगतानंदाय गुंजन्नसि ॥
पुष्पाणां गुणमार्मिकोसि तदपि प्राप्तोसि गर्हास्पदं ।
यत् त्वं कृंतसि कामचापगुणतामालंब्य पूनां मनः ॥ २४ ॥

यस्मिन् कांतमृणालनालकलिताहारस्तरंगावली ।
दोलाखेलनलालसः समनयस्त्वं हंस तान् वासरान् ॥
तस्मिंस्तद्घनाघनौघमलिने काले नितांताविलं ॥
कासारं सह लज्जया विसृजता हंत त्वया हो जितं ॥ ३५ ॥

**वसंततिलकावृत्तं.**

दत्से निजोदरगता लवणैकसारा वारां निधे स्वयमपः खलु वारिदेभ्यः ।
तैरेव ताः सपदि शुक्तिपुटेषु मुक्ता मुक्ता भवंति बत ताः पुनराददासि ॥ ३६॥

**शार्दूलविक्रीडितं.**

हित्वाब्जं चिरसंश्रितं घनदिनध्वस्तं ययौ केतकीं ।
तत्राभूत् करपत्रकर्कशतरैश्छिन्नच्छदः कंटकैः ॥
संप्राप्तः कितवं ततोपि च रसादप्राप्तकामः पुन- ।
र्निर्लज्जः समवाप हंत नलिनीं कुक्षिंभरिर्भ्रमरः ॥ ३७ ॥

**पृथ्वीवृत्तं.**

किर श्रवसि पंचमं स्वरसुधारसं त्रियसा स्वयंग्रहणलालसाः कलयसे परं खंडिताः ।
घनप्रिय तव प्रियं जगति कस्य नो वर्तनं तदेतदसमंजसं निजभृतां परं द्वेषणं ॥३८॥

**मालिनीवृत्तं.**

निखिलतरुलतालीपुष्पनिर्यन्मधूलीरसबहुलरसज्ञः कोस्ति धन्यो मदन्यः ॥
इति मधुकर गर्वं मागमः सर्वथा त्वं कलयितुमपि कश्चो गंधवत्या न गंधं ॥ ३९॥

**शार्दूलविक्रीडितं.**

भृंगाः स्वादुरसैः पचेलिमफलैर्हारीतकाः कोकिलाः ।
प्रत्यग्रोद्गतपल्लवैश्च त इमे सर्वे त्वया तोषिताः ॥
इत्येवं सहसोपकारनिरतं त्वां चूत मन्यामहे ।
त्वं तैरंग सहायवान् विरहिणो हंतुं न चेदुद्यतः ॥ ४० ॥

**वसंततिलकावृत्तं.**

धिक् तान् पतत्रिनिवहान् निजकुक्षिमात्रपूर्त्यै बहुक्षितिरुहान् परिभिक्षमाणान् ॥
धन्योसि चातक सकज्जलबिंदुदातुरन्यान् न जातु मुदिरान् नहि याचसे त्वं ॥४१॥

**शिखरिणीवृत्तं.**

कलाभिर्देवानां नियमयसि वृत्तिं निजतनोः ।
सुधाभिश्चैवस्तैर्भवसि जगदानंदजनकः ॥

अर्पादो न श्लाघ्यं किमिति भवदीयं विलसितं ।
द्विपन् पद्मासद्मा त्वमिह बहु गर्हास्पदमभूः ॥ ४२ ॥

## शार्दूलविक्रीडितं.

पुष्पैः सौरभसंभृतैः फलरसच्छायाप्रवालादिभि- ।
र्लोकानंदकराः कति क्षितितले तिष्ठंति नानोकहाः ॥
नो पुष्पं सरसं न वा फलरसः कोप्यस्ति नास्मिन् गुणः ।
क्रूरव्यालसमावृतो बत भुवि श्लाघ्योऽभवच्चंदनः ॥ ४३ ॥
कालोदंचितपंचमांचितरवैः कर्णामृतस्यंदिभिः ।
कांतान् कोकिल खंडितान् गमयतः श्लाघापरं ते फलं ॥
धन्योपि करटः स्फुटं कटुरवैरुद्वेजयन् देहिनः ।
पिंडान् सादरमर्पितान् भुवि जनैर्भुक्त्वा चिरं क्रीडति ॥ ४४ ॥

## वसंततिलकावृत्तं.

भेकाद्यनेकविषवारिभवेषु दाशास्त्वामेव मीन बत जालवशं नयंति ।
त्वद्दोष एष हि दशा मदिरेक्षणानां सादृश्यभाग्यभवनं यदासि त्वमेव ॥ ४५॥

## शार्दूलविक्रीडितं.

ये ये पंकजसंपदि प्रणयिनः कादंबभृंगादयः
किं तैस्ते विषमे विहाय समये निर्यांति पद्माकरम् ॥
धन्यास्ते नववर्षवारिकलुषे तस्मिन्ननन्यैषिण- ।
स्तन्मात्राहितवृत्तयः शफरका उज्झंति यज्जीवितं ॥ ४६ ॥

## गीतिवृत्तं.

मुंचतु विपदि सरोवर मुंचतु भृंगः क्वापि मलिनात्मा ।
अवदातोसि मराल त्वं मुंचसि तामिह हंत न स्थाने ॥ ४७ ॥

## औपच्छंदसिकवृत्तं.

भवदर्पितजीवनं तदेतत्त्रसर्मिगं जगदंग वारिवाह ।
क इवास्ति समस्तयेह नोचेत्रिजयोनिप्रभवे भवान् प्रतीपः ॥ ४८ ॥

## शार्दूलविक्रीडितं.

त्वद्गर्भात् समुदंचिताः पशुशिलावृक्षाः श्रिताप्यर्पितान् ।
दत्वार्पानखिलान् समस्तजगतीचक्रे प्रशांसित यथुः ॥
क्षारं वारि वितीर्य तच्च मधुरं प्रत्यर्पितं वारिदैः ।
का श्लाघा प्रतिगृह्णतो जलनिधे रत्नाकरत्वेन ते ॥ ४९ ॥

स्फुरत्क्रूरफटाधरावलिविषज्वालावलीढोपि सन् ।
लोकानंदनहेतवे समभवत् कामं भवच्चंदनः ॥
पाटीराचल लेलिहानगिलितोद्गीर्णोपि ते मारुतो ।
दाक्षिण्यं न जहाति जातु भवतः कोन्योस्ति धन्यो भुवि ॥ ५० ॥

## पृथ्वीवृत्तं.

घनप्रियजनश्रुतिप्रियमुदंचयन् पंचमं ।
त्वमत्र वस न क्षणं व्रज भजाय मौनव्रतं ॥
न गीतरसिका अमी बत विगीतकर्मोद्यता- ।
श्चरंति हि वनेचरास्तव गुणोत्र दोषायते ॥ ५१ ॥

## शार्दूलविक्रीडितं.

माकंदादिमहीरुहप्रणयिनः सर्वे पिकाद्याः खगा ।
धिग्धिग्दैवहतं स्पृशंति सहसा काकैकभोग्यं न मां ॥
इत्यंतः पिचुमंद मा भज मुधा खेदं सदा त्वं बुधा ।
वर्षारंभमहोत्सवे नवदलं प्राश्नंति नो किं तव ॥ ५२ ॥

## शिखरिणीवृत्तं.

प्रसूनैर्नो भृंगा नवकिसलयैर्नो परभृताः ।
फलैर्नो हारीतास्तदिह न हि केनापि च जनाः ॥
अविंदन् सौहित्यं किमपि भगवन् शाल्मलितरो ।
विनिंदा निर्मातुः सरसिजभुवस्तेजाने फलं ॥ ५३ ॥

## औपच्छंदसिकवृत्तं.

पिक पाकगिराप्रतारितास्ते त्वयि हृद्यं समुदीरयंति मूढाः ।
कथयत्वधुना त्वदीयतत्वं नितरां मार्मिक एष विप्रयोगी ॥ ५४ ॥

## वसंततिलकावृत्तं.

एकालवालवलये तगरेण सार्कं । संरोपिताहमिति मालति मालिकेन ॥
निर्वेदमेष्यसि कुतः कुसुदोद्गमे वां । सौरभ्यमेव कथयिष्यति तारतम्यं ॥ ५५ ॥

## शार्दूलविक्रीडितं.

विद्वांसोऽपि मदीयपल्लववलवानश्नंति किं मे पिकैः ।
किं वा कीरपतंगभृंगहतकैरित्येव गर्वायसे ॥
कालः कोपि स एष निंब भवतः सारस्य पारिणता ।
काकेष्वेव हि पर्यवस्यति ततः कोन्योस्ति मान्यस्तव ॥ ५६ ॥

## गीतिवृत्तं.

मधुरगिरः शुकमुख्या बध्यंते पंजरेषु बत पतगाः ।
कटुरसितस्य फलं ते लोके त्वां काक कोपि न स्पृशति ॥ ५७ ॥
रे रे बलवरशठकुक्कुर भुवि त्वां ग्रामसिंहं जनाः ।
शंसंतीत्यत एव मा बहुतरं दृप्तो रट प्रोच्चकैः ॥
किं तेनोन्मदकुंभिकुंभदलनप्रोद्भूतमुक्ताफले- ।
स्वं स्वावासमवाकिरः किमु भवेत् त्वच्चर्म भद्रासनं ॥ ५८ ॥
रे रे पक्कणसारमेय भवतः किं नाम गर्वास्पदं ।
सिंहत्वं खलु युज्यते तु तदिदं त्वं ग्रामपूर्वो हि सः ॥
तर्हि त्वद्रपणेन मत्तगजता निःशंकमास्ते कथं ।
धिक् तां मूढ मृगाधिपेन भवतः स्पर्धेति गर्वास्पदं ॥ ५९ ॥
रसाद्यास्ते सर्वे स्वकुसुममुखे सौरभभरं ।
किरंतः स्वाभाव्याज्जगति विजयंते क्षितिरुहाः ॥
अहो किं वक्ष्यामस्तव वितरणं रोहिणतरो ।
कुठारच्छिन्नः सन्नपि किरसि गंधं दिशि दिशि ॥ ६० ॥
समानस्ते सोयं कुरबकतरुर्वामनयना- ।
कुचाश्लेषोद्भिन्नप्रसवभरतो मोदत इह ॥
इदानीं किं काले चपलनयनापादानिहतो ।
हतव्रीडः कामं बत कथमशोकत्वमगमः ॥ ६१ ॥
चंद्रार्कसंश्रयवशान्मृग नोद्वह त्वं । राजाश्रितोहमिति दुर्वहगर्वभारं ॥
किं तावता निजकुलस्य तृणैकवृत्तिर्नीता दरः परिहृतः किमु लुब्धकेभ्यः
शंभोर्मूर्ध्नि सहासिकासमयवशादुन्मत्त शीतांशुना ।
स्पर्धां कर्तुमपीहसे यदि तदा त्वं ब्रूहि को वा भवेः ॥
किं निस्तंद्रतमोहरः किमु सुराहारैकपात्रं पुनः ।
किं लक्ष्मीसहजत्वभाग्यभवनं किंवा कलानां निधिः ॥ ६३ ॥
हंसैर्लूनबिसा मिलिंदरभसापातैर्विदीर्णच्छदा ।
क्लिष्टा पद्मिनि मा व्यथां हृदि कृथाः क्षंतव्यमेतत् त्वया ॥
नो चेत् त्वं मधुसारसौरभभरप्रोदंचिता संपदं, ।
मुंचेवं सति ते न कोपि सहसाप्याशां समागच्छति ॥ ६४ ॥
रे रे रक्तक बंधुजीवकपदं किं प्राप्य गर्वायसे ।
नो पुष्पप्रियबंधवो मधुरसैः पुष्पंधयास्तोषिताः ॥

अंगस्याय कुरंगशावकदृशां साम्येन चेन्मोदसे ।
तत् साम्यं त्वधरैकपर्यवसितं किं तेन ते दुर्मते ॥ ६५ ॥
रे रे कांचन नाममात्रमुदितो मल्लीमतल्लीमिमां ।
मल्ली न्यक्कुरुषे कुरुष्व कुरुषे किं त्वं विधेयं त्वया ॥
सौरभ्यं विवृणोषि दिक्षु सुहितान् भृंगान् विधत्से रसै- ।
र्हासस्यानुकरोषि किं नु सुदृशां धंमिल्लमारोहसि ॥ ६६ ॥
सर्वे चंद्रचकोरकैरवमुखा नव्यामृतस्यंदिभि- ।
र्निस्तंद्रैर्भवता वितीर्णवसुभिस्तुष्यंति दृप्यंति च ॥
तादृक् क्षामवशावशं त्वयि गते त्वां कोपि नालोकते ।
त्वत्प्रासिकफलोप्यभूत् स शरणं धन्यो जगद्बांधवः ॥ ६७ ॥
कामं द्वेष्टि निजप्रियां कमलिनीं दत्तां पुनः स्वां कला- ।
मादत्ते प्रतिकूलतां समयते पूर्णस्तुषारद्युतिः ॥
इत्थं चेदपि तं कलंकमलिनात्मानं परिक्षीणता- ।
मापन्नं न निराकरोति शरणं प्राप्तं स भासां निधिः ॥ ६८ ॥
सर्वांगेष्वनपायिनी विजयते सौरभ्यसंपत् परा ।
देवानामखिलोत्सवेषु भवदारोपः परं शस्यते ॥
निर्दोषेष्वपि चंपकेष्विव तथाप्येकोपि पुष्पंधयो ।
नैष त्वामुपसेवते दमन तत्त्वं न विद्मो वयं ॥ ६९ ॥
सोढ्वा शंभुकपर्दबंधफणभृत्फूत्कारजातानल- ।
ज्वालाभिर्लेपनं ललाटहुतभुक्कीलापरिक्षेपणं ॥
त्वं सर्वज्ञशिरोमणित्वमगमः सत्यं सुधां दीधिते ।
केनेदं परिहर्तुमिच्छसि कलंकित्वं तु नैसर्गिकं ॥ ७० ॥

## गीतिवृत्तं.

आधारेषु जलानां सत्स्वपि शतशः क्षितौ पयोराशिः ।
दितिजैश्चादितितनुजैर्मथितो रत्नाकरत्वफलमेतत् ॥ ७१ ॥
नमिवयभ्रमसंभृतरमयवशात्तुल्यं जगच्चक्षुषा ।
तेनात्मानमपीहसे कलयितुं धिग्जन्म ते दुर्मते ॥
इष्टे यत्करकंदलोद्धतमसध्वंसं विधातुं क्षणाद् ।
ध्वांते व्यंजितवैभवस्तु न भवान् खद्योत विद्योतते ॥ ७२ ॥
राज्ञा संगविभूषणे मदितरो नैवास्ति धातुः परः ।
का वा लोहकसंकषेति कनक त्वं मावहेलां कृथाः ॥

यस्मिन् न्यस्तजयाश्रियः क्षितिभुजो राज्यं सुखं भुंजते ।
तच्छत्रं किमयोमयं फलवतां किंवा मया भवेत् लन्मयं ॥ ७३ ॥
संतापयत्यतितरां दहने निपात्य । संताड्यते लविरतं च घने निवेश्य ॥
मान्यस्तथापि तव शस्त्रक लोहकारः । पाषाणभेदनपटुर्विहितोसि येन ॥ ७४ ॥
कादंबाचरतो बिसांकुरकृते कासारपार्योतरे ।
संत्रस्तः शफरोभितः परिसरे त्रातारमन्वेषयन् ॥
निस्पंदं परिमीलिताक्षियुगलं मीनव्रतालंबिनं ।
विस्रंभाद् बकमाप तत्र निभृतं तेनाभवद् भक्षितः ॥ ७५ ॥
रे रे आम्र कपोत संप्रति यदि त्वं भिल्लपल्लीतरु-
स्कंधे नीडपरिग्रहाय यतसे तर्हीदमाकर्ण्यतां ॥
तोकान्यर्पय सादरं विधिकरे दारान् समाहूय यद् ।
वक्तव्यं वद विद्धि चेतसि दृढं दुर्लंघ्यता कर्मणः ॥ ७६ ॥
किं मत्तोसि पतत्प्रवेक शुक भो आरूढशाखाशिखो ।
माकंदस्य तनोषि संप्रति रुतान्येतन्न ते सांप्रतं ॥
एते शाकुनिकाश्चरंति परितो मूले ससज्जेषव- ।
स्तत्पत्रैर्हरितैस्तिरोहिततनुर्वर्तस्व जोषं क्षणं ॥ ७७ ॥
आस्तां नाम पराक्रमः स तु पुनः सर्वत्र साधारण- ।
श्चर्मण्येव मृगासनस्य महिमास्माकं कुलेष्वाहितः ॥
इत्यं दर्पसि हंत सिंह चमरस्त्वत्तः स किं हीयते ।
यद्वालव्यजनेन मूर्ध्नि ललता राज्ञामुपात्तं यशः ॥ ७८ ॥
व्याधाः सज्यशरासनाहितशरा मूले वर्तते भृशं ।
श्येनश्चोपरि बंभ्रमीति शिखरप्रांते जिघत्सुश्चिरं ॥
व्यालः कोटरवक्त्रदत्तविकटव्यात्तास्य आस्तेतरा- ।
मारान्नीडमसौ कपोतशिशुको धातः कथं वर्ततां ॥ ७९ ॥
फुल्ले पंकजकोरके मधुरसं प्राश्नामि भूयस्तरा- ।
मित्याशादशनायितेन नलिनी नीता निशीयं त्वया ॥
प्रत्यूषे समुपस्थिते विकासितान्यब्जानि तत्रांतरे ।
हा हा भृंगक हेमपुष्पमरुता प्राप्तेन किं वा कृतं ॥ ८० ॥
मल्ली फुल्लति हल्लकं विकसितं चूतः प्रभूतं रसं ।
सूते भाति विनूतनैरुपचिता पुष्पैरियं माधवी ॥
जाता कोरकिता च पाटलिरसौ दाक्षिण्यमभ्याहतं ।
धत्से वत्स मिलिंद सर्वसमतां निर्वोढुमीक्षे कथं ॥ ८१ ॥

## गीतिवृत्तं.

दूरात्फलाभिलाषी किंशुकमुपयासि किं शुक भ्रांत्या ।
तत्र तवायं लाभो [ भवति च ] तव चेन्न चंचुसौभाग्यं ॥ ८२ ॥
यस्मान्मा प्रथितोहमस्मि जनिता मन्नाभितो या पुनः ।
सेयं राजनितंबिनीकुचतटीगंडस्थलीगूहनं ॥
कस्तूरी समनायतेति मुदितो माभूः कुरंगाधुना ।
तत्रायुस्तव पर्यवस्यति परं किं त्वं मुधा मुह्यसि ॥ ८३ ॥
अन्योन्यप्रविघट्टनोत्थदहनज्वालाभिरात्माश्रयं ।
कांतारं खलु भस्मसात् प्रकुरुषे साकं कुलेनात्मनः ॥
चापत्वं समुपेत्य कृंतसि परान् प्राप्तो गुणप्रव्हतां ।
सद्वंशस्य तदेतदंग भवतस्त्वक्सार नो सांप्रतं ॥ ८४ ॥
क्षोणीभृत्पदसंश्रयोसि सततं तद्दानमभ्याहतं ।
वक्षोजोरुगतोपमां कलयसे वामभ्रुवामंगकैः ॥
उत्कर्षो भवदीयनामघटनामात्रान्नृणां गम्यते ।
हे मातंगवरांग हंत नलिनीवैरं न युक्तं तव ॥ ८५ ॥
ते गंधसारतरवो निजगंधसारैरामोदयंति जनतामतिमात्रधन्याः ॥
धिङ्नाम तादृशमतिप्रविपीडनत्वं । शाखोटक प्रविशति त्वयि नो कुठारः ॥८६॥
काले घना घनगणैः पिहितेंबुजाते । किं कौशिकोद्य समुपैषि मुधा प्रमोदं ॥
किं तावतावसितमेव दिनं नितांतं । ध्वांतं प्रभूतमवृणोत् किमहो दिगंतं ॥८७॥
त्रियामे मा गर्वं भजतु भवती चेतसि चिरं ।
सुधांशुर्नाथो मे जयति हि कलानां निधिरिति ॥
स शुद्धात्मा सत्यं पुरहरशिरो भूषणमपि ।
त्वदासंगाद्दोषाकर इति भुवि ख्यातिमगमत् ॥ ८८ ॥
तुलारोहं गुंजा कलयतु सुवर्णेन शतशः ।
किमेषा भूषात्वं वपुषि कृतिना सा समयते ॥
प्रतिष्ठां धातूनां किमिह लभते किंनु सुदृशां ।
वपुः कांत्या काम्यप्यहह भजते साम्यकलनां ॥ ८९ ॥
महोत्कंठः सोयं कलयति दृशं चातकचयः ।
प्रमोदं संधत्ते नवनवमितो हालिककुलं ॥
समारूढे बाढं त्वयि गगनसीमानमिह ते ।
वदान्यत्वं धन्यं जलद करकाश्चेन्न किरसि ॥ ९० ॥

तंतुनां मणिगण मा कृथोवहेलामत्यंतं रुचिरतया स्मयं प्रपन्नः ।
तन्निःसंस्तव बत राजसुंदरीणामुत्तुंगस्तनकलशस्थले निवासः ॥ ९१ ॥
व्याघ्रानुधावनवशादतिकातरस्त्वं । छेकोधुना समुपसर्पसि भिल्लपल्लीं ॥
तत्रासते खलु विमूढकृतांतदंष्ट्राः । क्रूरायुधप्रणयिनः शतशो नृशंसाः ॥ ९२ ॥
ग्रीष्मोष्मरश्मिकिरणग्लपिते वनांते । क्वापि प्रविश्य मृगशाद्वलिनीं महीं त्वं ॥
मागा मृग ग्रहणलुब्धकलुब्धकैस्तैरेतैः प्रयत्नरचितः कुहनावटोयं ॥ ९३ ॥
दावानलग्लपितकाननमध्यगुल्मान्निर्गत्य शंबरशिशुः सहसा प्रयातः ॥
हंतात्र वागुरिकवेष्टितवागुरायां । लम्नोंतराद्य वलयस्य करोतु किं सः ॥ ९४ ॥
बंधूक बंधुरतरं तव रूपधेयमाराग्निरीक्ष्य समुपस्थित एष भृंगः ॥
गंधेर्धनोपि किमु पुष्परसैः प्रभूतैः । कैः सत्करोपि वद पुष्परसज्ञमेनं॥ ९५ ॥

आर्जवे परिमीलिते विधिवशाद्राजीव इंदिंदिरं ।
दीनं क्वापि न कोप्यभाषत पुनस्तस्मिन् समुन्मीलिते ॥
एते संभृतपुष्पसौरभमुपघ्राद्यं रसालादयः ।
कात्स्न्येनेह समीरयंति मरुता भृंगस्य संप्रीतये ॥ ९६ ॥

पिपासार्तान् पांथान् पथि विचरतो ग्रीष्मदिवसे ।
सहस्रांशोरुस्रैरपि दहनकल्पैरुपहतान् ॥
जलाशामुत्पाद्य भ्रमयतितरां हंत परितो ।
वृथा ते धिग्धिक् तां जगति मृगतृष्णे विलसितं ॥ ९७ ॥
त्रियामेयं नीता कथमपि गतोस्तं हिमकरः ।
समायातो भास्वानचरममहीभृत्परिसरं ॥
इति स्वैरं यावत् प्रियतम मया कोकवनिता ।
समायातस्तावच्छिव शिव शरारुः शरकरः ॥ ९८ ॥

## वसंततिलकावृत्तं.

एवंविधे प्रचलितस्त्वयि राजहंसमुख्यः पतत्रिनिवहश्चिरभुक्तभोगः ॥
प्रत्यागमिष्यति पुनः प्रविलीनमेनं । मीनं कथं नु लभसे नलिनाकरत्वं ॥ ९९ ॥
बंदीकृते बत सरोरुहकोशमध्ये । निर्मुक्तिकालमनुचिंतयति द्विरेफे ॥
वातो ववौ दलितपंकजकोशबंधस्तत्रांतरे समुदितश्च सहस्ररश्मिः ॥ १०० ॥

## उपसंहारः—आर्यावृत्तं.

सहृदयहृदयविनोदनहेतोर्व्याजोक्तिमिश्रपद्यशतं ।
रचितं त्रिविक्रमेण प्रभवतु विदुषां प्रतोषाय ॥ १ ॥

इति श्रीमत्कवित्रिविक्रमविरचितं व्याजोक्तिशतकं संपूर्णम्.

---

## साहिबाहादुराश्रितकृतः

# सुवर्णमुक्तासंवादः

---

जानाति राम तव नामरुचिं महेशो । जानाति गौतमवधू[1] चरणप्रभावम् ।
जानाति दोर्बल[2]-पराक्रममीशचापो[3] । जानात्यमोघ[4]पटुबाणगतिं पयोधिः ॥ १ ॥
अस्ति स्वस्तिमती समस्तनगरीसौंदर्यपूर्णा पुरी ।
ख्याता श्रीनगरी गरीयसि गुणैर्गौरीगिरौ पर्वते ॥
यत्र स्वर्णमयी सभासु सततं मुक्तामयी च श्रियौ ।
सेवेते बलभद्रदेवचरणावन्योन्यसंस्पर्धया ॥ २ ॥

सुवर्ण-( इतस्ततः सभ्यकरकर्णांगुलीष्ववलोक्य सक्रोधं )
भो सभ्याः कथयंतु येयमधमा सार्धं मया स्पर्धते ।
केयं कस्य सुता च कस्य वनिता कार्यं किमस्याः पुनः ॥
किं जानाति न मां सुवर्णमखिलैराराध्यमानं सदा ।
धातूत्तंस[5]मिहापरत्र च सुखासाधारणं कारणम् ॥ ३ ॥

यतः

यत्राहं निवसामि गुणिनः शस्त्रं च शास्त्रं तथा ।
वस्त्रं चापि विचित्रवस्तु सुभगा नागा[6]स्तुरंगा अपि ॥
नानादेशसमागताः सुचरिताः संतः कियंतो न वा ।
भक्ष्यं भोज्यमपीह वस्तु सकलं नानाविधं विद्यते ॥ ४ ॥
गेहे यस्य वसामि तत्र विविधा वापीतडागादयो ।
धर्मः शर्मकरस्तनोति स तुलादानादिदानानि च ॥
स्वर्गारोहणकारणानि सकला सोमाश्वमेधा[7]दयो ।
यागास्तेन नरेण कर्तुमुचिता विद्यापि तस्यैव सा ॥ ५ ॥

मुक्ता-( सस्मितं ) तातः ख्यातः स पाथोनिधि[8]रतिमहती रत्न[9]गर्भा च माता ।
ये ये सौभाग्यवंतो[10] जगति सुकृतिनो नायका[11] मामकास्ते ॥
आर्याः कार्यं मदीयं यदिह किमपि वा तद्भवंतो वदंतु ।
क्लीबं[12] कस्मादकस्माद्वदति मयि सुधावर्ण[13]मेतत्सुवर्णम् ॥ ६ ॥

---

१ गौतमवधू=अहल्या. २ दोर्बलं=बाहुबलं. ३ ईशचापः=शिवधनुः. ४ अमोघः=सफलः ५ धातूत्तंसः=धातुश्रेष्ठः. ६ नागाः=गजाः. ७ मेधः=यज्ञः. ८ पाथोनिधिः=सागरः. ९ रत्नगर्भा=पृथ्वी. १० सौभाग्यवन्तः=श्रीमन्तः. ११ नायकाः=पतयः १२ क्लीबं=नपुंसकं. १३ सुधावर्ण-चूर्णवर्ण ( चुन्याच्या रंगाचें इति महाराष्ट्र भाषायां ).

भ्राता मे स कलानिधिर्गिरिसुताभर्तुः शिरोभूषणं ।
या सा मे भगिनी रमा भगवतो वक्षस्थल-स्थायिनी ॥
किं चाहं च समस्तराजरमणीवक्षोजभूषाकरी ।
मुक्ता नाम गुणैकधाम सततं निर्मुक्तदोषवृता ॥ ७ ॥

**सुवर्ण**-भो भो सारासारविचारचतुराः सभासदः कथमियं मुक्ता नाम मुक्तलोकलज्जा मां क्लीबमित्याभाषते । यतः

मुकुटकुंडलकंठविभूषणैः कटककंकणकिंकिणिकादिभिः ।
पदकपादविभूषणनूपुरैर्जगति संततसंततिकास्म्यहम् ॥ ८ ॥

यदि च शब्दमत्रेण येषा रंडा समस्तवस्तूत्तमं मां क्लीबमित्याभाषते तर्हि ब्रह्मपदमपि निखिलजगज्जनकस्यापि ब्रह्मणः क्लीबतां कथं नापादयेत् । किंच । दारदैवतदेवतापदानां पुंनपुंसकस्त्रीलिंगत्वेऽपि न तदर्थानां तल्लिंगतेति सुप्रसिद्धतरं । अहो सभ्याः नूनमस्यां गणिकायां भवंतोऽपि पक्षपातिनः संतीति मन्ये । येनैवं वदंत्यामस्यां मौनमाश्रितं युष्माभिः । न चैतद्युक्तमत्रभवतां । यतः

सभा वा न प्रवेष्टव्या वक्तव्यं वा समंजसं ।
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ ९ ॥

इति धर्मशास्त्रं श्रूयते यदि च धर्मशास्त्रान्न बिभ्यति तर्हि राजदंडभीरपि नास्तीत्यहो महत्साहसं ।

रागाल्लोभाद् भयाद्वापि स्मृत्यपेतादिकारिणः ।
न सुखं विद्यते तस्य इह लोके परत्र च ॥ १० ॥

सभ्याः पृथक् पृथक् दंड्या विवादाद् द्विगुणं दममितिधर्मशास्त्रस्मरणात्

**सभ्याः**-( सुवर्णमालोक्य सस्मेरं ) येन त्वां कवयः स्थले स्थले क्लीबत्वेन निर्दिशंति तेन वयं मौनमाश्रिताः । न मुक्तापक्षपातेन ।

**सुवर्ण**-हंत भवंतोऽपि कवीनां वचः प्रमाणयंति । यतः

कवयः किं न भाषंते किं न जल्पंति मद्यपाः ।
राजानः किं न कुर्वंति किं न भक्षंति वायसाः ॥ ११ ॥

इति कविभिरेव कविवचसामयथार्थत्वकथनादित्यलमसत्कलहेनेति तूष्णीं ।

**मुक्ता**-( तदेतत्सुवर्णवचनमाकर्ण्य सगर्वं )

---

१४ कलानिधिः=चंद्रः. १५ गिरिसुताभर्तुः=शिवस्य. १६ वक्षोजाः=स्तनाः. १७ धाम=गृहं. * मृजा इति वा पाठः १८ किंकिणी=क्षुद्रघंटिका. १९ गणिका=वेश्या. २० किल्बिषी=पापी. २१ रागः=प्रीतिः क्रोधो वा. २२ स्मृत्यपेतं=स्मृतिशास्त्रबाह्यं. २३ विद्यते=भास्ति. २४ दमः=दण्डः.

हे हे हिरण्ये[२५] दुर्वादिन् गर्वमावहसे कथं ।
[२६]आकरजनिः स्वर्ण रत्नाक[२७]रजनिरस्म्यहं ॥ १२ ॥
समता मम ते चैव घटते न कदाचन ।

सुवर्ण-(सोपहासं) अहो [२८]जडजनेरस्या मुक्ताया [२९]जाड्यमीदृशं ।
युक्तमेव हि कार्येषु गुणाः कारणकारिताः ॥ १३ ॥
युक्तायुक्तविचारहीनहृदये मुक्ते न युक्ता तव ।
स्पर्धा मे गुणवत्तमस्य सततं नो जन्म लोकत्रये ॥
किं तातेन कुलेन किं निजगुणैरेव प्रशंसा भवे- ।
न्मत्स्याः संति सहस्रशो जलनिधौ किं ते न [३०]शस्याः पुनः ॥ १४ ॥

किंच

यदि जनकमहत्वादेव जन्यं महत्वं ।
तदिह किमिति न स्याच्छुक्तिका[३१]यास्तथापि ॥
अथ निजगुणशून्यं तत्कथं वा महत् स्यात् ।
स्वमपि कमपि मुक्ते पश्य गौणं विशेषम् ॥ १५ ॥
मत्वा स्वर्णमयं सुमेरुशिखरं शक्रादयः संश्रिताः ।
किं चेमानि जगंति संति सततं ब्रह्मांडभांडोदरे ॥
सृष्टं येन चराचरात्मकमिदं [३२]स्रष्टा स [३३]मद्गर्भजः ।
को वा ते जलधिर्मदीयगणने का त्वं [३४]वराकी पुनः ॥ १६ ॥

मुक्ता-( सगर्वं ) सुवर्ण [३५]दुर्वर्णसहोदर त्वं विवर्णवत् किं कुरुषेतिगर्वम् ।
इदं हि सर्वं खलु केशवे स्थितं स मे पितुः कोणकणावशायी ॥ १७ ॥
अभिभूतगुणो यस्त्वं गुणिनं वदसि स्वयं ।
सदा गुणवती याहं निर्गुणां मां [३६]वदस्यरे ॥ १८ ॥
तारो हारो मदीयः कथमिह तनुते कामिनीनामुरोजे ।
शोभा सा भाति भाले कथमथ सुभगा [३७]मामकी [३८]नागरीणां ॥
नासाभूषाग्रमध्ये विलसति वितता कीदृशी मामकीना ।
शोभा कीदृक् च कंठे रचयति [३९]सुदृशां सच्छगुच्छा मदीया ॥ १९॥

---

२५ हिरण्यं=सुवर्ण. २६ आकरजनिः=खनेरुद्भूतः. २७ रत्नाकरजनिः=रत्नखनेः सागराज्जातः. २८ जडजनेः=मूढजातस्य पक्षे जलजातस्य २९ जाड्यं=मौढ्यं. ३० शस्याः=स्तुत्याः. ३१ शुक्तिका=मुक्तामाता ( Mother of pearl ) शिंपीति महाराष्ट्रभाषायां. ३२ स्रष्टा=ब्रह्मा. ३३ मद्गर्भः=हिरण्यगर्भः ( ब्रह्मा हिरण्यगर्भ इति सुप्रसिद्धं. ) ३४ वराकी=नीचा. ३५ दुर्वर्ण=रजतं पक्षे दुष्टो वर्णो रागो यस्य तत्. ३६ वदस्यरे=वदसि+अरे=भाषसे अहो. ३७ मामकी=मदीया. ३८ नागरीणां=चतुरस्त्रीणां. ३९ सुदृशां=स्त्रीणां.

गुंजया तुलितं स्वर्णं मुक्तया सह तुल्यता ।
युक्ता न ते [40]पिकस्पर्धी काकः किं गरुडायते ॥ २० ॥

( सुवर्ण-( सोपहासं )—

अये मुक्ते मुग्धेऽखिलगुणगणापारनिचये
मयि स्वर्णे गुंजासमतुलनदोषः खलु कियान् ।
सुधासाराधारे निखिलजगदानंदजनके ॥
[41]कलानाथे किया भवति [42]शशदोषस्य गणना ॥ २१ ॥
करे कंठे च कर्णे च स्वर्णे मयि [43]महीभुजां ।
[44]भ्राजति कथं या स्युर्युक्तयस्तव मौक्तिकैः ॥ २२ ॥

**मुक्ता**-भो [45]भर्म तव मर्म सर्वमहं जानामि । परंतु न कश्चिन्मर्मणि स्पृशेदिति धर्मशास्त्राद्बिभेमि । किं च हे हिरण्य भवता साधूक्तं कथं स्पर्धेता ।

विचारय निजे चित्ते [46]हठं [47]हाटक मा कृथाः ।
कथं च न नियुज्येत स्पर्धा बद्ध-विमुक्तयोः ॥ २३ ॥

परमात्मन इव मुक्ताया मम जीववद् दृढग्रंथिबद्धे त्वयि कथं स्पर्धा ।

**सुवर्ण**-सुवर्णेन सुवर्णेन सार्धं यत् स्पर्धसे मया ।
निजापरविशेषाज्ञे मुक्ते मुक्तासि लज्जया ॥ २४ ॥

सारवद्भिरसारत्वात् त्यक्तेति तव मुक्तता ।
तदा परसूत्रबद्धासि मुक्तिस्ते कीदृशी पुनः ॥ २५ ॥
अये रंडे मुक्ते त्वदभिमतमोक्षस्य जनकं ।
न पश्यामि ज्ञानं किमपि न च कर्मापि विहितं ॥
विना [48]हेतुं कार्यं बत वदसि मूढे किमथवा ।
जडापत्यस्येदं वचनमिह [49]चित्रं वितनुते ॥ २६ ॥

यदि मुक्तासि मुक्ते त्वं [50]नापवर्गवती सदा ।
अपवर्गवती चेत् त्वं न मुक्तासीति निश्चयः ॥ २७ ॥

तस्मादेवं बहुविधभाषिणी भवती प्रेक्षावद्भिरुपेक्षणीयेति । यतः
विवादश्च विवाहश्च समयोरेव युज्यते ।

**मुक्ता**-(स्वगत)-अद्यास्यैव [51]दुर्वर्णवाचिनः सुवर्णस्य मुखभंगं करोमीति ( प्रकाशे ) रे रे सुवर्ण नूनमस्मादेव दुर्मुखतादोषात्तव तापनताडनच्छेदनादि विदधतीति मन्ये । अहो परीक्षकाः साधु साधु ।

---

४० पिकः-कोकिलः. ४१ कलानाथ -चंद्रः. ४२ शशदोषः-कलंक. ४३ महीभुजा-=राज्ञा. ४४ भ्राजति=न शोभमाने सति. ४५ भर्म-सुवर्ण ४६ हठः-बलात्कारः आग्रहो वा ४७ हाटक-सुवर्ण ४८ हेतुः-कारणं. -४९ चित्र=चमत्कारः. ५० अपवर्गः-मोक्षः पवर्गाभावो वा ५१ दुर्वर्णाः=कुशब्दाः.

यदेव दुर्मुखस्यास्य कनकस्य पुनः पुनः ।
दत्वा लोहं मुखे शून्यं परीक्षध्वं परीक्षकाः ॥ २८ ॥

किंच

त[52]पनीयस्य तापोऽपि युक्त एवास्य दुर्मतेः ।
परस्वापहर्तुः किं कंठच्छेदो न युज्यते ॥ २९ ॥
अभद्रापि यथा भ[53]द्रामंगलोऽपि च मंगलः ।
नूनं तथाऽसुवर्णस्य भर्मणोऽस्य सुवर्णता ॥ ३० ॥

( तूष्णीं स्थितमपि पुनः कटुवचनानि श्रुत्वा सक्रोधं )

**सुवर्ण**--भो भो परीक्षकाः कथमियं परुषाक्षरभाषिणी मुक्ता नाम राक्षसी भवत्समक्षं प्रगल्भते । आः कथं ममास्याश्च परीक्षां न कुरुथ ।

सु[54]वर्णस्य सुवर्णस्य दुर्मुखत्वस्य भाषिणी ।
प्रतीपदर्शिनी सेयं मुक्ता कस्मान्न वार्यते ॥ ३१ ॥
पावके पतितस्यापि शुद्धिरेषा ममाधिका ।
अस्यास्तु पापरूपाया भस्मीभावः परं भवेत् ॥ ३२ ॥
लोहे दत्तेऽपि न क्वापि ममाकारविकारता ।
अस्याः पुनरशिष्टाया नाकारोऽप्यवशिष्यते ॥ ३३ ॥
न मे वि[55]कारभंगेऽपि जातिभ्रंशः कदाचन ।
न रूपस्यापि विच्छेदश्छेदेऽपि मम जायते ॥ ३४ ॥
मुक्तायाः पुनरेतस्या जातिभ्रंशोऽपि जायते ।
अहो दुरित[56]वत्येषा स्वरूपादपि हीयते ॥ ३५ ॥
अत्यंतानलयोगतोऽपि सुचिरं नाप्नोति यत्क्षीणतां ।
यत्संसर्गगुणेन न क्षतिरपि प्राप्नोति रूपक्षतिं ॥
सद्भिः साधुपरीक्षितस्य गुणिनस्तेजस्विनस्तस्य मे ।
गांगेयस्य करोति हंत समतां मुक्तापिशाची कथम् ॥ ३६ ॥

**मुक्ता**-( पुनः परीक्षकमुखं प्रेक्ष्य सुवर्णं लक्षीकृत्य सेर्ष्यं )

रे का[57]र्तस्वर मुंच मुंच तमिमं सर्वं स्वगर्वं मु[58]धा ।
किंवा व[59]ल्गसि पश्य मामपि सु[60]धातुल्यामभूल्यामिह ॥
एतानेव परीक्षकांस्त्वमथवा पृच्छस्व रे किं न वा ।
ये क्रीणंति मदेकचारुगुलिकां भास्वत्कमु[61]द्राशतैः ॥ ३७ ॥

---

५२ तपनीयं-सुवर्णं. ५३ भद्रा तिथिविशेषा ( द्वितीया, सप्तमी, द्वादशी ) ५४ सुवर्णः=शोभनो रागो यस्य तत्. ५५ विकाराः=कटकांगदमुकुटाद्यलंकाराः ५६ दुरितवती=पापिनी. ५७ कार्तस्वरं=सुवर्णं. ५८ मुधा-व्यर्थं. ५९ वल्गसि=जल्पसे. ६० सुधा=अमृतं चूर्णं वा. ६१ मुद्राशतैः=रूपकशतैः.

किंच कांचन विलोकयसि त्वं सोदरानिह निजान् रजतादीन् ।
किं न पश्यसि मदीयसपक्षान्वज्रविद्रुमहरिन्मणिमुख्यान् ॥ ३८ ॥

**सुवर्णे**-( रजताभिमुखमवलोक्याक्षिपक्ष्म चालयति ) ततः क्रोधाविष्टं **रजतं**-
अहो महाराजसभासदा लोकाः कथमियं मुक्ताख्या कुलटा[62] भवतामग्रे सद्वृत्तस्यास्मत्कुलावतंसस्य[63] सुवर्णस्य निंदां विदधातीति[64] तावन्न निवार्यते भवद्भिः । यतः

न केवलं यो भवता विभाषते ।
शृणोति तस्मादपि यः स पापभागिति ॥ अन्यच्च

दूरे तिष्ठतु कांचनं मम पुरः केयं तु मुक्ता पुनः ।
के वा हीरहरिन्मणि[65]प्रभृतयः पाषाणभेदा अमी ।
यत्राहं निवसामि तत्र सदने मुक्ता विमुक्ताः सदा ॥
सीदंति प्रथितास्तथा कति कति ख्याता मणीनां गणाः ॥ ३९ ॥

किंच

यच्छस्त्रास्त्रबलेन हस्ततलगा सर्वापि रत्नप्रसू-[66] ।
स्तच्चारमं[67]चरमानुजेन गुणिनामग्र्येण लोहेन वा ॥
किं मुक्तादिषु साम्यमस्ति किमपीहापीह कस्यापि वा ।
यद्धीरप्रवरक्षमापति[68]करमाग्रे सदा मोदते[69] ॥ ४० ॥

( तदिदं दुर्वर्ण[70]वचनमाकर्ण्य विवर्णा सती हीरकमुखमवलोकयंती सावेशं )

**मुक्ता**—स्वीयानुच्चारयति

हे हीरकस्फटिकविद्रुमपद्मरागा गारुत्मतप्रथितमारकतप्रभूताः ।
गोमेदनीलमणिभद्रमुखा भवंतो दुर्वर्णदुर्वचनमत्र कथं सहंते ॥ ४१ ॥

**हीरकः**-भो भो भगवति मुक्ते पश्य ।

एतेषु धातुषु गुणीगणयामि पश्य स्वर्णं न दुर्मुखमिदं किमपीह मन्ये ॥
ताम्रादिसीसविषये पुनरर्थबुद्धिरंगायसश्च कुरुते न मुखे विना कः ॥ ४२ ॥

तर्हि अस्यैव दुर्वर्णवाचिनो मुखर[71]स्य रजतस्य स्वयमेव मुखभंगो भविष्यति । यतः

न गणस्याग्रतो गच्छेत् सिद्धे कार्ये समं फलं ॥
यदि कार्यविपत्तिः[72] स्यान्मुखरस्तत्र हन्यते ॥ ४३ ॥

अन्यच्च

अरे मुखर दुर्मुख प्रथितभूरिदोषाकर[73] ।
त्वया सह कथापि ते रजत किंनु लज्जाकरी ॥

---

६२ कुलटा-वेश्या. ६३ कुलावतंसस्य-कुलभूषणस्य. ६४ विदधाति=करोति. ६५ हरिन्मणिः=इंद्रनीलमणिः. ६६ रत्नप्रसूः-पृथ्वी. ६७ चरमः=अंतिमः. ६८ क्षमापति-राजा. ६९ मोदते-हर्षं प्राप्नोति. ७० दुर्वर्ण=रजतं ७१ मुखरः-वाचाटः पक्षे प्रधानो मुख्यो वा. ७२ विपत्तिः-हानिः. ७३ भूरिदोषाकरः=अनेकदोषखनिः.

प्रमत्तगजकुंभभित्सकलशूरधीराग्रणीः ।
करोति सह फेरुणा किमपि हुंकृतिं केसरी ॥ ४४ ॥
मुक्ते देवि विचारय त्वमखिलान् धातुनिमान् सर्वतः ।
किं कस्यापि च योग्यतास्ति मणिना केनापि सार्धं सता ॥
एकेनापि हि केनचित् सुमणिना मुद्राः सहस्राधिका ।
मीयंते कनकस्य तत्र गणना रौप्यस्य का वा पुनः ॥ ४५ ॥

**रजतं**-(सोपहासं) भो स्वामिन् सुवर्ण समाकर्णितं भवताप्यप्रस्तरस्य प्रागल्भ्यं। अहो स्वामिन् पुरास्माभिरवगतनामेयं मुक्तेव ज्ञानमुक्तेति । हंत सर्वेऽपि तादृशा एव ते

**सुवर्णं**-भो रजत उचितमेवेदं शीलं शिलीनां ।

**रजतं**—(हीरकाभिमुखमवलोक्य सक्रोधं) अरे रे प्रस्तर प्रस्तर कथं मां दुर्मुखमुखरदुर्वर्णमित्यात्थ त्वं ।

नाम्ना दुरादिभावेन दुर्मुखो मुखरो यदि ।
तदा भगवती दुर्गा रमापि किमु तादृशी ॥ ४६ ॥
नूनमेवं प्रवदतु विष्णुर्मुखर एव ते ।
हिरण्यगर्भगर्भं यं निंदसि त्वं कथं पुनः ॥ ४७ ॥

रे वज्र गर्जसि मुधा बत कोऽपि युष्मान् जानाति जातिगुणतत्वविवेकतो वा ॥
आराजगोपमखिलाः खलु धातुवर्गं जानाति देवपितृमानुषकर्मयोग्यं ॥ ४८ ॥

महद्वैषम्यं नो भवति भवतां चापि यदहो ।
विना हेम्नो योगं न खलु सुषमा कापि भवतां ॥
ऋते रत्नैः शोभानिचयललिताः संति भुवि नः ।
कियंतोऽलंकाराः कति कति च पात्राणि धनिनाम् ॥ ४९ ॥
हे हे हीरक मामनेकविविधालंकारसत्कारणं ।
दारिद्र्यैकनिवारणं यदि न वा जानाति किं तावता ॥
गंधाघ्रातदिङ्मुखावनिमिलद्भृंगालिभिर्लालितं ।
पद्मं वेत्ति न दर्दुरो यदि तदा पद्मस्य किं हीयते ॥ ५० ॥

**सुवर्णं**-भो भो वत्स कलधौत किमेतैः पाषाणैः सह कलहेनास्माकमेषां च सारासारविचारं राजाधिराजबलभद्र एव करिष्यतीति तच्चरणसमीपमुपगच्छामः ।

**मुक्ता**-(तदेच्छ्रुत्वा सहर्षं) साधु सुवर्ण संमतमेतदस्माकं । ततः सर्वेऽपि क्षितिपालमुपगम्य स्वस्वविशेषमावेदयंतो विज्ञापयंति ।

---

७४ कुंभः=गंडस्थलं. ७५ फेरुः=जंबुकः. ७६ प्रस्तरः=पाषाणः (फत्तर). ७७ शिला=पाषाणः. ७८ हिरण्यगर्भगर्भः=सुवर्ण. ७९ आराजगोपम्=राजापासून रंकापर्यंत इति महाराष्ट्रभाषायाम्. ८० सुषमा–शोभा. ८१ दर्दुरः–मंडूकः. ८२ कलधौतं–रजतं.

राजाधिराज बलभद्र समस्तवस्तुतत्वज्ञ ते निकटमत्र समागताः स्मः ।
तन्नो विचारय विशेषमशेषमीश सभ्यैः समं सुमतिभिः समतासमेतम् ॥ ५१ ॥

उक्तं च

व्यवहारान् नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ ५२ ॥ इति ॥

**राजा**-( तदावेदितमाकर्ण्य सस्मेरं[८३] )
हे हे सुवर्ण रजताभ्रक नाग[८४] वंग[८५] । लोहारकूट[८६] कलहं कुरुतात्र कस्मात् ॥
पश्यामि नैव कलहस्य हि बीजमत्र[८७] । नापि प्रयोजनममुष्य[८८] विलोकयामि ॥ ५३ ॥

**सुवर्ण**-महाराज सत्यमेतन्न हि बीजप्रयोजनाभ्यां विना किंचिदस्तीति ।

शक्यते न मया सोढुं समता मुक्तयानया ।
सरमासूनुना साम्यं सहते किमु केसरी ॥ ५४ ॥

**राजा**-( पुनः सस्मेरं ) भो सुवर्णास्मत्सभायामभिमानमपहाय मिलित्वैव स्थीयतां यतः

सर्वेऽपि गर्वमपहाय सवैरमत्र तिष्ठंति पश्य समवेत्य परस्परेण ।
संत्यत्र केचन समा विषमाश्च केचित् किं कोऽपि केन कुरुते कलहं कदापि ॥५५॥

**सुवर्ण**-( राजाभिमुखमवलोक्य ) यदादिशति देव इत्युक्त्वा तूष्णीं ।

**राजा**—एवं सुवर्णं संबोध्य मुक्तादीन् संबोधयति ।

मुक्ते विद्रुम हीरक स्फटिक भो गोमेद गारुत्मत ।
भो वैदूर्यक नील भो मरकत श्रीपद्मरागामुना ॥
यूयं किं कुरुतात्र धातुपतिना स्वर्णेन वैरं वृथा ।
येनास्मिन् मिलनं व्यधापि भवता तेनोचितं नैव तत् ॥ ५६ ॥

किंच

युष्माकं यादृशी कांतिः कांचनेन सहामुना ।
नान्यया तादृशी तेन मिलित्वैवास्यतामिति ॥ ५७ ॥

**हीरकः**-( स्वमनसि विचार्य ) भो भो भगवति मुक्ते यदुक्तं सकलार्थतत्त्वविदा महाराजेन । यतः

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ५८ ॥
उपकारस्त्वयास्माकं कांचनेन महान् कृतः

---

८३ स्मेरं=ईषद्धास्यं. ८४ नागं=सीसकं. ८५ वंगं=त्रपु ( कथील ).
८६ आरकूटः=पित्तलः. ८७ बीजं=कारणं. ८८ अमुष्य=कलहस्य.

पतस्तदूरवासिनोऽस्मानानीय परमपवित्रकमनीयमूर्तभगवच्चरणस्यानंददानमानसं-तोषितभूरिभूसुरप्रवरस्य विविधविद्याचतुरप्रचुरपंडितमंडलीमंडितसभामंडपस्य निज-कीर्तिकौमुदीमोदितजगत्पद्मस्य क्षितिपालकचूडामणिश्रेणीनीराजितोपात्तपादद्वयांभोन-किर्मीरितवर्णपीठरूपास्य महाराजस्य दर्शनं कारितं । किंच ।

उपजीव्य-विरोधेन न कुतश्चिदलं स्थितिः ।
पत्रेंधनविरोधेन दहनस्य कुतः स्थितिः ॥ ५९ ॥

तस्मात्साधूक्तं महाराजेन मिलिष्यावस्त्वामिति ।

सर्वाकूपारपारस्थितमपि विविधं वस्तुजातं समस्तं ।
शस्तं यत्पादपीठं क्षितितलममलं सर्वदालंकरोति ॥
योऽसौ भूचक्रवर्ती जगदखिलमहावीरधीराग्रवर्ती ।
प्राज्यं राज्यं विधत्तां नृपतिकुलमणिः साहिबाहादुरेंद्रः ॥ ६० ॥
इयं श्रीनगरी यस्य श्रीमद्देशमनीषिणः ।
निर्मितः शर्वनिर्मातुर्निर्मत्सरमनीषिणा ॥ ६१ ॥

इति सुवर्णमुक्तासंवादः समाप्तः

---

## विठोबाअण्णाकृता शिवगीतिमाला.

### गीतिवृत्तं.

स्फटिकस्थितकरिकात्तिं कुटिलं शशिशावकं शिरसि दधतम् ।
जटिलं ज्वलनविभूषितनिटिलं परमेश्वरं हृदालम्बे ॥ १ ॥
शारदशशाङ्करुचिरे नारदमुखमौनिगीतगुणनिकरे ।
मारदहनचतुरे मम पारदचलमपि मनश्चिरं रमते ॥ २ ॥
चक्षुश्चन्दिरशोचिश्चयचारुरुचे विचित्रचरिताय ।
चण्डीश्वराय सुचिरं सञ्चिन्तय चित्त चन्द्रचूडाय ॥ ३ ॥
आरोहति चित्रपदं चित्तमपर्णान्वितोऽप्ययं स्थाणुः ।
भवतापतप्तपुंसां दलयति दाहं गतोऽपि दृष्टिपथम् ॥ ४ ॥
शम्भो मनुष्यधर्मा प्रेमाख्यसुधारसस्य पात्रं ते ।
आस्तां बत त्रिलोचन किमहं न भवान्यपाङ्गविषयोऽपि ॥ ५ ॥
अहमपि किं च कुबेरः किन्नरराजा उभौ हि तत्रैकः ।
मित्रं न परो दासो ननु युक्तं विषमलोचनस्यैतत् ॥ ६ ॥

---

८९ कमनीयं=सुंदरं. ९० भूसुरः–ब्राह्मणः. ९१ प्रचुरं=विपुलं. ९२ अकूपारः=सागरः.
९३ वस्तुजात–वस्तुसमूहः.

योगो दिगम्बरस्याकिञ्चित्कर इति विभो कथं वाच्यम् ।
ननु राजराजपदवीमारोहति येन गुह्यकेशोऽपि ॥ ७ ॥
किं भिक्षुणा प्रदेयं दिगम्बरेणेति वञ्चनां न कुरु ।
न हि भूतिमन्तमन्यं भवतः सुरमण्डलीषु पश्यामि ॥ ८ ॥
लिखितं हि यत् कपाले नरस्य धात्रा तदन्यथा नैव ।
इति वदसि चेद् दयाब्धे प्रायः पश्यामि तत् तवैव करे ॥ ९ ॥
तव कालकूटकाटवपरिषहणे पाटवं तदा मन्ये ।
दारिद्र्याख्यं पास्यसि सुमनस्तापं यदा भवाब्धिभवम् ॥ १० ॥
आस्तां किं दारिद्र्ये शक्तिः स्मरदाहदक्षनयनाग्नेः ।
हन्त ज्ञातं ज्ञातं पीडयितुं को भवाश्रितं शक्तः ॥ ११ ॥
दोषाकरं तु बिभृषे किमनेन विभो यदर्ध एवासौ ।
पूर्णं मां यदि बिभृयास्तत् ते स्यात् प्रौढता प्रभावस्य ॥ १२ ॥
वपुषि वहसि भोः शम्भो त्वं हि भुजङ्गान् विभूषणत्वेन ।
शिरसि तु गुरुदाररतं किमहं चरणेऽपि दुःसहो जातः ॥ १३ ॥
उचितं बिभर्षि वपुषि द्विजिह्वराड्घान् प्रभो कृपासिन्धो ।
सोऽहं न वायवेत्थं पञ्चमुख विचारयाखिलं विश्वम् ॥ १४ ॥
विषकण्ठस्य तव शिव प्रभवन्त्याशीविषाः प्रिया इति चेत् ।
आस्ते ममापि वदने किञ्चिद्याच्ञ्ञावणमेव मरणपरम् ॥ १५ ॥
दिशतु रमेशः कामान् जातं किं नाम कामजनकः सः ।
भव भवति भवति चित्रं हन्ता कामस्य कामदो यस्मात् ॥ १६ ॥
भवसागरभवविषये विश्वमिदं तापमेति तत् सुखय ।
अधिकं यशो भविष्यति विषादपि यतो अमी विषयाः ॥ १७ ॥
मम नैव सौख्यलिप्सा देह्यापदमेव किन्त्वपूर्वां ताम् ।
अवलोक्य यत्प्रभावं प्रभवतु सर्वं सविस्मयं विश्वम् ॥ १८ ॥
प्रवदन्तु नाम सन्तो भूतपतिं त्वां परं मुधा मन्ये ।
मन्त्ररहितमपि मलिनं श्मशानवास्यपि यतो न मां ग्रसते ॥ १९ ॥
अपि सर्वभूतिसदनं वञ्चयसे भिक्षुचिन्हतो विश्वम् ।
त्वामिह मुधा किमु बुधा उदाहरन्ते शिवाभिधान इति ॥ २० ॥
शिवसम्प्राप्तिः पुण्यैर्विना न हीन्यनुभवो ममायातः ।
यस्मात् पुण्यजनेशे सख्यसुधारसपरिप्लुतोऽसि शिव ॥ २१ ॥
दोषाकरः कलङ्क्यपि कुटिलः शिरसा द्विजेश्वरो वन्द्यः ।
इति शिक्षयसीव जनं वृषभारूढस्य युक्तमेवेदम् ॥ २२ ॥

जितकीनाश महेश स्मरनाश स्फटिकसङ्घसङ्काश ।
शान्तः सन्नपि चित्रं ख्यातो भुवनत्रयेपि त्वमुग्र इति ॥ २३ ॥
द्विजराजशेखरः सन्नपि वृषमारोहसि प्रभो नित्यम् ।
प्रायश्चित्तविरहितस्थितिरपि विमलोऽसि तन्महैश्वर्यम् ॥ २४ ॥
आद्यो वर्णश्चोष्मा सन्नपि तापं निहन्ति किञ्चान्यः ।
अन्तस्थात्मापि बहिर्ईशमिति शिव कापि तेऽभिधाशक्तिः ॥ २५ ॥
भव तव नवनवमोदप्रदमिदमक्षरयुगं हि भवनाम्नः ।
अपवर्गदं पवर्गगमन्तस्थात्मकमनन्ततादायि ॥ २६ ॥
भो भव भणति भवान् यदि सततं मां सौम्य चिन्तयेति वचः ।
भवचिन्तन एवेति सदा मम मानसमीश भवति सोल्लासम् ॥ २७ ॥
रचयसि चेद्वच इति मां कुरु चेतश्चञ्चलं समाधिपरम् ।
स्मरहर निरन्तरं मे मानसमेतत् समाधिपरमेव ॥ २८ ॥
वदसि यदि विभो हित्वा निःसारं सर्वमेतदथ सम्यक् ।
सारं चिन्तय चेत्थं त्वमेव सञ्चिन्तयाम्यहं सततम् ॥ २९ ॥
अयमनलमाश्रयो मत्वेति स्थापितः स्वनयनान्तः ।
भवदाश्रयेच्छुरपि न त्रिनयन सकृदपि किमीक्षणीयोहम् ॥ ३० ॥
मृतभूमिर्वसतिस्तव मृतमस्तकमालिकापि तव कण्ठे ।
मृतभस्मनैव चर्चनममृताशनमेकमेव कुत एतत् ॥ ३१ ॥
निटिले विनायकस्तव विनायको हृदि तवाङ्कयोरुभयोः ।
कृत्वा मां कविनायकमङ्घ्री कुर्याः समेन शोभेयाः ॥ ३२ ॥
शिरसि वहसि जडरूपां गङ्गां चरणेऽपि नो मदीयमतिम् ।
सा स्वर्णदी नताढ्या भोगवती चेति चेत् तथैवैषा ॥ ३३ ॥
रागश्चेत् त्वयि निहितस्त्वं तु विरागं ददासि चेत् तस्मिन् ।
परमेश्वरस्य मनसि त्रपाङ्कुरः कथमिवापि नोदेति ॥ ३४ ॥
अन्नप्रसिद्धमीश स्वप्रत्ययमात्रमत्र मयि धेहि ।
विश्रवणोऽहं सत्यं ततश्च सख्यं मया भवेन्मुख्यम् ॥ ३५ ॥
रविनन्दनं जिगीषुर्नरः प्रसादस्य पात्रमभवत् ते ।
मदनवदहं दयाब्धे सम्प्रति न तथा भवान्यहो दिष्टम् ॥ ३६ ॥
आखण्डलादिपण्डितमण्डलमण्डन उदण्डमुण्डगलः ।
कुण्डलिकुण्डलमण्डितगण्डतलोऽखण्डमवतु चण्डीशः ॥ ३७ ॥
कलिकालहृत् कलिलसत्कीर्तिकुसुमकूट केशवप्रेष्ठ ।
कैवल्यदानकोविद कौ त्वद्ते कं व्रजाम्यहं रङ्कः ॥ ३८ ॥

गरलादः प्रियगानो गिरिशो गीर्वाणगुरुरयो गूढः ।
गेयो मुनिभिरसङ्गोपो गौरोऽवताद् विधृतगङ्गः ॥ ३९ ॥
विजयाग्नानि नयनमितराजीवं मञ्जुतरजटाजूटम् ।
नेतृ च जैवातृकधृत् तेजोऽब्जीकोङ्कं निहन्तु रुजः ॥ ४० ॥
कल्पलतासुदृढतरालिङ्गितकायः परिस्फुरत्सुमनमनाः ।
द्विजगणसन्तोषपदं कैलासे भाति कोपि कल्पतरुः ॥ ४१ ॥
प्रियपिप्पलं हि रजसा क्रीडन्तं चित्तमत्तमातङ्गम् ।
हन्तुं पञ्चास्यं श्रय रिङ्गन्तं तुङ्गशैलशैलाग्रे ॥ ४२ ॥
दुःसहतमभवतापप्रतप्तजनसौख्यदायकच्छायः ।
कैलासशैलशिखरे चिरन्तनतरो विभाति कोपि जटी ॥ ४३ ॥
भोः शम्भो शिव शङ्कर शशिशेखर शैलनाथ शितिकण्ठ ।
शुद्धस्वरूप शूलिन् शिवदायक शर्व शमय मम शमलम् ॥ ४४ ॥
सुखसदनं शुभवदनं जितमदनं कुन्दकाग्रसमरदनम् ।
अघहरणं भवतरणं भुजगाभरणं नमामि सुरशरणम् ॥ ४५ ॥
दोषाकरः प्रदोषः शैलूषो विषमिमे हि सोष्माणः ।
प्रेष्ठास्तवेति यातो हैमवतीनाथ किल्बिषोप्येषः ॥ ४६ ॥
शाण्डिल्यकुलभवोऽहं राग्यपि भवतः पदाम्बुजे पतितः ।
भवतु प्रियो यतोऽहं शाण्डिल्यकुलस्यपल्लवो भवाति ॥ ४७ ॥
बालस्य वाग्विलासं श्रोतुं प्रसं यदि श्रवः शम्भो ।
एतावता न हीनं परमाधिकं तेन तद्भवेज्जगति ॥ ४८ ॥
अगुणं वा सगुणं वा मल्लपनं कथमपीह विश्वगुरोः ।
प्रभवेत् प्रियमेव महादेवकुमारो यतोऽस्मि भोः शम्भो ॥ ४९ ॥
आर्या अपि गीतिर्विच्छित्तिविशेषशालिनी यस्मात् ।
तत्प्रियमेति पदयोर्मयार्पिता गिरिशगीतिमालेयम् ॥ ५० ॥
इति पन्तविठ्ठलेन निर्मिता शिवगीतिमाला समाप्ता.

---

## विठोबाअण्णाकृतः—कटावः

मुक्ताफल-परिकलितोत्तंस-परिष्कृत-पार्श्वमयत्नविकस्वर-रत्न विकसितं युगपदुदित-द्वसहस्रभास्करकरमदतस्करकार्तस्वरमयभास्वरमुकुटं संबिभ्राणं ॥ १ ॥
भो श्वेतः सीतारमणं चिंतय सगुणं प्रभुमतिकरुणं दीनोद्धरणं त्रिजगच्छरणं । भो श्वेतः० ॥ ध्रुवपदं ॥ जलदश्यामलं कुटिलकुंतलं केशरमृगमदतिलकितभालं रत्नकुंडलं विमलकपोलं श्रवणसीमसंचारिसरोजिं प्रपन्ननयन तिलकुसुमोपम

रुचिरनासिकं शारदचंद्रिसुंदरवदनं कुंदांकुररदनं मंदस्मितपीयूषलहरिका-धवलितविद्रुमशकलद्युतमरक्तिमबिंबाधरपरचुबुकं रेखात्रितयमनोहरकंठं कौस्तुभनायकमुक्ताफलमयहाराभरणं ॥ भोश्वेतः० ॥ २ ॥ अलक्षयजन्तुं वैदेहीघनपीनपयोधरकुंकुमपंकिलहृदयकपाटं स्वर्णतंतुघनभरितप्रांतोत्तरीयशाटं चामीकरमययज्ञसूत्रसत्प्रभमेदुरं त्रिवलिभंगुरं गभीरनाभीविवरसुंदरं शतकोटिब्रह्मांडमंदिरं तनुरोमालिचमत्कृतिरुचिरं दधानमुदरं मंजुलगुंजारवयुवषट्पदपुंजपंजरायिततनुघुसृणांगरागपिंजरकल्पद्रुमनवकुसुमतुलसिकातरुणमंजरीपदाग्रचुंबकलंबस्रङ्निकुरंबकसंभवदंबरसंभरणक्षमडंबरमधुरपरिमलोद्गारविहरणं ॥ भोश्वेतः० ॥ ३ ॥ पीनस्कंधाजानुदीर्घकनकांगदतोडरकटकविराजितकुंकुमसृगमदगर्भितचंदनकर्दमचर्चितभुजगसुभगभुजमभिनवतामरसप्रभकरतलमंगुलीयपरिकलितललितसरलांगुलिभिर्द्युतिहरनखरं वामे दधतं जरठकमठवरपृष्ठकठोरं घोरतरासुरकृतांतदंडं वरकोदंडं दक्षे बाणं राक्षसलक्षप्राणप्रहरणं विद्वद्वृंदत्राणवितरणं ॥ भोश्वेतः० ॥ ४ ॥ मंजुलशिंजत्क्षुद्रघटिकाराजिविराजितमणिमयशृंखललसत्कटितटं पुरटघटितपटवासमुवासितपीतपटं विपुलोरुद्वितयं मांसलतरजानुजंघमजरं रत्नतोडरं मंजु मंजु शिंजाननूपुरं फुल्लहल्लकारुणध्वजांबुजयजांकुशलांछनाढ्यमृदुतलवृत्तोत्तुंगसुधाकरसोदरनखरचंद्रिकाध्वस्तमहत्तमहृदयांधतमसजनकनंदिनीकोमलतरकरकमलकिसलयात्यंतविलक्षणनवमरविधनायमौल्यलंकरणदुश्चरणसंभवश्रमणहरणभवतरणकरणसुखवितरणनिपुणक्षणस्मरण सद्रक्षणशोभनलक्षणचरणं ॥ भोश्वेतः० ॥ ५ ॥ सीतालक्ष्मणभरतबिभीषणशत्रुघ्नांगदसुगलजांबवत्पनसहनूमद्गवाक्षगजनलनीलसुषेणाद्विविदमैंदशरभश्रीनारदसनकसनंदनसनत्कुमारसनातनशौनकवसिष्ठगौतमवामदेववाल्मीकपराशरभरद्वाजजाबालिव्यासागस्त्यपुरंदरपावकपितृपतिनिर्ऋतिवरुणपवनद्रविणेश्वरशंभुब्रह्मानंतयक्षरक्षोगणचारणगुह्यकपन्नगकिंनरविद्याधरभावैः कृतपरिचरणं ॥ भोश्वेतः० ॥ ६ ॥ केशव माधव नारायण वामन विष्णो लक्ष्मीधर दामोदर सीतावल्लभ सरसिजलोचन सर्वजनेश्वर सर्वोत्तम सर्वांतर्यामिंश्चलरयूतीरविहारिन् स्वामिन् हे कौसल्यानंदविवर्धन दुर्जनमर्दन राम जनार्दन कार्मुकपाणे करुणासिंधो राम राम जय राम रघूत्तम मूढे ऽस्मिन् मयि करुणां कुरु कुरु घोरतरे संसारसागरे लीनं दीनं बुद्धिविहीनं त्वमुद्धरोद्धर एवं निगदरकरुणं करुणं ॥ भोश्वेतः० ॥ ७ ॥ यः शिव इति शैवागमगदितो जैनैरर्हन्निति संप्रोक्तो बुद्धैर्बुद्ध इति व्याख्यातः कर्मेत्येवं मीमांसायां कर्तेत्येवं तर्के भणितः सत्यं ज्ञानमनंतं ब्रह्माचलमव्ययमप्रमेयममलं नित्यं शुद्धं बुद्धं शाश्वतमव्याहतमाद्यंतविरहितं नित्यानंदं परमं पदमिति सर्वासामुपनिषदां यो ऽर्थः स श्रीरामः सीतापतिरिति मत्वा तं प्रत्येवात्मानं सर्वस्वेन निवेदय वंदय लोकय वर्णय कर्णय अर्चय चर्चय तर्पय सर्पय सततं साध्वसाधु वा कृतं समर्पय निर्वाणसमयपरमसखि श्रीरामतापनीयोपनिषदमनुशीलय

निपुणं॥ भोश्चेतः० ॥ ८॥ किं चापथ्यं कलयसि विषयाननुभवितुं सुखलेशाभासान् त्याभासान् रौरवादिनारकगतिहेतूनिमान् संत्यज मातरमिव परकीयान् दारानबिलकमिव परकीयधनं हालाहलमिव परापवादं पारुष्यं चानृतमपि परिहर कामाद्यरिषड्वर्गं निर्मूलं जहि बत सखि चेतो बहुविधपापवशाद्दुःखावचयोनिषु बहुशो भ्रामं भ्रामं दैवादस्मिन् भारतवर्षे मानुषयोनिः पौरुषदेहश्चेंद्रियपटुता सत्येतावति नित्यानंदे करुणासिंधावर्विमश्वर्छ्रीमत्सीतानाथे विमुखो भूत्वा शिव शिव किं रे पुत्र कलत्रोदर भरणार्थं वित्तचिंतमूमत्तभूपपरिचर्यारसिको भ्रमसि दिशि विदिशि किंच निश्चितं नित्योहं निर्विकल्पकोहं शुद्धोहं ब्रह्मास्मि केवलं इत्यमृतोपमसद्भावनया रहितः स्वहितच्छेदकुठारघोरं कलयसि बलवान् कुलवान् धनसंपन्नः सुभगस्तरुणो विद्वांश्चतुरोऽहमेव नान्यः कश्चिन्मत्सदृशो लोकेस्मिन्नेवं निर्भरदुर्भावनमयगर्वपर्वतारूढा मूढो नियतं निरये निपतेस्तस्माद् रे रे भ्रातश्चेतस्त्वरितं साधुसंगमंगीकुरु कुशलं त्यज त्यज त्वं दुरंतचिंतनं पुरातनसद्यस्तनमुपयाहि शांतमं राममनंतं संप्राप्नोयं हंत संततं पंतविठ्ठलस्त्वामपि शरणं ॥ भोश्चेतः० ॥ ९ ॥

संपूर्णः

---

## गंगाधरकृतं विलासगुच्छकाव्यम् .

श्रीदक्षिणामूर्तिमशेषविद्यादातारमीशं प्रणिपत्य साम्बम् ।
श्रीविश्वनाथं च गुरुं दयालुं करोमि काव्यं सुविलासगुच्छम् ॥ १ ॥
कश्चिद् युवा कामशराभिविद्धो विलोलनेत्रां तरुणीं समीक्ष्य ।
वसन्तकाले बहुयुक्तियुक्तां गामब्रवीत्तां विलसद्विलासाम् ॥ २ ॥
अयि मानिनि पंकजानने सुकुमारांगि विलोलल्लोचने ।
अतुलं विदधासि कौतुकं सुचलल्लोचनविस्फुरत्कटाक्षैः ॥ ३ ॥
अयि कोमललोचनेऽमले विलसत्तीरदुकूलशोभिते ।
कुसुमैरुपशोभितानमून् बहुवृक्षानवलोकय प्रिये ॥ ४ ॥
अयं रसालो बहुमञ्जरीभिः सुगंधिताभिः परिपूरयन् वै ।
दिशः सदा सर्वजनाभिरामस्तथापि दुःखं प्रददाति मह्यम् ॥ ५ ॥
प्रिये मजुले मंजुलां गां ब्रवीति प्रियां कोकिलां कोकिलोऽयं शृणु त्वम् ।
रसाले सुखं मञ्जरीगन्धतुष्टः सदा रंतुकामः प्रियां चुम्बतीह ॥ ६ ॥
हे कोकिल त्वं बहुदुःखकर्ता वाण्या सदा मंजुलया नराणाम् ।
प्रियावियोगेन सुदुःखितानां गच्छ द्वितीयाम्रमहीरुहं त्वम् ॥ ७ ॥
विलोलचोलसंयुते विशिष्टभूषणान्विते ।
विचित्रवस्त्रसंवृते पलाशिनं विलोकय ॥

अशोकमम्बरं गतं चलत्सुपक्षिसंयुतम् ।
सदाचलत्पलाशया सुवीरुधा स्वलंकृतम् ॥ ८ ॥
सखि विलोकय कीरममुं द्रुमे दधतमंजनपूर्णविलोचने ।
सुपरिपक्वमशोकफलं मुखे स्ववनिताविरहादतिदुःखिते ॥ ९ ॥
अयि पद्मपलाशलोचने मृदुलापांगि सुबन्धुरस्तनि ।
रटदच्छमयूरशोभितं बकुलं पुष्पयुतं विलोकय ॥ १० ॥
अयं बकुलपादपः कुसुममालतीसंयुतः । करोति मदनज्वरं विरहियोषितां संततम् ॥
तथापि मयि दुःखिते सुखकरो भवत्येष वै । चिरंतनसुसंगमात्तव सरोजवक्त्रे सखि ॥११
अयं मयूरो वदति प्रियां प्रति प्रवृद्धतारुण्यकलां स्वलंकृताम् ।
अयि प्रिये सुन्दरि देहि चुम्बनं पदे पदे प्रस्खलितो भवत्यसौ ॥ १२॥
अयं नीपो वृक्षः परिमलभरालंकृतवनः ।
क्वणद्द्विरदभृंगस्तरुवरवरिष्ठो विजयते ॥
तथाप्येको दोषस्त्विह खलु सदा स्वीयकुसुमैः ।
परेषां हृत्पद्मे वितरति सुदुःखं विरहिणाम् ॥ १३ ॥
अयं चंदनो वंदनीयः सदैव प्रियां मल्लिकां सर्ववल्लीवरिष्ठाम् ।
सदाप्यब्जनेत्रे सदा पुष्पहासैः सुदुःखं करोति प्रिये तेन योग्यम् ॥ १४॥
अयि चंदनचर्चितांगके विलसत्कोमलहास्यसंयुते ।
नवचंपकवृक्षपुष्पकैः शयनं कर्तुमिहार्हसि प्रिये ॥ १५ ॥
अयि कन्दुकवर्तुलस्तनि सखि कुंजे नितरां मया सह ।
शुककोकिलसारिकाध्वनौ प्रभवत्यत्र विहर्तुमर्हसि ॥ १६ ॥
इति तस्य वचो बहु मंजुलकं श्रवणे विनिधाय हितं परमम् ।
अवदस्मितमंजुलया सुगिरा परिनम्रमुखी बहु सम्यगिदम् ॥ १७ ॥
अतनुज्वरपीडितास्मि तन्वी बहु रम्यं च वनं मनोरमम् ।
प्रिय नाथ तवास्मि वल्लभा इह कार्यं बहु संमतं भवेत् ॥ १८ ॥
इत्युक्त्वा सपदि हितं प्रिया नवीना संजाता बहुमदखेदसंयुता च ।
आलिंग्य प्रियकरमम्बुजाक्षियुक्ता अंभोजप्रविरचिते च मंचकेऽस्मिन् १९
इत्थं तस्मिन्वने रम्ये विहृत्य च यथेप्सितम् ।
तौ दम्पती पुनः स्वीयं सदनं समुपागतौ ॥ २० ॥

इति श्रीविश्वनाथशिष्यविठ्ठलसूरिसूनुगंगाधरकविविरचितं विलासगुच्छं काव्यं संपूर्णम्.

---

# शिवानंदलहरी.

कलाभ्यां चूडालंकृतशशिकलाभ्यां निजतपः ।
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ॥
शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन- ।
र्भवाभ्यामानंदस्फुरदनुभवाभ्यां नतिरियम् ॥ १ ॥
गलंती शंभो त्वच्चरितसरितः किल्बिषरजो ।
दलंती धीकुल्यासरणिषु पतंती विजयताम् ॥
दिशती संसारभ्रमणपरितापोपशमनं ।
वसंती मच्चेतोह्रदभुवि शिवानंदलहरी ॥ २ ॥
त्रयीवेद्यं हृद्यं त्रिपुरहरमाद्यं त्रिनयन ।
जटाभारोदारं चरदुरगहारं मृगधरम् ॥
महादेवं देवं मयि सदयभावं पशुपतिं ।
चिदालंबं सांबं शिवमतिविडंबं हृदि भजे ॥ ३ ॥
सहस्रं वर्तंते जगति विबुधाः क्षुद्रफलदा ।
न मन्ये स्वप्ने वा तदनुसरणं तत्कृतफलम् ॥
हरिब्रह्मादीनामपि निकटभाजामसुलभं ।
चिरं याचे शंभो हृदि तव पदांभोजभजनम् ॥ ४ ॥
स्मृतौ शास्त्रे वैद्ये शकुनकवितागानभणितौ ।
पुराणे मंत्रे वा स्तुतिनटनहास्येष्वचतुरः ॥
कथं राज्ञां प्रीतिर्भवति मयि कोऽहं पशुपते ।
पशुं मां सर्वज्ञ प्रथितकृपया पालय विभो ॥ ५ ॥
घटो वा मृत्पिंडोप्यणुरपि च धूमोग्निरचलः ।
पटो वा तंतुर्वा परिहरति वा घोरशमनम् ॥
वृथा कंठक्षोभं वहसि तरसा तर्कवचसा ।
पदांभोजं शंभोर्भज परमसौख्यं व्रज सुधीः ॥ ६ ॥
मनस्ते पादाब्जे निवसतु वचस्तोत्रभणितौ ।
करौ चाभ्यर्चायां श्रुतिरपि कथाकर्णनविधौ ॥
तव ध्याने बुद्धिर्नयनयुगलं मूर्तिविभवे ।
परं ग्रंथान् कैर्वा परमशिव जाने बहुमतान् ॥ ७ ॥
यथा बुद्धिः शुक्तौ रजतमिति काचाश्मनि मणि- ।
र्जले पैष्टे क्षीरं भवति मृगतृष्णासु सलिलम् ॥

तथा देवभ्रांत्या भजति भवदन्यं जडजनो ।
महादेवं तं त्वां मनसि च नमत्वा पशुपते ॥ ८ ॥
गभीरे कासारे विशति विजने घोरविपिने ।
विशाले शैले च भ्रमति कुसुमार्थं जडधिया ॥
समर्प्यैकं चेतः सरसिजमुमानाथ भवते ।
सुखेनैव स्थातुं जन इह न जानाति किमहो ॥ ९ ॥
नरत्वं देवत्वं ननु वनमृगत्वं मशकता ।
पशुत्वं कीटत्वं भवतु विहगत्वादिजननम् ॥
सदा त्वत्पादाब्जस्मरणपरमानंदलहरी-
विहारासक्तं चेद्धृदयमिह किं तेन वपुषा ॥ १० ॥
बटुर्वा गेही वा यतिरपि जटी वा तदितरो ।
नरो वा यः कश्चिद्भवतु भव किं तेन भवति ॥
यदीयं हृत्पद्मं यदि भवदधीनं पशुपते ।
तदीयस्त्वं शंभो भवसि भवभारं च वहसि ॥ ११ ॥
गुहायां वा गेहे बहिरपि वने वाद्रिशिखरे ।
जले वा वन्हौ वा वसतु वसतेः किं वद फलम् ॥
यदीयं स्वच्छांतःकरणमपि शंभो तव पदे ।
स्थितं चेद्योगोऽसौ स च परमयोगी स च सुखी ॥ १२ ॥
असारे संसारे निजभजनदूरे जडतया ।
भ्रमंतं मां व्यर्थं परमकृपया पातुमुचितम् ॥
मदन्यः को दीनस्तव कृपणरक्षातिनिपुण-
स्त्वदन्यः को वा मे त्रिजगतिशरण्यः पशुपते ॥ १३ ॥
प्रभो त्वं दीनानां खलु परमबंधुः पशुपते ।
प्रमुख्योऽहं तेषामपि किमुत बंधुत्वमनयोः ॥
त्वयैव क्षंतव्याः शिव मदपराधाश्च सकलाः ।
प्रयत्नात् कर्तव्यं मदवनमियं बंधुसरणिः ॥ १४ ॥
उपेक्षा नो चेत् किं नो हरसि शिव ध्यानविमुखां ।
दुराशाभूयिष्ठां विधिलिपिमशक्तो यदि भवान् ॥
शिरस्तद्वधात्रं* भव हर सुवृत्तं पशुपते ।
कथं वा निर्यत्नात् करनखमुखेनैव लुलितम् ॥ १५ ॥
विरिंचिर्दीर्घायुर्भवतु भवता तद्वरःशिर- ।

* एथें कांहीं अपपाठ असावा.

श्चतुष्कं संरक्ष्यं स खलु भुवि दैन्यं लिखितवान् ॥
विचारः को वा मां विशदकृपया पाति शिव ते ।
कटाक्षव्यापारः स्वयमखिलदीनावनपरः ॥ १६ ॥
फलाद्वा पुण्यानां मयि करुणया वा त्वयि विभो ।
प्रसन्नेपि स्वामिन् भवदमलपादाब्जयुगुलम् ॥
कदा पश्येयं मां स्थगयति पुनः संभ्रमजुषां ।
निलिंपानां श्रेणी निजकनकमाणिक्यमुकुटैः ॥ १७ ॥
त्वमेको लोकानां परमफलदो दिव्यपदवीं ।
वहंतस्त्वन्मूलां पुनरपि भजंते हरिमुखाः ॥
कियद्वा दाक्षिण्यं शिव तव मदाशा च कियती ।
कदा वा मद्रक्षां वहसि करुणापूरितदृशा ॥ १८ ॥
दुराशाभूयिष्ठे दुरधिपगृहद्वारघटके ।
दुरंते संसारे दुरितनिलये दुःखजनके ॥
मदायासं किं न व्यपनयसि कस्योपकृतये ।
वदेयं प्रीतिश्चेत्तव शिव कृतार्थाः खलु वयम् ॥ १९ ॥
सदा मोहाटव्यां चरति युवतीनां कुचगिरौ ।
नटत्याशाशाखास्वटति चरति स्वैरमभितः ॥
कपालिन् भिक्षो मे हृदयकपिमत्यंतचपलं ।
दृढं भक्त्या बध्वा शिव भवदधीनं कुरु विभो ॥ २० ॥
धृतिस्तंभाधारां दृढगुणनिबद्धांसगमनां ।
विचित्रां पद्माढ्यां प्रतिदिवससन्मार्गघटिताम् ॥
स्मरारे मच्चेतः स्फुटपटकुटीं प्राप्य विशदां ।
जय स्वामिन् शक्त्या सह शिवगणैः सेवितविभो ॥ २१ ॥
प्रलोभाद्यैरर्थाहरणपरतंत्रो धनिगृहे ।
प्रवेशोद्युक्तः सन् भ्रमति बहुधा तस्करपते ॥
इमं चेतश्चोरं कथमिह सहे शंकर विभो ।
तवाधीनं कृत्वा मयि निरपराधे कुरु कृपाम् ॥ २२ ॥
करोमि त्वत्पूजां सपदि सुखदो मे भव विभो ।
विधित्वं विष्णुत्वं दिशसि खलु तस्याः फलमिति ॥
पुनश्च त्वां द्रष्टुं दिवि भुवि वहन् पक्षिमृगतां ।
न दिष्ट्या तत्खेदं कथमिह सहे शंकर विभो ॥ २३ ॥
इदं ते युक्तं वा परमशिव कारुण्यजलधे ।

गतौ तिर्यग्रूपं तव पदशिरोदर्शनधिया ॥
हरिब्रह्माणौ तौ दिवि भुवि चरंतौ श्रमयुतौ ।
कथं मत्वा स्वामिन् कथय मम वेद्योऽसि पुरतः ॥ २४ ॥
कदा वा कैलासे कनकमणिसौधे सहगणै-।
र्वसन् शंभोरग्रे स्फुटघटितमूर्धांजलिपुटः ॥
विभो सांब स्वामिन् परमशिव पाहीति निगदन् ।
विधातॄणां कल्पान् क्षणमिव विनेष्यामि सुखतः ॥ २५ ॥
स्तवैर्ब्रह्मादीनां जय जय वचोभिर्नियमिनां ।
गणानां क्ष्वेलाभिर्मदकलमहोक्षस्य ककुदि ॥
स्थितं नीलग्रीवं त्रिनयनमुमाश्लिष्टवपुषं ।
कदा त्वां पश्येयं करधृतमृगं खंडपरशुम् ॥ २६ ॥
कदावाहं दिष्ट्या गिरिश भव भव्यांघ्रियुगुलं ।
गृहीत्वा हस्ताभ्यां शिरसि नयने वक्षसि वहन् ॥
समाश्लिष्याघ्राय स्फुटजलजगंधान् परिमला-।
नलभ्यान् ब्रह्माद्यैर्मुदमनुभविष्यामि हृदये ॥ २७ ॥
करस्थे हेमाद्रौ गिरिश निकटस्थे धनपतौ ।
गृहस्थे स्वर्भूजामरसुरभिचिंतामणिगणे ॥
शिरस्थे शीतांशौ चरणयुगलस्थे ऽखिलशुभे ।
कमर्थं दास्येऽहं भवतु भवदर्थं मम मनः ॥ २८ ॥
सारूप्यं तव पूजने शिव महादेवेति संकीर्तने ।
सामीप्यं शिव भक्तिधुर्यजनतासांगत्यसंभाषणे ॥
सालोक्यं सचराचरात्मकतनुध्याने भवानीपते ।
सायुज्यं समाधिद्रुमत्र भवति स्वामिन् कृतार्थोऽस्म्यहम् ॥ २९ ॥
त्वत्पादांबुजमर्चयामि परमं त्वां चिंतयाम्यन्वहं ।
त्वामीशं शरणं व्रजामि वचसा त्वामेव याचे विभो ॥
दीक्षां मे दिश चाक्षुषीं सकरुणां देवैश्चिरं प्रार्थितां ।
शंभो लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ ३० ॥
वस्त्रं धूतविधौ सहस्रकरता पुष्पार्चने विष्णुता ।
गंधे गंधवहात्मताऽन्नपचने बर्हिर्मुखाध्यक्षता ॥
पात्रे कांचनगर्भतास्ति मयि चेद्बालेंदुचूडामणे ।
शुश्रूषां करवाणि ते पशुपते स्वामिन् त्रिलोकीगुरो ॥ ३१ ॥
नालं वासुकदेव देव भवतः सेवानतिर्वा नुतिः ।

पूजा वा स्मरणं कथाश्रवणमप्यालोकनं मादृशाम् ॥
स्वामिन्नस्थिरदेवतानुसरणायासेन किं लभ्यते ।
का वा मुक्तिरितः कुतो भवति चेत् किं प्रार्थनीयं ततः ॥ ३२ ॥
नालं वा परमोपकारकमिदं ह्येकं पशूनां पते ।
दृष्ट्वा कुक्षिगतान् चराचरगणान् बाह्यस्थितान् रक्षितान् ॥
सर्वामर्त्यपलायनौषधमतिज्वालाकरं भीकरं ।
निक्षिप्तं गरलं गलेन गिलितं नोद्गीर्णमेव त्वया ॥ ३३ ॥
ज्वालोग्रः सकलामरातिभयदः क्ष्वेलः कथं वा त्वया ।
दृष्टः किं मुकुरोद्धृतः करतले किं पक्वजंबूफलम् ॥
जिव्हायां निहिता च सिद्धगुटिका वा कंठदेशे धृतः ।
किं ते नीलमणिर्विभूषणमयं शंभो महात्मन् वद ॥ ३४ ॥
किं ब्रूमस्तव साहसं पशुपते कस्यास्ति शंभो भव- ।
द्धैर्यं चोद्धृतमात्मनः स्थितिरियं चान्यैः कथं लभ्यते ॥
भ्रश्यद्देवगणं त्रसन्मुनिजनं नश्यत्प्रपंचालयं ।
पश्यन्निर्भर एक एव विहरस्यानंदसांद्रो भवान् ॥ ३५ ॥
योगी धुरंधरस्य सकलः श्रेयः पदाद्योगिनो ।
दृष्टादृष्टमतोपदेशकृतिनो बाह्यांतरव्यापिनः ॥
सर्वज्ञस्य दयापरस्य भवतः किं वेदितव्यं मया ।
शंभो त्वं परमांतरंग इति मे चित्ते स्मराम्यन्वहम् ॥ ३६ ॥
भक्तो भक्तिगुणावृते मुदमृतापूर्णे प्रसन्ने मनः ।
कुंभे सांब शिवांघ्रिपल्लवयुगं संस्थाप्य संवित्फलं ॥
नीत्वा मंत्रमुदीरयं निजशरीरागारशुद्धिं वहन् ।
पुण्याहं प्रकटीकरोमि सुचिरं कल्याणमापादयन् ॥ ३७ ॥
आम्नायांबुधिमादरेण सुमनःसंघाः समद्यन्मनो ।
मंथानं दृढभक्तिरज्जुसहितं नीत्वा मथित्वा ततः ॥
सोमं कल्पतरुं सुपर्वसुरभिं चिंतामणिं धीमतां ।
नित्यानंदसुधां निरंतररमासौभाग्यमातन्वते ॥ ३८ ॥
प्राक् पुण्याचलमार्गदर्शितसुधामूर्तिः प्रसन्नः शिवः ।
सोमः सद्गणसेवितो मृगधरः पूर्णस्तमोमोचकः ॥
चेतःपुष्करलक्षितो भवति चेदानंदपाथोनिधिः ।
प्रागल्भ्येन विजृंभिते सुमनसां वृत्तिस्तदा जायते ॥ ३९ ॥
धर्मो मे चतुरंघ्रिभिः सुचरितं पापं विनाशं गतं ।




कामक्रोधमदादयो विगलिताः कालाः सुखाविष्कृता
ज्ञानानंदमहौषधीः सुफलिताः कैवल्यनाथे सदा ।
रम्ये मानसपुंडरीकनगरे राजावतंसे स्थिते ॥ ४० ॥
धीयंत्रेण वचोघटेण कविता कुल्यानुकूलक्रमा- ।
दानीतैश्च सदाशिवस्य चरितांभोराशिदिव्यामृतैः ॥
हृत्केदारयुताः सुभक्तिकलमाः साफल्यमातन्वते ।
दुर्भिक्षान्मम सेवकस्य भगवन् विश्वेश भीतिः कुतः ॥ ४१ ॥
पापोत्पातविमोचनाय सुचिरैश्वर्याय मृत्युंजय ।
स्तोत्रध्याननतिप्रदक्षिणसपर्यालोकनाकर्णने ॥
जिव्हाचित्तशिरोंघ्रिहस्तनयनश्रोत्रैरहं प्रार्थितो ।
मामाज्ञापय मां निरूपय मुहुर्मामेव मामेव च ॥ ४२ ॥
गांभीर्यं परिखा धृतिर्बहुगुणप्राकार उद्यद्गुण- ।
स्तोमश्चाप्तबलं घनेंद्रियगुणा द्वाराणि देहस्थितिः ॥
विद्या वस्तुसमृद्धिरित्यखिलसामग्री समावेशते ।
भो विश्वेश्वर सर्वदा मम मनोदुर्गे निवासं कुरु ॥ ४३ ॥
मा गच्छत्वमितस्ततो गिरिश भो मय्येव वासं कुरु ।
स्वामिन्नादिकिरात मामकमनः कांतारसीमांतरे ॥
वर्तंते बहुशो मृगा मदजुषो मात्सर्यमोहादय- ।
स्तान् हत्वा मृगयाविनोदमचिरादागच्छ संप्राप्स्यसि ॥ ४४ ॥
करलग्नमृगः करींद्रभंगो घनशार्दूलविखंडनोव जंतुः ॥
गिरिशो विशदाकृतिश्च चेतःकुहरे पंचमुखोस्ति मे कुतो भीः ॥ ४५ ॥
छंदःशाखिगुणान्विते द्विजवरैः संसेविते शाश्वते ।
सौख्यापादिनि भेदभेदिनि सुधासारैः फलैर्दीपिते ॥
चेतः पक्षिशिखामणे सज वृथा संसारवन्यैरलं ।
नित्यं शंकरपादपद्मयुगुले नीडे निवासं कुरु ॥ ४६ ॥
आकीर्णे नखराजिकांतिविभवैरुद्यत्सुधावैभवै- ।
राधौ* पि च पद्मरागललिते हंसव्रजैराश्रिते ॥
नित्यं भक्तिवधूगणैश्च रहसि स्वेच्छाविहारं कुरु ।
स्थित्वा मानसराजहंस गिरिजानाथांघ्रिसौधांतरे ॥ ४७ ॥
शंभुध्यानवसंतसंगिनि हृदारामेऽघजीर्णच्छदाः ।
स्रस्ता भक्तिलताछटाविलसिताः पुण्यप्रवालाश्रिताः ॥

---

* या धौच्या पुढें एक गुरु अक्षर पाहिजे.

दीप्यंते गुणकोरका जयवचः पुष्पाणि सद्वासना ।
ज्ञानानंदसुधां मिलिंद लहरींसंवित्फलाभ्युन्नतिः ॥ ४८ ॥
नित्यानंदरसालयं सुरमुनिस्वांतांबुजाताश्रयं ।
स्वच्छं सद्द्विजसेवितं कलुषहृत् सद्वासनाविष्कृतम् ।
शंभुध्यानसरोवरं व्रज मनोहंसावतंसाश्रयं ।
किं क्षुद्राश्रयपल्वलभ्रमणसंजातश्रमं प्राप्स्यसि ॥ ४९ ॥
आनंदामृतपूरिता हरपदांभोजालवालोद्रता ।
धैर्योपघ्नमुपेत्य भक्तिलतिका शाखोपशाखान्विता ॥
उच्चैर्मानसकायमानपटलीमाक्रम्य निष्कल्मषा ।
नित्याभीष्टफलप्रदा भवतु मे सत्कर्मसंवर्धिता ॥ ५० ॥
भृंगीच्छानटनोत्सुकः करिमदग्राही स्फुरन्माधवा- ।
ल्हादो नादयुतो महासितवपुः पंचेषुसंवर्धितः ॥
सत्पक्षः सुमनोवनेषु सुमुखः साक्षान्मदीये मनो ।
राजीवे भ्रमराधिपो विहरतां श्रीशैलनाथः शिवः ॥ ५१ ॥
संध्यारंभविजृंभितं श्रुतिशिरस्थानांतराधितं ।
सत्प्रेमभ्रमराभिराममसकृत्सद्वासनालोकितम् ॥
भोगींद्राभमयं समस्तसुमनःपूज्यं गुणाविष्कृतम् ।
सेवे श्रीगिरिमल्लिकार्जुनमहालिंगं शिवालिंगितं ॥ ५२ ॥
कारुण्यामृतवर्षिणं घनविपद्ग्रीष्मच्छिदाकर्मठं ।
विद्यासस्यफलोदयाय सकलैः संसेव्यमानाकृतिम् ॥
नृत्यद्भक्तिमयूरमद्रिनिलयं चंचज्जटाचंचलं ।
शंभो वांछति नीलकंधर सदा त्वां मे मनश्चातकः ॥ ५३ ॥
आकाशे न शिखी समस्तफणिनां नेत्रैः कलापीनता- ।
नुग्राहप्रणवोपदेशिनिनदैः केकीति योगीयते ॥
श्यामां शैलसमुद्भवां घनरुचिं दृष्ट्वा नटंतं मुदा ।
वेदांतोपवने विहाररसिकं तं नीलकंठं भजे ॥ ५४ ॥
संध्याघर्मदिनात्ययो हरिकराघातप्रभूतानक- ।
ध्वानो वारिदगर्जितं दिविषदां दृष्टिश्छटाचंचला ॥
भक्तानां परितोषबाष्पविततिर्वृष्टिर्मयूरी शिवा ।
यस्मिन्नुज्ज्वलतांडवं विजयते तं नीलकंठं भजे ॥ ५५ ॥
आम्नायामिततेजसे श्रुतिपदैर्वेद्याय साध्याय स- ।
द्विद्यानंदमयात्मने त्रिजगतां संरक्षणोद्योगिने ॥

ध्येयायाखिलयोगिभिर्मुनिगणैर्गेयाय मायाविने
सन्ध्यताण्डवसंभ्रमाय जटिने सेयं नतिः शंभवे ॥ ५६ ॥
नित्याय त्रिगुणात्मने पुरजिते कात्यायनीश्रेयसे ।
सत्यायादिकुटुंबिने मुनिमनःप्रत्यक्षचिन्मूर्तये ॥
मायासृष्टजगत्त्रयाय सकलाम्नायांतसंचारिणे ।
सायं तांडवसंभ्रमाय जटिने सेयं नतिः शंभवे ॥ ५७ ॥
नित्यं स्वोदरपूरणाय सकलानुद्दिश्यवित्ताशया ।
व्यर्थं पर्यटनं करोमि भवतः सेवां न कुर्वे विभो ॥
प्राक्जन्मांतरपुण्यपाकवशतस्त्वं शर्व सर्वांतरे ।
तिष्ठस्येव हि तेन वा पशुपते संरक्षणीयोस्म्यहम् ॥ ५८ ॥
एको वारिजबांधवः क्षितिनभोव्याप्तं तमोमंडलं ।
भित्वा लोचनगोचरोपि भवति त्वं कोटिसूर्यप्रभः ॥
वेद्यः किं न भवस्यहो घनतरं कीदृक्षमस्मत्तम- ।
स्तत्सर्वं व्यपनीय मे पशुपते साक्षात् प्रसन्नो भव ॥ ५९ ॥
हंसः पद्मवनं समिच्छति यथा नीलांबुदं चातकः ।
कोकः कोकनदप्रियं प्रतिदिनं चंद्रं चकोरस्तथा ॥
चेतो वांछति मामकं पशुपते चिन्मार्गमृग्यं विभो ।
गौरीनाथ भवत्पदाब्जभजनं कैवल्यसौख्यप्रदम् ॥ ६० ॥
रोधस्तोयहृतः श्रमेण पथिकश्छायातरोर्वृष्टिभिः ।
भीतः स्वच्छगृहं गृहस्थमतिथिर्दीनः प्रभुं धार्मिकम् ॥
दीपं संतमसाकुलश्च शिखिनं शीतावृतस्त्वं तथा ।
चेतः सर्वभयापहं व्रज सुखं शंभोः पदांभोरुहम् ॥ ६१ ॥
अंकोलं निजबीजसंततिरयस्कांतोपलं सूचिका ।
साध्वी नैजविभुं लता क्षितिरुहं सिंधुः सरिद्वल्लभम् ॥
प्राप्नोतीह यथा तथा पशुपतेः पादारविंदद्वयं ।
चेतोवृत्तिरुपेत्य तिष्ठति सदा सा भक्तिरित्युच्यते ॥ ६२ ॥
आनंदाश्रुभिरातनोति पुलकं नैर्मल्यमाच्छादनं ।
वाचा शंखमुखस्थितैश्च जठरापूर्तिं चरित्रामृतैः ॥
रुद्राक्षैर्भसितेश्च देव वपुषो रक्षां भवद्भावना ।
पर्यंके विनिवेश्य भक्तिजननी भक्तार्भकं रक्षति ॥ ६३ ॥
मार्गावर्तितपादुका पशुपतेरंगस्य कूर्चायते ।
गंडूषांबुनिषेचनं पुररिपोर्दिव्याभिषेकायते ॥

किंचिद्भक्षितमामिषस्य शकलं दिव्योपहारायते ।
भक्तिः किंतु करोत्यहो वनचरो भक्तावतंसायते ॥ ६४ ॥
वक्षस्ताडनशंकया विचलितो वैवस्वतो निर्जराः ।
कोटीरोज्ज्वलरत्नदीपकलिका नीराजनं तन्वते ॥
दृष्ट्वा मुक्तिवधूस्तनोति निभृताश्लेषं भवानीपते ।
यच्चेतस्तव पादपद्मभजनं तस्येह किं दुर्लभम् ॥ ६५ ॥
क्रीडार्थं सृजसि प्रपंचमखिलं क्रीडामृगास्ते जना ।
यत् कर्माचरितं मया च भवतः प्रीत्यै भवत्येव तत् ॥
शंभो स्वस्य कुतूहलस्य करणं मच्चेष्टितं निश्चितं ।
नित्यं मामकरक्षणं पशुपते कर्तव्यमेव त्वया ॥ ६६ ॥
बहुविधपरितोषबाष्पपूरस्फुटपुलकांकुरचारुभोगभूमिम् ।
अविरतफलकांक्षिसेव्यमानां परमसदाशिव भावनां प्रपद्ये ॥ ६७ ॥
अमितमुदमृतैर्मुहुः स्फुरंतीममलभवत्पदगोष्ठमावसंतीम् ।
सदय पशुपते सुपुण्यपाकां हृदयशिशोर्दिश भक्तिधेनुमेकाम् ॥ ६८ ॥
अरहसि रहसि स्वतंत्रबुद्ध्या वरिवसितुं सुलभः प्रसन्नमूर्तिः ।
अगणितफलदायकः प्रभुर्मे जगदधिको हृदि राजशेखरोऽस्ति ॥ ६९ ॥
जडता पशुता कलंकिता वा कुटिलचरत्वं च नास्ति मयि देव ।
अस्ति यदि राजमौले भवदाभरणस्य नास्मि किं पात्रम् ॥ ७०* ॥
आरूढभक्तिगुणकुंचितभावचापमुक्तैः शिव स्मरणबाणगणैरमोघैः ।
निर्जित्य किल्बिषरिपून् विजयी सुधीद्रः सानंदमावहति सुस्थिरराजलक्ष्मीम् ॥ ७१ ॥
ध्यानांजनेन समवेक्ष्य तमःप्रदेशं भित्वा महावलिभिरीश्वरनाममंत्रैः ।
दिव्याश्रितं भुजगभूषितमुद्वहंति ये पादपद्ममिह ते शिव ते कृतार्थाः ॥ ७२ ॥
भूदारतामुदवहद्यदपेक्षया श्री भूदार एव सुमते किमतोऽपि लभ्यम् ।
केदारमाकलय मुक्तिफलौषधीनां पादारविंदभजनं परमेश्वरस्य ॥ ७३ ॥
आशापाशक्लेशदुर्वासनादिच्छेदोद्युक्तैर्दिव्यगंधैरमंदैः ।
आशाशाटी कस्य पादारविंदे चेतःपेटीवासनां मे तनोतु ॥ ७४ ॥
कल्याणिनं सरसचित्रगतिं सुवेगं सर्वेंगितज्ञमनघं ध्रुवलक्षणाढ्यम् ।
चेतस्तुरंगमधिरुह्य चर स्मरारे नेतः समस्तजगतां वृषभाधिरूढ ॥ ७५ ॥
भक्तिर्महेशपदपुष्करमावसंती कादंबिनीव कुरुते परितोषवर्षम् ।
संपूरितो भवति यस्य मनस्तडागस्तज्जन्मसस्यमखिलं सफलं न चान्यत्
बुद्धिः स्थिरा मम महेश्वरपादपद्मसक्ता वधूर्विरहिणीव सदा स्फुरतो ।

---

* या ७० व्या पद्यांत छंदोभंग दिसतो.

सद्भावनाश्रवणकीर्तनदर्शनादिसंमोहितेव शिव मंत्रजपेन चित्ते ॥ ७७ ॥
सदुपचारविधिष्वनुबोधितां स * * विनां सुहृदा समुपस्थिताम् ।
मम समुद्धर बुद्धिमिमां प्रभो वरगुणेन नवोढवधूमिव ॥ ७८ ॥
वक्षस्ताडनमंतकस्य कठिनापस्मारसंमर्दनं ।
भूभृत्पर्यटनं नमत्सुरशिरःकोटीरसंघर्षणम् ॥
कर्मेदं मृदुलस्य तावकपदद्वंद्वस्य गौरीपते ।
मच्चेतोमणिपादुकाविहरणं शंभो सदांगीकुरु ॥ ७९ ॥
एष्यत्येष जनिं मनोस्य कठिनं तस्मिन् नटानीति म- ।
द्रक्षायै गिरिसीम्नि कोमलपदन्यासः पुराभ्यासितः ॥
नो चेद्दिव्यगृहांतराणि सुमनस्तल्पानि वेद्यादयः ।
प्रायः संति शिलातलेषु नटनं शंभो किमर्थं तव ॥ ८० ॥
नित्यं योगिमनः सरोजदलसंचारक्षमोस्य क्रमः ।
शंभो तेन कथं कठोरयमराड्वक्षःकपाटं क्षतम् ॥
अत्यंतं मृदुलं त्वदंघ्रियुगुलं हा मे मनश्चिंतये- ।
त्येतल्लोचनगोचरं कुरु विभो हस्तेन संवाहये ॥ ८१ ॥
कंचित् कालमुमामहेश भवतः पादारविंदार्चनैः ।
कंचिद्ध्यानसमाधिभिश्च नतिभिः कंचित् कथाकर्णनैः ॥
कंचित् कंचिदवेक्षणेन नुतिभिः कंचिद्दशामीदृशां ।
यः प्राप्नोति मुदा त्वदर्पितमना जीवन् स मुक्तः खलु ॥ ८२ ॥
बाणत्वं वृषभत्वमर्धवपुषा भार्यात्वमार्यापते ।
घोणित्वं सुखितां मृदंगवहतामित्यादिरूपं दधौ ॥
त्वत्पादे नयनार्पणं च कृतवांस्त्वद्देहभागो हरिः ।
पूज्यात् पूज्यतरः स एव हि न चेत् को वा तदन्योधिकः ॥ ८३ ॥
जननमृतियुतानां सेवया देवतानां । न भवति सुखलेशः संशयो नास्ति तत्र ॥
अजनिममृतरूपं सांबमीशं भजंते । य इह परमसौख्यं ते हि मर्त्या लभंते ८४
शिव तव परिचर्यासंनिधानाय चर्या ।
भव मम गुणधुर्यां बुद्धिकन्यां प्रदास्ये ॥
सकलभुवनबंधो सच्चिदानंदसिंधो ।
सदयहृदयगेहे सर्वदा संवस त्वम् ॥ ८५ ॥
जलधिमथनदक्षो नैव पातालभेदी ।
न च वनमृगयायां नैव लुब्धः प्रवीणः ॥
अशनवसनभूषावस्त्रमुख्यां सपर्यां ।

कथय कथमहं ते कल्पयामींदुमौले ॥ ८६ ॥
पूजाद्रव्यसमृद्धयो विरचिताः पूजां कथं कुर्महे ।
पक्षित्वं न च वा किटित्वमपि न प्राप्तं मया दुर्लभम् ॥
जाने मस्तकमंघ्रिपल्लवमुमाजाने न तेहं विभो ।
न ज्ञातं हि पितामहेन हरिणा तत् तेन तद्रूपिणा ॥ ८७ ॥
यदा कृतांभोनिधिबंधः × × × करस्थलाधःकृतपर्वताधिपः ।
भवामि ते लंघितपद्मजातस्तदा शिवार्चास्तव भावनाक्षमः ॥ ८८ ॥
अशनं गरलं फणी कलापो वसनं चर्म च वाहनं महोक्षः ॥
मम दास्यसि किं किमस्ति शंभो तव पादांबुजभक्तिमेव देहि ॥ ८९ ॥
नतिभिर्नुतिभिस्त्वमीश पूजाविधिभिर्ध्यानसमाधिभिर्न तुष्टः ।
धनुषा मुसलेन चाश्मभिर्वा वद ते प्रीतिमहं कथं करोमि ॥ ९० ॥
वचसा चरितं वदामि शंभोरहमुद्योगविधिष्वसक्तचेताः ।
मनसा कृतिमीश्वरस्य सेवे शिरसा चैव सदा शिवं नमामि ॥ ९१ ॥
दूरीकृतानि दुरितानि दुरक्षराणि दौर्भाग्यदुःखदुरहंकृतिदुर्वचांसि ।
सारं त्वदीयचरितं नितरां पिबंतं गौरीश मामिह समुद्धर सत्कटाक्षैः ॥ ९२ ॥
आद्या विद्या हृद्गता निर्गतासीद्विद्या विद्या विद्यते त्वत्प्रसादात् ।
सेवे नित्यं श्रीकरं त्वत्पदाब्जं तावन्मुक्तेर्भाजनं राजमौले ॥ ९३ ॥
सोमकलाधृतमौलौ कोमलघनकंधरे महामहसि ।
स्वामिनि गिरिजानाथे मामकहृदयं निरंतरं रमताम् ॥ ९४ ॥
सा रसना ते नयने तावेव करौ स एव कृतकृत्यः ।
या ये यौ यो भर्गं वदतीक्षाते सदार्चतः स्मरति ॥ ९५ ॥
अतिमृदुलौ तव चरणावतिकठिनं मम मनो भवानीश ।
इति विचिकित्सां संत्यज कथमभ्यासे गिरौ तथा प्रवेश ॥ ९६ ॥
धैर्यांकुशेन निभृतं रभसादाकृष्य भक्तिशृंखलया ।
पुरहर चरणालाने हृदयमदेभं बधान चिद्यंत्रैः ॥ ९७ ॥
प्रचरत्यभितः प्रगल्भवृत्त्या मदवानेष मनःकपिर्गरीयः ।
परिगृह्य नयेन भक्तिरज्ज्वा परमं स्थाणुपदं दृढं नयामि ॥ ९८ ॥
सर्वालंकारयुक्तां सरलपदयुतां साधुवृत्तां सुवर्णां ।
सद्भिः संस्तूयमानां सरसगुणयुतां लक्षितां लक्षणाढ्याम् ॥
उद्यद्भूषाविशेषामुपगतविनयां द्योतमानार्थरेखां ।
कल्याणीं देव गौरीप्रिय मम कविताकन्यकां त्वं गृहाण ॥ ९९ ॥
प्रतिपदमृदुवाचामाधुरीसाधुरीतिप्रकटितकविता मे शंभुना स्वीकृतासीत् ।

सफलमतिलमस्मज्जन्मकर्मापि चैतत् परमशिव दयायाः पात्रमेवाहमस्मि ॥ १०० ॥

इति श्रीमच्छंकराचार्यविरचिता शिवानंदलहरी संपूर्णा.

## शंकराचार्यकृतं कालभैरवाष्टकं.

पाणिभ्यां परितः प्रपीड्य सुदृढं निश्चित्य निश्चित्य च ।
ब्रह्मांडं सकलं पचेलिमरसालोच्चैः फलाभं मुहुः ॥
पीयं पापमपापतस्त्रिजगतीमुन्मत्तवत् ते रसं ।
नृत्यं तांडवडंबरेण विधिना पायान्महाभैरवः ॥ १ ॥

देवराजसेव्यमानपावनांघ्रिपंकजं । व्यालयज्ञसूत्रमिंदुशेखरं कृपानिधिं ॥
नारदादियोगिवृंदवंदितं दिगंबरं । काशिकापुराधिनाथकालभैरवं भजे ॥ २ ॥
भानुकोटिभास्वरं भवाब्धितारकं परं । नीलकंठमीप्सितार्थदायकं त्रिलोचनं ॥
कालकालमंबुजाक्षनाशकंतनक्षमं । काशिकापुराधिनाथकालभैरवं भजे ॥ ३ ॥
भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं । भक्तवत्सलं शिवं समस्तलोकनिग्रहं ॥
निक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं । काशिकापुराधिनाथकालभैरवं भजे ॥४॥
धर्मसेतुपालकमधर्ममार्गनाशकं । कर्मपाशमोचकं सुकर्मदायकं विभुं ॥
स्वर्णवर्णकेशपाशशोभितांगमंडलं । काशिकापुराधिनाथकालभैरवं भजे ॥ ५ ॥
रत्नपादुकाप्रभाभिरामपादयुग्मकं । नित्यमद्वितीयमिष्टदैवतं निरंजनं ॥
मृत्युदर्पनाशनं करालदंष्ट्रभीषणं । काशिकापुराधिनाथकालभैरवं भजे ॥ ६ ॥
अट्टहासभिन्नपद्मजांडकोशसंततिं । दृष्टिपातनष्टपापजालमुग्रशासनं ॥
अष्टसिद्धिदायकं कपालमालिकाधरं । काशिकापुराधिनाथकालभैरवं भजे ॥ ७॥
भूतसंघनायकं प्रभूतकीर्तिदायकं । काशिवासलोकपुण्यपापशोधकं प्रभुं ॥
नीतिमार्गकोविदं पुरातनं जगत्पतिं । काशिकापुराधिनाथकालभैरवं भजे ॥ ८॥
कालभैरवाष्टकं पठंति ये मनोहरं । ज्ञानमुक्तिसाधनं प्रपन्नपुण्यवर्धनं ॥
शोकमोहदैन्यलोभकोपतापनाशनं । ते प्रयांति कालभैरवांघ्रिसंनिधिं ध्रुवं ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं कालभैरवाष्टकस्तोत्रं संपूर्णम्

## विश्वनाथनगर्याष्टकं.

स्वर्गतः सुखकरी दिवौकसां शैलराजतनयातिवल्लभा ।
ढुंढिभैरवविदारितविघ्ना विश्वनाथनगरी गरीयसी ॥ १ ॥
यत्र देहपतनं न देहिनां मुक्तिरेव भवतीति निश्चितं ।
पूर्वपुण्यनिचयेन लभ्यते विश्वनाथनगरी गरीयसी ॥ २ ॥
यत्र तीर्थविमला मणिकर्णिका सा सदा शिवसुखप्रदायिनी ।

या शिवेन रचिता निजायुधे विश्वनायनगरी गरीयसी ॥ ३ ॥
यत्र मुक्तिरखिलैस्तु जंतुभिर्लभ्यते मरणमात्रतः शुभा ।
याखिलामरगणैः स्पृहणीया विश्वनायनगरी गरीयसी ॥ ४ ॥
सर्वतीर्थकृतमज्जनपुण्यैर्जन्मजन्मनि कृतैः खलु लभ्या ।
प्राप्यते भवभयार्तिनाशिनी विश्वनायनगरी गरीयसी ॥ ५ ॥
यत्र शक्रनगरी कनीयसी यत्र धातृनगरी तनीयसी ।
यत्र केशवपुरी लघीयसी विश्वनायनगरी गरीयसी ॥ ६ ॥
यत्र देवतटिनी प्रथीयसी यत्र विश्वजननी पटीयसी ।
यत्र भैरवकृतिर्बलीयसी विश्वनायनगरी गरीयसी ॥ ७ ॥
सर्वदामरगणैश्च वंदिता या गजेंद्रमुखपूजिता शुभा ।
कालभैरवकृतैकशासना विश्वनायनगरी गरीयसी ॥ ८ ॥
विश्वनायनगरीं स्तुवंति वै यः पठेत् सततमादृतः पुमान् ।
पुत्रदारधनलाभसंचयं मुक्तिमार्गमनुलभ्यते सुखं ॥ ९ ॥

इति श्रीमत्परहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं श्रीविश्वनायनगर्यष्टिकस्तोत्रं संपूर्णं.

---

## शंकराचार्यकृता वज्रसूचिः.

वज्रसूचिं प्रवक्ष्यामि शास्त्रमज्ञानभेदिनीं ।
दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषा ॥ १ ॥

ब्राह्मणक्षत्रियवैश्याश्चत्वारो वर्णाः । तेषां वर्णानां ब्राह्मणः प्रधानः । प्रधान इति वेदवचनस्मृतिभिरुक्तं । तत्र वादोऽस्ति एषां वर्णानां को वा ब्राह्मणो नाम । किं जीवः किं देहः किं जातिः किं कर्म किं वर्णः किं पांडित्यं किं धार्मिकः किं दातारः इत्यष्टौ विकल्पाः । प्रथमं जीवो ब्राह्मण इति चेत् तर्हि सर्वस्यापि जीवस्यैकरूपत्वात् तस्माज्जीवो ब्राह्मणो न भवत्येव । अन्यच्च देहो ब्राह्मण इति चेत्तर्हि चांडालपर्यंतानां मनुष्याणां देहस्य जरामरणधर्मदर्शनत्वात् तस्माद्देहो ब्राह्मणो न भवत्येव । पुनरन्यच्च जात्या ब्राह्मण इति चेत्तर्हि अन्यज्जात्युद्भवा महर्षयो बहवः संति । ऋष्यशृंगो मृग्यां, कौशिकः कुशस्तंबात्, गोतमः शशपृष्ठेः, वाल्मीको वल्मीकात्, पराशरश्चांडालीगर्भोत्पन्नः, महामुनिर्मातंगीपुत्रः, अगस्त्यः कलशोद्भवः, मांडव्यो माडूक्युदरोत्पन्नः, हरितनीगर्भोत्पन्नः अनुचऋषिः, शूद्रीगर्भोत्पत्तिर्भरद्वाजमुनिः, व्यासः कैवर्तकन्यायां, वसिष्ठ उर्वश्या, विश्वामित्रः क्षत्रियायां, नारदो दासीपुत्रः, इत्येतेषां जात्या विनापि सम्यक्ज्ञानविशेषात् ब्राह्मण्यं संश्रूयते तस्माज्जात्या ब्राह्मणो न भवत्येव । अन्यच्च वर्णो ब्राह्मण इति चेत्तर्हि ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णः वैश्यः पीतवर्णः शूद्रः

कृष्णवर्ण इत्यादिवर्णदर्शनात् तस्माद्वर्णो ब्राह्मणो न भवत्येव । अन्यच्च पांडित्यं ब्राह्मण इति चेत्तर्हि क्षत्रियवैश्यशूद्रादयः पदवाक्यप्रमाणानि विज्ञातारो बहवः संति तस्मात्पांडित्यं ब्राह्मणो न भवत्येव । अन्यच्च धार्मिको ब्राह्मण इति चेत्तर्हि वैश्यशूद्रादयः इष्टापूर्तकारिणो बहवः संति तस्माद्धार्मिको ब्राह्मणो न भवत्येव । अन्यच्च दातारो ब्राह्मणा इति चेत्तर्हि क्षत्रियवैश्यशूद्रादयोपि कन्यादानगोदानगजदानपृथ्वीदानहिरण्यदानाश्वमहिषीदानादिदातारो बहवः संति तस्माद्दातारो ब्राह्मणा न भवंत्येव । किंतु करतलामलकमिव परोक्षेण कृतार्थतया कामरागद्वेषादिरहितः शमदमादिसंतोषभाक् मात्सर्यतृष्णासंमोहान्निवर्तते । स एव ब्राह्मण उच्यते । तथाहि ।

जन्मना जायते शूद्रो माता शुद्री तथैव च ।
ब्रह्मज्ञानं विना देहः सर्वशूद्रो न संशयः ॥ १ ॥
जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते ।
वेदाभ्यासी भवेद्विप्रो ब्रह्मविद्ब्राह्मणः स्मृतः ॥ २ ॥
अथवा ब्रह्मविद्ब्राह्मणो नान्य इति निश्चयः ।
कर्मयोगी च विद्वांसो अंतरालं सुरालयं ।
सत्यं वैकुंठकैलासौ क्षीराब्धिपतिभिस्तथा ॥ ३ ॥
विश्वभूपं च चैतन्यमेतन्मायास्वरूपकं ॥
माया परं भवेद्ब्रह्म तत्परं ब्रह्म केवलम् ॥ ४ ॥
योगी देहाभिमान्येव भोगी कर्मणि तत्परः ।
ज्ञानी मोक्षाभिमान्येव तत्वज्ञे नाभिमानिता ॥ ५ ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किं ॥
आत्मना पूरितं विश्वं महाकल्पांबुना यथा ॥ ६ ॥

केचिद्वदंति गुरुवचनात्स्वर्गमोक्षौ । केचिद्वदंति सावयववस्तुज्ञानं मोक्षः । केचिन्निरवयवगुणातीतवस्तुज्ञानं मोक्षः इति वदंति । केचिद्वदंति साकारस्य विनाशोस्ति निराकारस्य शून्यतोभयपक्षविहीन वस्तुज्ञानं मोक्षः । केचिद्वदंति एकदेशीयवस्तुसिद्धांतकथितं मुक्तिविधानं मोक्षः । केचिद्वदंति मनोविकल्पविलयं मोक्षः । केचिद्वदंति व्यापकसकलागमशास्त्रार्थनिर्दिष्टाचारकरणं मोक्षः । केचिद्वदंति मनःपवनध्येयध्यानधारणाकरणं मोक्षः । केचिद्वदंति मद्यमांसस्वादुसुरतक्रीडालीलाविलासविभ्रमानंदमयो मोक्षः । केचिद्वदंति दृश्यादृश्योभयज्ञानाभावो मोक्षः । केचिद्वदंति अस्तिनास्तीत्युभयज्ञानाभावो मोक्षः । केचिद्वदंति सोहं सह्यसहजभावसमरसत्वं मोक्षः । केचिद्वदंति स्वात्मानंदबोधमयो मोक्षः । केचिद्वदंति काष्ठीभूतपरमतत्वलयं मोक्षः । केचिद्वदंति जटास्थापनभस्मोद्धूलनमौनांगीकरणादेव मोक्षः । केचिद्वदंति स्थावरजंगमजात्यहिंसाक्लेशोत्पाटनाभ्यासादेव मोक्षः । एतेषां संकल्पविकल्पानुसारेण दर्शनभेदा बहवः संति । तर्हि न भवति

मोक्षपदं सर्वेषामिति । किंतु महावाक्यविवरणेनोक्तं व्यष्टिसमष्टिरूपं सशब्दलयवा-च्यांशपरिक्षयात् शुद्धलक्ष्यांशमंगीकृत्य यज्जीवपरमेश्वरयोरैक्यं स एव मोक्षः । स कथं यथा महदाकाशे घटमठोपाधिर्विद्यते तयोः प्रध्वंसे महदाकाशं सहजं सिद्धं । तथा जीवपरमेश्वरयोर्मायाविद्योपाधिर्विद्यते तयोः प्रध्वंसे यज्जीवपरमेश्वरयो रैक्यं स एव मोक्षः । तथाहि ।

वेदांती बहुतर्ककर्कशमतिग्रस्तं परं मायया ।
भेदाक्कर्मकलापव्याहतधियो हंतेति वैशेषिकाः ॥
अन्ये भेदरता विवादकलहास्ते तत्वतो वंचिता- ।
स्तस्मात्सिद्धमतं स्वभावकमयं धीरः परं संश्रयेत् ॥ १ ॥
शैवाः पाशुपता महाव्रतधराः कालामुखं जगमाः ।
शाक्ताः कौलकुलाः कुलार्चनरताः कापालिकाः शांभवाः ॥
एवं वेदसमग्रमंत्रानिरतास्ते तत्वतो वंचिता- ।
स्तस्मात्सिद्धमतं स्वभावकमयं धीरः परं संश्रयेत् ॥ २ ॥
आचार्या बहुदीक्षिता धृतिधरा नग्नव्रतास्तापसा ।
नानातीर्थनिषेवका जपपरा मौनोस्थिता नित्यशः ॥
ते सर्वे सुखदुःखभारनिरतास्ते तत्वतो वंचिता- ।
स्तस्मात्सिद्धमतं स्वभावकमयं धीरः परं संश्रयेत् ॥ ३ ॥
चार्वाकाश्चतुराः स्वधर्मनिपुणा देहात्मवादे रताः ।
सर्वेषां वितर × × द्वैतं परं सात्विकं ॥
कर्तारं प्रभवंति चैव यवनाः पापे रता निर्दया- ॥
स्तेषामल्पमिहैकमेव हि फलं सत्यात्ममोक्षः परं ॥ ४ ॥

इदानीं महावाक्यार्थे मुख्येन बोधः कथ्यते । यमनियमादिसाधनसंपन्नानां अधिकारिणामनुग्रहाय । अहिंसासत्यमस्तेयं ब्रह्मचर्यापरिग्रहः । एते पंच यमाः । तत्र महावाक्ये तत्पदं त्वं पदं चेति पदद्वयमस्ति । तत्पदस्य त्वंपदस्य च वाच्यार्थं लक्ष्यं च कथयामः । तत्पदस्य वाच्यार्थः सकलजगदुत्पत्तिस्थितिलयकारः स्वयं सर्वेश्वरः । सर्वशक्तिमान् सर्वकामप्रदश्च परोक्षेण सह वर्तमानः सत्यं ज्ञानमानंदो । द्वितीयश्चैतन्यमयं तत्पदवाच्यार्थः इति । सर्वज्ञः सर्वेश्वरः सर्वशक्तिमान् भवति । सर्वकामप्रदायी च भवति परोक्षेण सह वर्तमानोपि । किंतु केवलं सत्यं ज्ञानमानंदो द्वितीयं स्वरूपं चैतन्यमिति तत्पदस्य लक्ष्यार्थः । अथ त्वंपदस्य लक्ष्यार्थः कथ्यते । श्रोत्रत्वक्चक्षुजिव्हाघ्राणसंज्ञकपंचेंद्रियरहितः प्राणापानव्यानोदानसमानाः पंच नागकूर्मकृकलदेवदत्तधनंजयाः पंच एतैर्दशवायुभी रहितः मनोबुध्यहंकारचित्तसंज्ञकेनांतःकरणचतुष्टयेन रहितः शब्दस्पर्शरूपरसगंधाः वचनादानविसर्गानंदसंज्ञाः । ये

च संकल्पविकल्पनिश्चयाभिमानसंबंधात्मकाश्चतुर्देशविषयास्तैः रहितः। अन्नमयप्राणमयमनोमयविज्ञानमयानंदमया एतैः पंचकोशैर्विरहितः अशनापिपासाशोकमोहजरामरणषड्र्मिरहितः सत्वरजस्तमोगुणत्रयरहितः पुत्रैषणावित्तैषणालोकैषणात्रयरहितः भूतभविष्यवर्तमानकालत्रयरहितः। अस्ति जायते वर्धते विपरिणमते अपक्षीयते विनश्यति एतैः षड्विकारैर्विरहितः एवमात्मा प्रत्यक्चैतन्यं। एतदेवाह। सत्यं ज्ञानमनंतं ब्रह्मेतिश्रुतिः सत्यं किमित्येकं ब्रह्म किमित्येकं तानि ब्रह्माणि संति किमेकं चेति एतत्प्रश्नस्याह। सत्यशब्देन ईश्वर उच्यते ज्ञानशब्देन ज्ञप्तिस्वरूपमुच्यते अनंतशब्देन अखंडमुच्यते ब्रह्मशब्देन परिपूर्णमुच्यते। एकमेवाद्वितीयं चैतन्यमेतत् ब्रह्म। तत्त्वमसीति ज्ञात्वा प्रबुद्धः सन् कृतकृत्यो भवति। ब्रह्मैव सन् ब्रह्माप्नोति विमुक्तश्च विमुच्यते। इत्यादिश्रुतिभिरेव निश्चयप्रबुद्धो यः स जीवन्मुक्तः। प्रारब्धकर्मजनितफलावृत्तिलोकाननुरुन्धन् भवतीति श्रुतेः। तथाहि।

ज्ञात्वाप्यसर्पं सर्पोत्थं यथाकंपं न मुंचति ॥
विध्वस्ताखिलकर्मापि लोककार्यमात्मवित् ॥

यथा रज्जुस्वरूपे सु ज्ञाते सर्पज्ञानं निवर्तते। तथापि भयजनितकंपादिकं वर्तते ॥

इति श्रीमच्छंकराचार्यविरचिता वज्रसूचिकोपनिषत् समाप्ता.

---

## अथ शिवाष्टकं.

चंपेय गौरार्धशरीरकायै। कर्पूरगौरार्धशरीरकाय ॥
धम्मिल्लकायै च जटाधराय। नमः शिवायै च नमः शिवाय ॥ १ ॥
कस्तूरिकाचंदनलेपनायै। स्मशानभस्मांगविलेपनाय ॥
सकुंडलायै फणिमंडलाय। नमः शिवायै च नमः शिवाय ॥ २ ॥
अंबोधिरम्यामणिकुंडलायै। तडित्प्रभापिंगजटाधराय।
जगज्जयित्रे जगदेकपित्रे। नमः शिवायै च नमः शिवाय ॥ ३ ॥
प्रपंचसृष्ट्यै सुखदाश्रयायै। त्रैलोक्यसंहारकृतोद्यमाय ॥
कृतस्मरायै निकृतस्मराय। नमः शिवायै च नमः शिवाय ॥ ४ ॥
विलोलनीलोत्पललोचनायै। विकाशपंकेरुहलोचनाय ॥
समेक्षणायै विषमेक्षणाय। नमः शिवायै च नमः शिवाय ॥ ५ ॥
चलत्क्वणत्किंकिणिनूपुरायै। मिलत्फणाभासुरनूपुराय।
हेमांगदायै भुजगांगदाय। नमः शिवायै च नमः शिवाय ॥ ६ ॥
सदाशिवानां परितोषणायै। सदाशिवानां प्रियभूषणाय।
शिवान्वितायै च शिवान्विताय। नमः शिवायै च नमः शिवाय ॥ ७ ॥

शिवाशिवाष्टकं पुण्यं यः पठेत् शिवसन्निधौ ॥
शिवलोकमवाप्नोति शिवेन सह मोदते ॥ ८ ॥
इति श्रीमच्छंकराचार्य विरचितं शिवाष्टकं संपूर्णम् ॥

---

## शंकराचार्यकृतं सदाचारस्तोत्रं.

सच्चिदानंदकंदाय जगदंकुरहेतवे ।
सदोदिताय पूर्णाय नमोनंताय विष्णवे ॥ १ ॥
सर्ववेदांतसिद्धांतैर्ग्रथितं निर्मलं शिवं ।
सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥ २ ॥
प्रातः स्मरामि देवस्य सवितुर्भर्गं, आत्मनः ।
वरेण्यं तद्धियो यो नश्चिदानंदः प्रचोदयात् ॥ ३ ॥
अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।
यदेकं केवलं ज्ञानं तदेवाहं परं बृहत् ॥ ४ ॥
ज्ञानाज्ञाने विलासोयं ज्ञानाज्ञानेन शाम्यति ।
ज्ञानाज्ञाने परित्यज्य ज्ञानमेवावशिष्यते ॥ ५ ॥

### इति प्रातःस्मरणं.

अत्यंतमलिनो देहो देही चात्यंतनिर्मलः ।
असंगोहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥ ६ ॥
मन्मनोमीनश्च नित्यं क्रीडत्यानंदवारिधौ ।
सुस्नातस्तेन पूतात्मा सम्यग्विज्ञानवारिणा ॥ ७ ॥
अथाघमर्षणं कुर्यात् प्राणापाननिरोधतः ।
मनः पूर्णे समाधाय मग्नकुंभो यथार्णवे ॥ ८ ॥
लयविक्षेपयोः संधौ मनस्तत्र निरामिषं ।
स्वसंधिः संधितो येन स मुक्तो नात्र संशयः ॥ ९ ॥
सर्वत्र प्राणिनां देहे जपो भवति सर्वदा ।
हंसः सोहमिति ज्ञात्वा सर्वबंधैः प्रमुच्यते ॥ १० ॥
तर्पणं स्वसुखेनैव स्वेंद्रियाणां प्रतर्पणं ।
मनसा मन आलोक्य स्वयमात्मा प्रकाशते ॥ ११ ॥
आत्मनि स्वप्रकाशाग्नौ चित्तमेकाहुतिं क्षिपेत् ।
अग्निहोत्री स विज्ञेयो इतरे नामधारकाः ॥ १२ ॥
देहो देवालयं प्रोक्तो देही देवो निरंजनः ।
अर्चितः सर्वभावेन स्वानुभूत्या विराजते ॥ १३ ॥

मौनं स्वाध्यायनं ध्यानं ध्येयं ब्रह्मानुचिंतनं ।
ज्ञानेनेति तयोः सम्यग्निषेधांतःप्रदर्शनं ॥ १४ ॥
अतीतानागतं किंचिन्न स्मरामि न चिंतये ।
रागद्वेषौ विना प्राप्तं भुंजाम्यत्र शुभाशुभं ॥ १५ ॥
हठन्यासो हि संन्यासो नैव काषायवाससा ।
न हि देहोहमात्मेति निश्चयो न्यासलक्षणं ॥ १६ ॥
अभयं सर्वभूतानां दानमाहुर्मनीषिणः ।
निजानंदे स्पृहा नान्यद्वैराग्यस्यावधिर्मतः १७ ॥
वेदांतश्रवणं कुर्यान्मननं चोपपत्तिभिः ।
योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ १८ ॥
शब्दशक्तेरचिंत्यत्वाच्छब्दादेवापरोक्षधीः ।
प्रसुप्तः पुरुषो यद्वच्छब्देनैवानुबुध्यते ॥ १९ ॥
आत्मानात्मविवेकेन ज्ञानं भवति निर्मलं ।
गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते ॥ २० ॥
न त्वं देहो नेंद्रियाणि न प्राणो न मनो न धीः ।
विकारित्वाद्विनाशित्वाद् दृश्यत्वाच्च घटो यथा ॥ २१ ॥
विशुद्धं केवलं ज्ञानं निर्विशेषं निरंजनं ।
यदेकं परमानंदं तत्त्वमस्यद्वयं परं ॥ २२ ॥
सर्वस्याद्यं तयोः सिद्धं मनसोपि तथैव च ।
मध्ये साक्षितया नित्यं तदेव त्वं भ्रमं जहि ॥ २३ ॥
स्थूलं वैराजयोरैक्यं सूक्ष्मं हैरण्यगर्भयोः ।
अज्ञानमाययोरैक्यं प्रत्यग्विज्ञानपूर्णयोः ॥ २४ ॥
चिन्मात्रैकरसे विष्णौ ब्रह्मात्मैक्यस्वरूपके ।
भ्रमेणैव जगज्जातं रज्ज्वां सर्पभ्रमो यथा ॥ २५ ॥
तार्किकाणां च जीवेशौ वाच्यावेतौ विदुर्बुधाः ।
लक्ष्यौ च सांख्ययोगाभ्यां वेदांतैरैक्यता तयोः ॥ २६ ॥
कार्यकारणवाच्यांशौ जीवेशौ यौ जहच्च तौ ।
अजहच्च तयोर्लक्ष्यौ चिदंशावेकरूपिणौ ॥ २७ ॥
कर्मशास्त्रे कुतो ज्ञानं तर्केणैवास्ति निश्चयः ।
सांख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः ॥ २८ ॥
अन्ये पाखंडिनः सर्वे ज्ञानवार्तासु दुर्बलाः ।
एकं वेदांतविज्ञानं स्वानुभूत्या विराजते ॥ २९ ॥

अहं ममेत्ययं बंधो ममाहं नेति मुक्तता ।
बंधो मोक्षो गुणैर्भाति गुणाः प्रकृतिसंभवाः ॥ ३० ॥
ज्ञानमेकं सदा भाति सर्वावस्थासु निर्मलं ।
मंदभाग्या न जानंति स्वरूपं केवलं बृहत् ॥ ३१ ॥
संकल्पसाक्षिणं ज्ञानं सर्वलोकैकजीवनं ।
तदस्मीति च यो वेद स मुक्तो नात्र संशयः ॥ ३२ ॥
प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा ।
यस्य भासावभासेत मानं ज्ञानाय तस्य किं ॥ ३३ ॥
अर्थाकारा भवेद् वृत्तिः फलेनार्थः प्रकाशते ।
अर्थज्ञानं विजानाति स एवार्थः परः स्मृतः ॥ ३४ ॥
वृत्तिव्याप्तत्वमेवास्ति फलं व्याप्तिः कथं भवेत् ।
स्वप्रकाशः स्वरूपत्वात्सिद्धत्वाच्च चिदात्मनः ॥ ३५ ॥
अर्थादर्थे यदा वृत्तिं गंतुं चलति चांतरे ।
निराधारा निर्विकारा या दशा सोन्मनिः स्मृता ॥ ३६ ॥
चित्तं चिच्च विजानीयात् तकाररहितं यदा ।
तकारं विषयाध्यासं जपारोपो यथा मणौ ॥ ३७ ॥
ज्ञेयं वस्तुपरित्यागाद् ज्ञानं तिष्ठति केवलं ।
त्रिपुटी क्षीणतामेति ब्रह्म निर्वाणमृच्छति ॥ ३८ ॥
मनोमात्रमिदं सर्वं तन्मनो ज्ञानमात्रकं ।
अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदं ॥ ३९ ॥
अज्ञानं चान्यथा ज्ञानं मायामेतां वदंति ते ।
ईश्वरं मायिनं विद्यान्मायातीतं निरंजनं ॥ ४० ॥
सदानंदे चिदाकाशे माया मेघस्तडिन्मनः ।
अहंता गर्जनं तत्र धारासारो हि वृत्तयः ॥ ४१ ॥
महामोहांधकारेस्मिन् देवो वर्षति लीलया ।
अस्या वृष्टेर्विरामाय प्रबोधैकसमीरणः ॥ ४२ ॥
ज्ञानं दृश्यादृश्ययोर्भानं विज्ञानं दृश्यशून्यता ।
एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ ४३ ॥
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तज्ज्ञानं ज्ञानमुच्यते ।
विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥ ४४ ॥
परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनं ।
आत्मनो ब्रह्मणः सम्यगुपाधिद्वयवर्जितं ॥ ४५ ॥

त्वमर्थविषयं ज्ञानं विज्ञानं तत्पदाश्रयं ।
पदयोरैक्यबोधस्तु ज्ञानं विज्ञानसंज्ञक ॥ ४६ ॥
आत्मानात्मविवेकस्य ज्ञानमाहुर्मनीषिणः ।
अज्ञानं चान्यथा लोके विज्ञानं तन्मयं जगत् ॥ ४७ ॥
अन्वयव्यतिरेकाभ्यां सर्वत्रैकं प्रपश्यति ।
यत्तत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकं ॥ ४८ ॥
अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकं ।
ज्ञानविज्ञाननिष्ठेयं तत् सद्ब्रह्मणि चार्पितं ॥ ४९ ॥
भोक्ता सत्वगुणः शुद्धो भोगानां साधनं रजः ।
भोग्यं तमोगुणं प्राहुरात्मा चैषां प्रकाशकः ॥ ५० ॥
ब्रह्माभ्यसनसंयुक्तो ब्रह्मचर्यरतः सदा ।
सर्वं ब्रह्मेति यो वेद ब्रह्मचारी स उच्यते ॥ ५१ ॥
गृहस्थो गुणमध्यस्थः शरीरं गृहमुच्यते ।
गुणाः कुर्वंति कर्माणि नाहं कर्तेति बुद्धिमान् ॥ ५२ ॥
किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः ।
हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ॥ ५३ ॥
सदाचारमिमं नित्यं ये च संदधते बुधाः ।
संसारसागराच्छीघ्रं मुच्यंते नात्र संशयः ॥ ५४ ॥
इति श्रीमच्छंकराचार्यविरचितं सदाचारस्तोत्रं संपूर्णं.

---

## अथ शुकाचार्यकृता प्रश्नोत्तर-माला.

अपारसंसारसमुद्रमध्ये निमज्जतो मे शरणं किमस्ति ॥
गुरो कृपालो कृपया वदैतद् विश्वेशपादांबुजदीर्घनौका ॥ १ ॥
बद्धो हि को यो विषयानुरागी को वा विमुक्तो विषये न रक्तः* ॥
को वास्ति घोरो नरकः स्वदेहस्तृष्णाक्षयः स्वर्गपदं किमस्ति ॥ २ ॥
संसारहृत्कस्तु निजात्मबोधः को मोक्षहेतुः प्रथितः स एव ॥
द्वारं किमेकं नरकस्य नारी का स्वर्गदा प्राणभृतामहिंसा ॥ ३ ॥
शेते सुखं कस्तु समाधिनिष्ठो जागर्ति को वा सदसद्विवेकी ॥
के शत्रवः संति निजेंद्रियाणि तान्येव मित्राणि जितानि कानि ॥ ४ ॥
को वा दरिद्रो हि विशालतृष्णः श्रीमांश्च को यस्य समस्ति तोषः ॥
जीवन्मृतः कस्तु निरुद्यमो यः का वा मृता स्यात् सुखदा निराशा ॥ ५ ।

---

* "का वा विमुक्तिर्विषये विरक्तिः" इति वा पाठः.

पाशो हि को यो ममताभिमानः संमोहयत्येव सुरेव का स्त्री ॥
को वा मदांधो मदनातुरो यो मृत्युश्च को वाप्ययशः स्वकीयं ॥ ६ ॥
को वा गुरुर्यो हि हितोपदेष्टा शिष्यस्तु को यो गुरुभक्त एव ॥
को दीर्घरोगो भव एव साधो किमौषधं तस्य विचार एव ॥ ७ ॥
किं भूषणाद्भूषणमस्ति शीलं तीर्थं परं किं स्वमनो विशुद्धं ॥
किमत्र हेयं कनकं च कांता श्राव्यं सदा किं गुरुदेववाक्यं ॥ ८ ॥
के हेतवो ब्रह्मगतेस्तु संति सत्संगतिर्ज्ञानविचारतोषाः ॥
के संति संतोखिलवीतरागा अपास्तमोहा शिवतत्वनिष्ठाः ॥ ९ ॥
को वा ज्वरः प्राणभृतां हि चिंता मूर्खोस्ति को यस्तु विवेकहीनः ॥
कार्या मया का शिवविष्णुभक्तिः किं जीवनं दोषविवर्जितं यत् ॥ १० ॥
विद्या हि का ब्रह्मगतिप्रदा या बोधोस्ति को यस्तु विमुक्तिहेतुः ॥
को लाभ आत्मावगमो हि यो वै जितं जगत् केन मनो हि येन ॥ ११ ॥
शूरान्महाशूरतमोस्ति को वा मनोजबाणैर्व्यथितो न योस्ति* ॥
प्राज्ञोतिधीरश्च समस्ति को वा प्राप्तो न मोहं ललनाकटाक्षैः ॥ १२ ॥
विषाद्विषं किं विषयाः समस्ता दुःखी सदा को विषयानुरागी ॥
धन्योस्ति को यस्तु परोपकारी कः पूजनीयो ननु तत्वनिष्ठः ॥ १३ ॥
सर्वास्ववस्थास्वपि किं न कार्यं किं वा विधेयं विदुषा प्रयत्नात् ॥
स्तेयं च पापं पठनं च धर्मं संसारमूलं हि किमस्ति चिन्ता ॥ १४ ॥
विद्वान्महाविद्वतमोस्ति को वा नार्या पिशाच्या न च वंचितो यः ॥
का शृंखला प्राणभृतां च नारी दिव्यं व्रतं किं च निरस्तदैन्यं ॥ १५ ॥
ज्ञातुं न शक्यं हि किमस्ति सर्वैर्योषिन्मनो यच्चरितं तदीयं ॥
का दुस्त्यजा सर्वजनैर्दुराशा विद्याविहीनः पशुरस्ति को वा ॥ १६ ॥
वासो न संगः सह कैर्विधेयो मूर्खैश्च †पाखंडधरैः शठैश्च ॥
मुमुक्षुणा किं त्वरितं विधेयं सत्संगतिर्निर्मम तेशभक्तिः ॥ १७ ॥
लघुत्वमूलं च किमर्थितैव गुरुत्वमूलं यदयाचनं किं ॥
जातोस्ति को यस्य पुनर्न जन्म को वा मृतो यस्य पुनर्न मृत्युः ॥ १८ ॥
मूकोस्ति को वा बधिरश्च को वा युक्तं न वक्तुं समये समर्थः ॥
तथ्यं सुपथ्यं न शृणोति वाक्यं विश्वासपात्रं न किमस्ति नारी ॥ १९ ॥
तत्वं किमेकं शिवमद्वितीयं किमुत्तमं सच्चरितं यदस्ति ॥
किं कर्म कृत्वा न च शोचनीयः कामारिकंसारिसमर्चनाख्यं ॥ २० ॥

---

* " यस्तु " इति वा पाठः
† " पापैश्च खलैश्च नीचैः ॥ इति वा पाठः

शत्रोर्महाशत्रुतमोस्ति को वा कामः स कोपानृतलोभतृष्णा ॥
न पूर्यते को विषयैः स एव किं दुःखमूलं ममताभिमानः ॥ २१ ॥
किं मंडनं साक्षरता मुखस्य सत्यं च किं भूतहितं तदेव ॥
त्यक्त्वा सुखं किं स्त्रियमेव सम्यग् देयं परं किं त्वभयं सदैव ॥ २२ ॥
कस्यास्ति नाशे मनसो हि मोक्षः किं सर्वथा नास्ति भयं विमुक्तेः ॥
शल्यं परं किं निजमूर्खतैव के के ह्युपास्या गुरवश्च वृद्धाः[1] ॥ २३ ॥
उपस्थिते सर्गहरे* कृतांते किमाशु कार्यं सुधिया प्रयत्नात् ॥
वाक्कायचित्तैः सुखदं यमघ्नं मुरारिपादाम्बुजमेव चित्यं ॥ २४ ॥
के दस्यवः संति कुवासनाख्याः कः शोभते यः सदसि प्रविद्यः ॥
शांतेव का या सुखदा सुविद्या किं शेवधिर्दोनवशात् सुविद्या ॥ २५ ॥
कुतोहिभीतिः सततं विधेया लोकापवादाद्भवकाननाच्च ॥
कोवास्ति बंधुः पितरौ च को वा विपत्सहायः परिपालकौ यौ ॥ २६ ॥
बुध्वा न बुध्यं परिशिष्यते किं शिवं प्रशांतं सुखबोधरूपं ॥
ज्ञाते तु कस्मिन् विदितं जगत् स्यात् सर्वात्मके ब्रह्मणि पूर्णरूपे ॥२७॥
किं दुर्लभं सद्गुरुरस्ति लोके सत्संगतिर्ब्रह्मविचारणा च ॥
त्यागो हि सर्वस्य शिवात्मबोधः किं दुर्जयं सर्वजनैर्मनोजः ॥ २८ ॥
पशोः पशुः को न करोति धर्ममधीतशास्त्रोपि न चात्मबोधः ॥
किं तद्विषं भाति सुधोपमं स्त्री के शत्रवो मित्रवदात्मजाद्याः ॥ २९ ॥
विद्युच्चलं किं धनयौवनायुर्दानं परं किं च सुपात्रदत्तं ॥
कंठं गतैरप्यसुभिर्न कार्यं किं किं विधेयं मलिनं शिवार्चा ॥ ३० ॥
किं कर्म यत् प्रीतिकरं मुरारेः क्वास्था न कार्या सततं भवाब्धौ ॥
अहर्निशं किं परिचिंतनीयं संसारमिथ्यात्वशिवात्मतत्वं ॥ ३१ ॥
कंठं गता वा श्रवणं गता वा प्रश्नोत्तराख्या मणिरत्नमाला ॥
तनोतु मोदं विदुषां प्रयत्नाद्रमेशगौरीशकथेव सद्यः ॥ ३२ ॥

समाप्ता ।

---

## अथ शंकराचार्यकृतं पांडुरंगाष्टकं.

महायोगपीठे तटे भीमरथ्या वरं पुंडरीकाय दातुं मुनींद्रैः ।
समागत्य तिष्ठंतमानंदकंदं परब्रह्मलिंगं भजे पांडुरंगं ॥ १ ॥
तडिद्वाससं नीलमेघावभासं रमामंदिरं सुंदरं चित्प्रकाशं ।

---

* " प्राणहृते " इति वा पाठः. १ " किमेधते " इति वा पाठः २ " पदौ सुमेध्यौ " इति वा पाठः

वरं विष्टकायां समन्यस्तपादं परब्रह्मलिंगं भजे पांडुरंगं ॥ १ ॥
प्रमाणं भवाब्धेरिदं मामकानां नितंबः कराभ्यां धृतो येन तस्मात् ।
विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्मलिंगं भजे पांडुरंगं ॥ ३ ॥
शरच्चंद्रबिंबाननं चारुहासं लसत्कुंडलाक्रांतगंडस्थलांगं ।
जपारागबिंबाधरं कंजनेत्रं परब्रह्मलिंगं भजे पांडुरंगं ॥ ४ ॥
स्फुरत्कौस्तुभालंकृतं कंठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासं ।
शिवं शांतमीड्यं वरं लोकपालं परब्रह्मलिंगं भजे पांडुरंगं ॥ ५ ॥
किरीटोज्ज्वलत्सर्वदिक्प्रांतभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः ।
त्रिभंगाकृतिं बर्हमाल्यावतंसं परब्रह्मलिंगं भजे पांडुरंगं ॥ ६ ॥
विभुं वेणुनादं चरंतं दुरंतं स्वयं लीलया गोपवेषं दधानं ।
गवां वृंदकानंददं चारुहासं परब्रह्मलिंगं भजे पांडुरंगं ॥ ७ ॥
अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयं ।
प्रसन्नं प्रपन्नार्तिहं देवदेवं परब्रह्मलिंगं भजे पांडुरंगं ॥ ८ ॥
स्तवं पांडुरंगस्य वै पुण्यदं ये पठंत्येकचित्तेन भक्त्या च नित्यं ।
भवांभोनिधिं ते हि तीर्त्वांतकाले हरेरालयं शाश्वतं प्राप्नुवंति ॥ ९ ॥
इति श्रीमच्छंकराचार्यविरचितं श्रीपांडुरंगाष्टकं संपूर्णम्

## शुकाष्टकं.

भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे ।
मायामोहौ क्षयमधिगतौ नष्टसंदेहवृत्तिः ॥
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ १ ॥
यद्वात्मानं सकलवपुषामेकमंतर्बहिस्थं ।
दृष्ट्वा पूर्णं खमिव सततं सर्वभांडस्थमेकं ॥
नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपं ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ २ ॥
हेम्नः कार्यं हुतवहगतं हेममेवेति तद्वत् ।
क्षीरे क्षीरं समरसगतं तोयमेवांबुमध्ये ॥
एवं सर्वं समरसतया त्वंपदं तत्पदार्थं ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ३ ॥
यस्मिन् विश्वं सकलभुवनं सामरस्यैकभूतं ।
ऊर्वीमापोनलमनिलखं जीवमेतत् क्रमेण ।

यत्साराब्धौ समरसतया सैंधवैकैकभूतं ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ४ ॥
दृष्ट्वा वेद्यं परममृतं स्वात्मबोधस्वरूपं ।
बुध्वात्मानं सकलवपुषामेकमंतर्बहिस्थं ॥
भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं ॥
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ५ ॥
यद्वत्सद्यो समरसगते सागरत्वं हि गत्वा ।
तद्वज्जीवो लयपरिगतं सामरस्यैकभूतं ॥
भेदातीतं परिलयगतं सच्चिदानंदरूपं ॥
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ६ ॥
कार्याकार्ये किमपि सततं नैव कर्तृत्वमस्ति ।
जीवन्मुक्तो स्थितिरहगतौ दग्धवस्त्रावभासः ॥
एवं देहे प्रविलयगते तिष्ठमाने विमुक्तो ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ७ ॥
कुत्रस्थोहं किमपि च भवान् कोय मंत्रः प्रपंचे ।
यस्मिन् वेद्यं गगनसदृशं पूर्णतत्वप्रकाशं ॥
आनंदाख्ये समरसघने ब्रह्ममंतर्विहीने ।
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ८ ॥
सत्यं सत्यं परममृतं शांतिकल्याणरूपं ।
मायारण्यं दहनमनलं शांतिकल्याणदीपं ॥
तेजोरूपं निगमसदनं व्यासपुत्राष्टकं यः ।
प्रातःकाले पठति मनसा याति निर्वाणमार्गे ॥ ९ ॥
इति श्रीशुकाष्टकं संपूर्णम्.

---

## अथ शिवपंचकस्तोत्रम्.

मनोबुध्यहंकारचित्तानि नाहं न कर्णौ न जिव्हा न त्वग्घ्राणनेत्रः ।
न च व्योम भूर्वारि तेजो न वायुश्चिदानंदरूपः शिवोहं शिवोहं ॥ १ ॥
न च प्राणसंज्ञो न चापानवायुर्न वाणिर्न वा सत्वचोहं न देहो ।
वाक्पाणिपादो न शिस्नं न पायुश्चिदानंदरूपः शिवोहं शिवोहं ॥ २ ॥
न पुण्यं न पापं न सौख्यं न दुःखं न मे मंत्रतीर्थं न मे दानयज्ञाः ।
न मे धारणाध्यानयोगादयोपि चिदानंदरूपः शिवोहं शिवोहं ॥ ३ ॥
न मृत्युर्न शंका न मे जातिभेदो पिता नैव मैनैन माता न जन्म ।

न च भ्रातृपितृगुरुर्नैव शिष्यश्चिदानंदरूपः शिवोहं शिवोहं ॥ ४ ॥
अहं निर्विकल्पं निराकाररूपं विभूतेपि सर्वत्र सर्वेंद्रियाणि ।
न वासक्ततत्रैव मुक्तिर्न याभिश्चिदानंदरूपः शिवाहं शिवोहं ॥ ५ ॥
इति श्रीमच्छंकराचार्यविरचितं शिवपंचकस्तोत्रं संपूर्णं.

## गंगास्तोत्रं.

### पज्झटिकावृत्त.

देवि सुरेश्वरि भगवति गंगे । त्रिभुवनतारिणि तरलतरंगे ॥
शंकरमौलिनिवासिनि विमले । मम्मतिरास्तां तव पदकमले ॥ १ ॥
भागीरथिसुखदायिनि मातः । तव जलमहिमा निगमख्यातः ॥
नाहं जाने तव महिमानं । पाहि कृपयाहि मामज्ञानं ॥ २ ॥
हरिपदपद्मतरंगिणि गंगे । हिमविधुमुक्ताधवलतरंगे ॥
दूरीकुतममदुष्कृतभारं । कुरु कृपया भवसागरपारं ॥ ३ ॥
तव-जलममलं येन च पीतं । परमपदं खलु तेन गृहीतं ॥
मातर्गंगे त्वयी भक्तः । किल तं द्रष्टुं न यमः शक्तः ॥ ४ ॥
पतितोद्धारिणि जान्हवि गंगे । खंडितगिरिवरमंडितभंगे ॥
भीष्मजननि जनपावनि मातः । कस्त्वां दृष्ट्वा न दिवं यातः ॥ ५ ॥
कल्पलतामिव फलदां लोके । यस्त्वां भजति न पततित्यसौ के ॥
तव कृपया चेत् स्रोतःस्नातः । पुनरपि जठरे सोपि न यातः ॥ ६ ॥
पारावारविहारिणि गंगे । विबुधवधूकुचकुंकुमरंगे ॥
नरकनिवारणनिर्मलनीरे । हरिरिह तिष्ठति खलु त्वत्तीरे ॥ ७ ॥
भो भुवनेश्वरि पुण्ये धन्ये । देवद्रवमयि गिरिवरकन्ये ॥
तव पयसा न हि विष्णोर्भेदः । किमहो मूढो हृदये खेदः ॥ ८ ॥
तव निकटे वै यस्य च वासः । खलु वैकुंठे तस्य निवासः ॥
यरमिह नीरे कमठो मीनः । किंवा तीरे सरठो हीनः ॥ ९ ॥
गव्यूत्यां वा श्वपचो दीनं । न तथा दूरे नृपतिकुलीनं ॥
मातर्गंगे किल्बिषभंगे । विघ्नविनाशिनि बहुगुणतुंगे ॥ १० ॥
परिलसदंगे पुण्यतरंगे । जय जय जान्हवि करुणापांगे ॥
इंद्रमुकुटनीराजितचरणे । सुखदे शुभदे सेवकशरणे ॥ ११ ॥
रोगं शोकं तापं पापं । हर मे भगवति कलुषकलापं ॥
त्रिभुवनसारे वसुधाहारे । त्वमसि गतिर्मम खलु संसारे ॥ १२ ॥
गंगास्तवमिदमतुलं नित्यं । पठति यो विषयान् स जयति सत्यं ॥

येषां हृदये गंगाभक्तिस्तेषां भवति सदा सुखमुक्तिः ॥ १३ ॥
हेलकनंदे परमानंदे । कुरु मयि करुणां पादं वंदे ॥
शंकरसेवकशंकररचितं । पठति जनः खलु यतिः स सत्यं ॥ १४ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गंगास्तोत्रं संपूर्णं.

## शंकराचार्यकृता हरिनाममाला.

गोविंदं गोकुलानंदं गोपालं गोपिवल्लभं ।
गोवर्द्धनधरं धीरं तं वंदे गोमतीप्रियं ॥ १ ॥
पीतांबरं पद्मनाभं पद्माक्षं पुरुषोत्तमं ।
पवित्रं परमानंदं तं वंदे परमेश्वरं ॥ २ ॥
नारायणं नराकारं नरवीरं नरोत्तमं ।
नरसिंहं नागनाथं तं वंदे नरकांतकं ॥ ३ ॥
राघवं रामचंद्रं च रावणारिं रमापतिं ।
राजीवलोचनं रामं तं वंदे रघुनंदनं ॥ ४ ॥
वामनं विश्वरूपं च वासुदेवं च विठ्ठलं ।
विष्णुं विश्वेश्वरं व्यासं तं वंदे वेदवल्लभम् ॥ ५ ॥
दामोदरं दिव्यसिंहं दयालुं दीननायकं ।
दैत्यारिं देवदेवेशं तं वंदे देवकीसुतं ॥ ६ ॥
मुरारिं माधवं मल्लं मुकुंदं मुष्टिमर्द्दनं ।
मुंजकेशं महाबाहुं तं वंदे मधुसूदनं ॥ ७ ॥
केशवं कमलाकांतं कामेशं कौस्तुभायकम् ।
कौमोदकीधरं कृष्णं तं वंदे कौरवांतकं ॥ ८ ॥
भूधरं भुवनानंदं भूतिदं भूतिनायकं ।
भावैकं भुजगेशं तं वंदे भवनायकं ॥ ९ ॥
जनार्दनं जगन्नाथं जगज्जाड्यविनाशनं ।
जमदग्निं धृतज्योतिं तं वंदे जलशायिनम् ॥ १० ॥
चतुर्भुजं चिदानंदं चाणूरमल्लमर्दनं ।
चराचरगतिं देवं तं वंदे चक्रपाणिनं ॥ ११ ॥
श्रीपतिं श्रियैकनाथं श्रीधरं श्रीवरप्रदं ।
श्रीवत्सलं धरं सौम्यं तं वंदे श्रीश्वरेश्वरं ॥ १२ ॥
योगेश्वरं जगन्नाथं यशोदानंददायकं ।
यमुनाजलकल्लोलं तं वंदे यदुनायकं ॥ १३ ॥

न च भ्रातृपितृगुरुर्नैव शिष्यश्चिदानंदरूपः शिवोहं शिवोहं ॥ ४ ॥
अहं निर्विकल्पं निराकाररूपं विभूतेपि सर्वत्र सर्वेंद्रियाणि ।
न चासम्मतंनैव मुक्तिर्न पाशश्चिदानंदरूपः शिवोहं शिवोहं ॥ ५ ॥
इति श्रीमच्छंकराचार्यविरचितं शिवपंचकस्तोत्रं संपूर्णं.

## गंगास्तोत्रं.

### पज्झटिकावृत्तं.

देवि सुरेश्वरि भगवति गंगे । त्रिभुवनतारिणि तरलतरंगे ॥
शंकरमौलिनिवासिनि विमले । मम मतिरास्तां तव पदकमले ॥ १ ॥
भागीरथिसुखदायिनि मातः । तव जलमहिमा निगमख्यातः ॥
नाहं जाने तव महिमानं । पाहि कृपयाहि मामज्ञानं ॥ २ ॥
हरिपदपद्मतरंगिणि गंगे । हिमविधुमुक्ताधवलतरंगे ॥
दूरीकुरुममदुष्कृतभारं । कुरु कृपया भवसागरपारं ॥ ३ ॥
तव जलममलं येन च पीतं । परमपदं खलु तेन गृहीतं ॥
मातर्गंगे त्वयि यो भक्तः । किल तं द्रष्टुं न यमः शक्तः ॥ ४ ॥
पतितोद्धारिणि जान्हवि गंगे । खंडितगिरिवरमंडितभंगे ॥
भीष्मजननि जनपावनि मातः । कस्त्वां दृष्ट्वा न दिवं यातः ॥ ५ ॥
कल्पलतामिव फलदां लोके । यस्त्वां भजति न पततित्यसौ के ॥
तव कृपया चेत् स्रोतःस्नातः । पुनरपि जठरे सोपि न यातः ॥ ६ ॥
पारावारविहारिणि गंगे । विबुधवधूकुचकुंकुमपिंगे ॥
नरकनिवारणनिर्मलनीरे । हरिरिह तिष्ठति खलु त्वत्तीरे ॥ ७ ॥
भो भुवनेश्वरि पुण्ये धन्ये । देवद्रवमयि गिरिवरकन्ये ॥
तव पयसा न हि विष्णोर्भेदः । किमहो मूढो हृदये खेदः ॥ ८ ॥
तव निकटे वै यस्य च वासः । खलु वैकुंठे तस्य निवासः ॥
यस्मिह नीरे कमठो मीनः । किंवा तीरे सरठो हीनः ॥ ९ ॥
गव्यूत्यां वा श्वपचो दीनं । न तया दूरे नृपतिकुलीनं ॥
मातर्गंगे किल्बिषभंगे । विघ्नविनाशिनि बहुगुणतुंगे ॥ १० ॥
परिलसदंगे पुण्यतरंगे । जय जय जान्हवि करुणापांगे ॥
इंद्रमुकुटनीराजितचरणे । सुखदे शुभदे सेवकशरणे ॥ ११ ॥
रोगं शोकं तापं पापं । हर मे भगवति कलुषकलापं ॥
त्रिभुवनसारे वसुधाहारे । त्वमसि गतिर्मम खलु संसारे ॥ १२ ॥
गंगास्तवमिदमतुलं नित्यं । पठति यो विषयान् स जयति सत्यं ॥

येषां हृदये गंगाभक्तिस्तेषां भवति सदा सुखमुक्तिः ॥ १३ ॥
हेलकनंदे परमानंदे । कुरु मयि करुणां पादं वंदे ॥
शंकरसेवकशंकररचितं । पठति जनः खलु यतिः स सत्यं ॥ १४ ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गंगास्तोत्रं संपूर्णं.

## शंकराचार्यकृता हरिनाममाला.

गोविंदं गोकुलानंदं गोपालं गोपिवल्लभं ।
गोवर्द्धनधरं धीरं तं वंदे गोमतीप्रियं ॥ १ ॥
पीतांबरं पद्मनाभं पद्माक्षं पुरुषोत्तमं ।
पवित्रं परमानंदं तं वंदे परमेश्वरं ॥ २ ॥
नारायणं नराकारं नरवीरं नरोत्तमं ।
नरसिंहं नागनाथं तं वंदे नरकांतकं ॥ ३ ॥
राघवं रामचंद्रं च रावणारिं रमापतिं ।
राजीवलोचनं रामं तं वंदे रघुनंदनं ॥ ४ ॥
वामनं विश्वरूपं च वासुदेवं च विठ्ठलं ।
विष्णुं विश्वेश्वरं व्यासं तं वंदे वेदवल्लभम् ॥ ५ ॥
दामोदरं दिव्यसिंहं दयालुं दीननायकं ।
दैत्यारिं देवदेवेशं तं वंदे देवकीसुतं ॥ ६ ॥
मुरारिं माधवं मल्लं मुकुंदं मुष्टिमर्दनं ।
मुंजकेशं महाबाहुं तं वंदे मधुसूदनं ॥ ७ ॥
केशवं कमलाकांतं कामेशं कौस्तुभायकम् ।
कौमोदकीधरं कृष्णं तं वंदे कौरवांतकं ॥ ८ ॥
भूधरं भुवनानंदं भूतिदं भूतिनायकं ।
भावनैकं भुजंगेशं तं वंदे भवनायकं ॥ ९ ॥
जनार्दनं जगन्नाथं जगज्जाड्यविनाशनं ।
जमदग्निं धृतज्योतिं तं वंदे जलशायिनम् ॥ १० ॥
चतुर्भुजं चिदानंदं चाणूरमल्लमर्दनं ।
चराचरगतिं देवं तं वंदे चक्रपाणिनं ॥ ११ ॥
श्रीपतिं श्रियैकनाथं श्रीधरं श्रीवरप्रदं ।
श्रीवत्सलं धरं सौम्य तं वंदे श्रीश्वरेश्वरं ॥ १२ ॥
योगेश्वरं जगन्नाथं यशोदानंददायकं ।
यमुनाजलकल्लोलं तं वंदे यदुनायकं ॥ १३ ॥

शालिग्रामशिलाशुद्धं शंखचक्रोपशोभितं ।
सुरासुरसदासेव्यं तं वंदे साधुवल्लभम् ॥ १४ ॥
त्रिविक्रमं त्रयोमूर्तिं त्रिविधं पापनाशनं ।
त्रिस्थलं तीर्थराजं च तं वंदे तुलसीप्रियं ॥ १५ ॥
लीलया धृतभूभारं सर्वलोकैकवंदितं ।
लोकेश्वरं च लक्ष्मीशं तं वंदे लक्ष्मणप्रियं ॥ १६ ॥
हरिं च हरिणाक्षं च हरिनाथं हरिप्रियं ।
हलायुधं हयग्रीवं तं वंदे हरिनायकं ॥ १७ ॥
आनंदं आदिरूपं च अच्युतं परमं प्रभुं ।
अनंतं सृष्टिकर्तारं तं वंदे अघनाशनं ॥ १८ ॥
हरिनामकृतामाला पवित्रा पापनाशिनी ।
बली राजानया मुक्तो कंठे धार्य्या सदा बुधैः ॥ १९ ॥

इति श्रीशंकराचार्यविरचिता हरिनाममाला समाप्ता.

## शंकराचार्यकृता प्रश्नोत्तरमालापूरणिका.*

कोंधो योकार्यरतः को बधिरो यः शृणोति न हितानि ।
को मूको यः काले प्रियाणि वक्तुं न जानाति ॥ २८ ॥
किं दानमनाकांक्षं किं मित्रं यन्निवारयति पापात् ।
कोऽलंकारः शीलं किं वाचां मंडनं सत्यम् ॥ २९ ॥
कः परिहार्यो देशः पिशुनयुतो लुब्धभूपस्य ।
कः पूज्यो विद्वद्भिः स्वभावतः सर्वदा विनीतो यः ॥ ३० ॥
कः कुलकमलदिनेशः सति गुणविभवेऽपि यो नम्रः ।
कस्य वशं जगदेतत् प्रियहितवचनस्य धर्मशीलस्य ॥ ३१ ॥
परधनहृदयहरा का सत्कविता वा सुवारवनिता वा ।
कं न स्पृशति विपत्तिर्वृद्धवचोनुवर्तिनं च दातारम् ॥ ३२ ॥
कस्मै स्पृहयति कमला चित्ताय नीतिवृत्ताय ।
त्यजति च कं वा सहसा द्विजगुरुनिंदकं च सालस्यं ॥ ३३ ॥
केनाशोच्यः पुरुषः प्रणतकलत्रेण धीरविभवेन ।
इह भुवने कः शोच्यः सत्यपि विभवे न यो दाता ॥ ३४ ॥
किं लघुताया मूलं प्राकृतपुरुषेषु या याच्ञा ।

* एका प्रतींत आढळलेल्या अधिक आर्या एथें दिल्या आहेत. पहिल्या २७ आर्या याच भागात पृष्ठ ७५–७७ पर्यंत छापल्या आहेत.

रामादपि कः शूरः स्मरशरनिहतश्चलति नो यः ॥ ३५ ॥
किमहर्निशमनुचिंत्यं केशवचरणौ जगच्चलता ।
के खलु नयनविहीनाः परलोकं ये न पश्यंति ॥ ३६ ॥
वद वद बधिरतमाः के हितवचनं ये न शृण्वंति ।
कः प्रथितस्त्विह खंजो व्रजति नरो यो न वार्धके तीर्थम् ॥ ३७ ॥
को मूकः खलु लोके हितवचनं यो न भाषते सदसि ।
का च सभा परिहार्या हीना या वृद्धसचिवेन ॥ ३८ ॥
किं गहनं भुजगादपि स्त्रीचरितं राजसेवा च ।
ब्रूहि स्पृशति न कान्यं स्वाभ्यस्ता निर्मला विद्या ॥ ३९ ॥
प्राणादपि को रक्ष्यः कुलधर्मः साधुसंगश्च ।
किं सेव्यं वैराग्यं संपाद्यं किं सुविज्ञानम् ॥ ४० ॥
इति कंठगता विमलप्रश्नोत्तररत्नमालिका येषां ।
ते मुक्ताभरणा इव विभांति विद्वत्समाजेषु ॥ ४१ ॥
रचिता शंकरगुरुणासुविमलतरबोधरत्नमालेयम् ।
प्रश्नोत्तरमालेयं कंठगता कं न भूषयति ॥ ४२ ॥

---

## लघुवाक्यवृत्तिः

स्थूलो मांसमयो देहः सूक्ष्मः स्याद्वासनामयः ।
ज्ञानकर्मेन्द्रियैः सार्धं धीप्राणौ तच्छरीरगौ ॥ १ ॥
अज्ञानकारणं साक्षी बोधस्तेषां विभासकः ।
बोधाभासो बुद्धिगतः कर्ता स्यात्पुण्यपापयोः ॥ २ ॥
स एव संसरेत्कर्मवशाल्लोकद्वयं सदा ।
बोधाभासाच्छुद्धबोधं विविच्यादतियत्नतः ॥ ३ ॥
जागरस्वप्नयोरेव बोधाभासविडम्बना ।
सुप्तौ तु तल्लये बोधाच्छुद्धाज्जाड्यं प्रकाशते ॥ ४ ॥
जागरेऽपि धियस्तूष्णींभावः शुद्धे न भासते ।
धीव्यापारश्च तद्भास्यश्चिदाभासेन संयुतः ॥ ५ ॥
वन्हितप्तजलं तापयुक्तं देहस्य तापकम् ।
चिद्भास्याधीस्तदाभासयुक्तान्याम्भासयेत्तथा ॥ ६ ॥
रूपादिगुणदोषादिविकल्पा बुद्धिगा क्रिया ।
तां क्रियां विषयैः सार्धं भासयन्ती चितिर्मता ॥ ७ ॥
रूपादिगुणदोषाभ्यां विविक्ता केवला चितिः ।

सैवानुवर्तते रूपरसादीनां विकल्पने ॥ ८ ॥
क्षणे क्षणेऽन्यथाभूता धीविकल्पाश्रितिर्न तु ।
मुक्तासु सूत्रवद् बुद्धिविकल्पेषु चितिस्तथा ॥ ९ ॥
मुक्ताभिरावृतं सूत्रं मुक्तयोर्मध्य ईक्षते ।
तथा वृत्तिविकल्पैश्चिः स्पष्टा मध्ये विकल्पयोः ॥ १० ॥
नष्टे पूर्वविकल्पे तु यावदन्यस्य नोदयः ।
निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते ॥ ११ ॥
एकद्वित्रिक्षणेष्वेवं विकल्पस्य निरोधनम् ।
क्रमेणाभ्यस्यतां यत्नाद्ब्रह्मानुभवकाङ्क्षिभिः ॥ १२ ॥
सविकल्पकजीवोऽयं ब्रह्म स्यान्निर्विकल्पकम् ।
अहं ब्रह्मेति वाक्येन सोऽहमर्थोऽभिधीयते ॥ १३ ॥
सविकल्पकचिद्योऽहं ब्रह्म वै निर्विकल्पकम् ।
स्वतः सिद्धा विकल्पास्ते निरोद्धव्याः प्रयत्नतः ॥ १४ ॥
ऐक्यं सर्वनिरोधश्च समाधिर्योगिनां प्रिया ।
तदशक्तौ क्षणं रुध्वा श्रद्धालुब्रह्मतां पुनः ॥ १५ ॥
श्रद्धालुब्रह्मतां स्वस्य चिन्तयेद् बुद्धिवृत्तिभिः ।
वाक्यवृत्त्या यथा शक्त्या ज्ञात्वा त्वभ्यस्यतां सदा ॥ १६ ॥
तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ १७ ॥
देहात्मधीवद्ब्रह्मात्मधीदार्ढ्ये कृतकल्पना ।
यदा तदायं म्रियतां मुक्तो नास्त्यत्र संशयः ॥ १८ ॥
इत्याचार्यविरचिता लघुवाक्यवृत्तिः समाप्ता:

---

## धन्याष्टकम् .

तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् ।
ते धन्या भुवि परमार्थनिश्चिता ये ह्यशेषा भ्रमनिलये परिभ्रमन्ति ॥ १ ॥
आदौ विजित्य विषमान्मदमोहरागद्वेषादिशत्रुगणमाहृतयोगराज्याः ॥
ज्ञात्वामृतं समनुभूय परात्मविद्याकान्तासुखं खलु गृहे विचरन्ति धन्याः ॥२॥
त्यक्त्वा गृहे रतिमधोगतिहेतुभूतामात्मेच्छयोपनिषदर्थरसं पिबन्तः ॥
वीतस्पृहा विषयभोगपदे विरक्ता । धन्याश्चरन्ति विजनेषु विमुक्तसङ्गाः ॥ ३॥
त्यक्त्वा ममाहमिति बन्धकरे पदे द्वे । मानावमानसदृशाः समदर्शिनश्च ॥
कर्तारमन्यमवगम्य तदर्पितानि । कुर्वन्ति कर्मपरिपाकफलानि धन्याः ॥ ४ ॥

त्यक्त्वैषणात्रयमवेक्षितमोक्षमार्गा । भैक्ष्यामृतेन परिकल्पितदेहयात्राः ॥
ज्योतिः परात्परतरं परमात्मसंज्ञम् । धन्या द्विजा रहसि हृद्यवलोकयन्ति ॥५॥
नासन्न सन्न सदसन्न महन्न चाणु । न स्त्री पुमान् न च नपुंसकमेकबीजम् ॥
यैर्ब्रह्म तत्सममुपासितमेकचित्ता । धन्या विरेजुरितरे भवपाशबध्दाः ॥ ६ ॥
अज्ञानपङ्कपरिमग्नमपेतसारम् । दुःखालयं मरणजन्मजरावसक्तम् ॥
संसारबन्धनमनित्यमवेक्ष्य धन्या । ज्ञानासिना तदवशीर्य विनिश्चयन्ति ॥७॥
शान्तैरनन्यमतिभिर्मधुरस्वभावैरेकत्वनिश्चयमनोभिरपेतमोहैः ॥
साकं वनेषु विजितात्मपदस्वरूपम् । शास्त्रेषु सम्यगनिशं विमृशन्ति धन्याः ८
अहिमिव जनयोगं सर्वदा वर्जयेद्यः । कुणपमिव सुनारीं त्यक्तुकामो विरागी ॥
विषमिव विषयान् यो मन्यमानो दुरन्तान् । जयति परमहंसो मुक्तिभावं समेति ९

सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा ।
गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः ॥
वाचः प्राकृतसंस्कृताः श्रुतिशिरो वाराणसी मेदिनी ।
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि ॥ १० ॥

इत्याचार्यविरचितं धन्याष्टकं स्तोत्रं सम्पूर्णम्.

---

## अच्युतकविविरचितमाकाशशतकं.

यस्य श्रीपादपद्माधःपरागस्पर्शमात्रतः ।
चित्तमाकाशतां याति तस्मै श्रीगुरवे नमः ॥ १ ॥
शांतस्य स्वांतमेकांतेऽनंते विश्रांतिमाप्नुयात् ॥
यथा चंद्रमसः शोचिः शरत्काले विहायसि ॥ २ ॥
तमसा रजसा वापी यथाऽऽकाशं न संकुलम् ।
वस्तुतस्तद्वदेवाहमद्वैतं ब्रह्म निर्मलम् ॥ ३ ॥
आब्रह्माण्डेऽपि सर्वत्र व्याप्तमप्यचलं नभः ।
यथा तथैव चिन्मात्रमहं ब्रह्मास्मि निष्कलम् ॥ ४ ॥
सर्वत्रदृश्यमानोपि नैवाकाशोऽस्ति कालिमा ।
तथा दृश्यावभासोपि मय्यद्वैतचिदात्मनि ॥ ५ ॥
अनंतलोकव्यापारैर्व्योम विक्रियते न हि ।
तद्वदद्वैतचिद्वस्तु नाहं विकृतिमाप्नुयात् ॥ ६ ॥
अनेकगन्धर्वपुरैर्वर्धते नाम्बरं यथा ।
तथाहमपि दृश्यौघैः कथं वृद्धिमवाप्नुयाम् ॥ ७ ॥
नीहारेण जडं व्योम न दृष्टमपि विद्यते ।

तथैवाहं चिदात्मापि नाहंकारेण जाड्यभाक् ॥ ८ ॥
अदृष्टमपि मित्पादौ विपदस्ति विवेकिनाम् ।
तथैवाहमनंतात्मा घटादावस्मि चिन्मयं ॥ ९ ॥
स्फुटं भाम्येव सर्वत्र चित्त्वेनात्मा स्वयंप्रभः ।
भाति यद्वन्महाकाशः सर्वेष्वपि घटादिषु ॥ १० ॥
एकार्णवेऽपि पृषतैः पुष्करं नैव लिप्यते ।
यथा तथैव चिद्वस्तु लिप्तमस्मि न कर्मभिः ॥ ११ ॥
तप्तोहं न चिदाकाशो दृश्यसूर्यप्रतापतः ।
नापि शीतलितो बोधशरद्राकासुधाकरात् ॥ १२ ॥
निरस्तमोहतमसश्चिद्व्योम्न इदमेव मे ।
लक्षणं यत्रकुत्रापि कामोलूकरवोदयः ॥ १३ ॥
विचित्रवर्णं वक्रं च जगदिंद्रधनुर्मयि ।
उदेतु ब्रह्मगगने तावता न मयेंद्रता ॥ १४ ॥
स्फुरतु द्वैतधूमोपमविद्यावाववन्हिजः ।
मयि चिन्नभसि स्फारे सौरभासौरभादिकम् ॥ १५ ॥
मनोविहंगो भ्रमतु स्फारे मयि चिदंबरे ।
अचलो वास्तु शाखाग्रे न मे दुःखसुखे ततः ॥ १६ ॥
संध्यारागेण का शोभा मम चिन्नभसो भवेत् ।
अरिष्टानां प्रचारेण किंवा वैरूप्यमापतेत् ॥ १७ ॥
शांतिशारदकौमुद्या यातु शीतलतां जगत ।
ताप एवान्यत्राभूच्चित्खे मयि शमः कुतः ॥ १८ ॥
अखंडं परिपूर्णं च सर्वत्रास्मि निरामयं ।
अहं चिद्गगनं नित्यं निर्मलं निर्भयं सदा ॥ १९ ॥
अज्ञानघनयोगेन भामि यद्यपि मूर्तवत् ।
तथाप्यमूर्त एवास्मि चिदाकाशः सदा शुचिः ॥ २० ॥
अनंते मयि चिन्मात्रे न तमो भाति कुत्रचित् ।
न शारदामृतकरोप्युदिते बोधभास्करे ॥ २१ ॥
ज्वलंतु द्वादशादित्या वातु कल्पांतमारुताः ।
वर्षंतु पुष्करावर्ताः का मे चिन्नभसः क्षतिः ॥ २२ ॥
शांतिमंदाकिनीतोये यमहं सालस खलं ।
सुषमाकैवमेतेन स्वप्रकाशविहायसः ॥ २३ ॥
द्वैतद्वितीयचंद्रेऽस्मिन्नुदितेपि न मे ततः ।

अद्वितीयचिदमूर्तेः कुंडालित्वं क्वचिद्भवेत् ॥ २४ ॥
विरक्तिमालतीगंधं विवेकपवनोऽनिशं ।
आनयत्यपि मे तेन चिदाकाशस्य किं सुखं ॥ २५ ॥
अथवा रागदुर्गंधोत्थविचारमरुत् क्वचित् ।
मम चिद्द्वितीयस्तेन किं वा दुःखं भविष्यति ॥ २६ ॥
यद्यपि स्फुटमेवास्मि सदा सर्वत्र चिन्मयः ।
तथापि मां न पश्यंति केपि कुत्रापि निर्द्वयं ॥ २७ ॥
गुर्वगस्त्योदयो यावन्न जातस्तावदेव मे ।
चिद्व्योम्नोऽप्यास मालिन्यमिवाज्ञानघनावृतेः ॥ २८ ॥
तारामौक्तिकहाराढ्या कामिनी यामिनी मयि ।
संसक्तापि चिदाकाशे कं वा क्षोभं करिष्यति ॥ २९ ॥
अखंडानंदगगने मयि चिन्मात्ररूपिणि ।
क्वाभूद्रूपाद्यवति वा दुःखगंधादयोपि वै ॥ ३० ॥
कल्पनावात्यया नाहं भ्रमामि क्वापि चिन्नभः ।
सर्वत्र पूर्ण एवास्मि स्वस्वरूपे निरंजने ॥ ३१ ॥
पूर्णेंदुवदना रामा श्यामा गत्यापि मामियं ।
चिदबरं समायेव शून्यपत्नीव जायते ॥ ३२ ॥
चित्तचातकसंतृप्त्यै भवत्यमृतदः सदा ।
तथापि मम को लाभश्चिदाकाशस्य तावता ॥ ३३ ॥
महासमाधिहेमाद्रिं लब्ध्वापि निरलंकृति ।
सत्तामात्रतनुर्व्योम सर्वदाहमकृत्रिमं ॥ ३४ ॥
तत्वावबोधगरुडो किंवा संकल्पघूघुमः ।
मयि चिन्नभसि स्वैरं विहरत्यविकारिणि ॥ ३५ ॥
दृढबोधभुवावाप्तचाऽयवाऽज्ञो न द्विचंद्रतः ।
स्वयंप्रकाशान्वियतो ममेष्टानिष्टतास्ति का ॥ ३६ ॥
अगता हंसमालापि यद्वा वलिभुगावलिः ।
क्व हर्षः क्व विषादो वा ममाद्वितविहायसः ॥ ३७ ॥
नवैः परभृतारावैरुदमैरपि मारुतैः ।
पुष्पितैः शाखिभिः किंवा मम चिन्नभसो भवेत् ॥ ३८ ॥
श्वेतश्चकोरस्तत्पथं भजतु द्विजपुंगवं ।
शारदागमसंपूर्णं चिदाकाशस्य किं मम ॥ ३९ ॥
शांतिचंद्रिकया रम्ये शीतले निर्मलेपि च ।

संजाते स्नातकांतारे मय्यनते किमागतम् ॥ ४० ॥
यस्य प्रत्यक्षतः सर्वं प्रत्यक्षमिव भासते ।
तं प्रकाशमाकाशं न मां पश्यत्यशीतला ॥ ४१ ॥
मंगलेन बुधेनापि गुरुणा कविना तथा ।
मंदेनापि न मे वृद्धिहानीस्तश्चिद्विहायसः ॥ ४२ ॥
कल्पनाविद्युतो भांतु मोहमेघागमे सति ।
महाध्वनिशतेनापि स्वाकाशे मयि नैव भीः ॥ ४३ ॥
अणिमादिर्महासिद्धिमिहिकाः प्रस्फुरंतु वा ।
निरस्तिपूर्णज्योत्स्ना वा चिद्व्योम्नि मयि किं सुख ॥ ४४ ॥
न तस्य विकृतिः प्रत्यग्मियत क्वापि विद्यते ।
यस्मिन्नारोपितैवेयं द्वैतनीलप्रभा सदा ॥ ४५ ॥
तस्य बोधाम्बरस्यांतर्न विच्छेदो मनागपि ।
भवेत् पाशुपतेनापि स एवानततामियात् ॥ ४६ ॥
उदेतु हरिवर्षाब्दो यद्वेशाशरदबुदः ।
स्वप्रकाशचिदाकाशे तथाप्यैश्वर्यमस्ति किं ॥ ४७ ॥
किं प्रेरयति चिद्व्योम संकल्पशलभावलिं ।
दुःखाय सुखायापि शांतिहमालिमप्यहो ॥ ४८ ॥
संस्कारमारुतवशाद्वातु कोपि कदाचन ।
जीवन्मुक्तिसुगंधो वाऽन्यो वा चिद्व्योम्नि किं ततः ॥ ४९ ॥
गर्जंतु क्रोधजलदाः स्फुरतु रतिविद्युतः ।
पतंतु तृष्णाकरकाश्चिदाकाशस्य किं क्षतं ॥ ५० ॥
मायातिमिरयोगेन भातु नाम कदाचन ।
द्वैतद्वितीयचन्द्रोय बोधात्मगगनस्य किं ॥ ५१ ॥
मोहसूर्यप्रभायोगाद्ब्रह्माडत्रसरेणव ।
कदाचिदुदयं यांतु चिद्व्योम्न किं ततो भवेत् ॥ ५२ ॥
बोधहेमाचलः स्वीयशक्त्या मा तु प्रवर्ततां ।
सकल्पमशकास्यं वा भूमव्योम्न, किमागत ॥ ५३ ॥
यद्यपि स्वच्छमेवास्ति स्वतो विष्णुपदं सदा ।
तथापि बुध्याऽऽरूढं तु शारदामृतदर्शिपा ॥ ५४ ॥
शांतिहेमतशीतेन भवग्रीष्मोष्मणा तथा ।
विकारलेशमपि किं समायाति चिदबर ॥ ५५ ॥
मैत्र्याख्यचैत्रराग्या तु भाति यद्यपि चित्रता ।

अखंडात्मचिदाकाशे लोकदृष्ट्या तथापि किं ॥ ५६ ॥
नानासाधनसंभारशारत्संध्याभ्रभासुरं ।
भातु नाम चिदाकाशं तथापि तु न रागि तत् ॥ ५७ ॥
मित्रेन सप्रभं नापि दोषदातरि विप्रभं ।
अनंतमस्ति द्विजराड्विहारमणिमंदिरं ॥ ५८ ॥
यद्यपि द्वैतगंधर्वपुरभित्तिगतं सदा ।
अद्वैतानंदगगनं न तथापि मलान्वितं ॥ ५९ ॥
अमानित्वशरच्चंद्रतेजसा रमणीयतां ।
यातीव भाति चिद्व्योम निर्विकारं तथापि तत् ॥ ६० ॥
अदंभित्ववसंताम्रसौरभेण सुगंधि किं ।
भातमप्यस्ति कुत्रापि चिद्वियद्वस्तुतः क्वचित् ॥ ६१ ॥
अहिंसातारकावल्ल्या यद्यप्याभाति चित्रवत् ।
सच्चिदानंदगगनं ससंगं न तथापि तत् ॥ ६२ ॥
क्षांतिमंदाकिनीस्वच्छं भातीवात्मवियत् परं ।
न तथापि क्वचित् तस्य संसर्गः सति वाऽसति ॥ ६३ ॥
आर्जवांभोजसहृता चिद्व्योम किमु शीतलं ।
यद्यप्याभाति लोकेऽस्मिन् सरलत्वपरागवत् ॥ ६४ ॥
आचार्योपासनज्योत्स्ना यद्यप्यातनुते शुचि ।
चिद्वियत् किं तथापि स्यात् तच्छुभ्रं तत्प्रसादतः ॥ ६५ ॥
यद्यप्याभाति विमलं शौचचित्रार्कशोचिषि ।
ब्रह्मव्योम तथाप्येतत् तत् प्रागेवामलं स्वतः ॥ ६६ ॥
स्थैर्येणाचलवद्भाति यद्यप्यात्मखमाततं ।
परं त्वमूर्तत्ववशात् तन्नैत्यचलतां क्वचित् ॥ ६७ ॥
आत्मनिग्रहकौमुद्या सितरत्नत्वमागतं ।
किं भूमव्योम कुत्रापि स्वप्रकाशं स्वतः सदा ॥ ६८ ॥
वैराग्यपरिवेषेण सद्वृत्तमिव भाति चेत् ।
भातु नाम चिदाकाशं न परिच्छेदमश्नुते ॥ ६९ ॥
अनहंकाररविणा भात्युज्ज्वलमिवात्मखं ।
तथापि तत्र को नास्ति प्रकाशः स्वप्रभेऽपरः ॥ ७० ॥
दोषदृष्ट्यंबुवृष्ट्यापि किमार्द्रं क्वापि जायते ।
सत्यबोधांबरं लोके दृश्यमानमपि क्वचित् ॥ ७१ ॥

असक्तिखद्योततति: प्रकाशयति यद्यपि ।
बालकल्पनयाऽनंतं तथापि तु न भास्यते ॥ ७२ ॥
पुत्रादिममताभावनवचंद्रोदये क्षणात् ।
द्विजतोषाय भवदप्यात्माकाशं त्वविक्रियं ॥ ७३ ॥
समता यातु सर्वत्र सर्वापेक्षैव सा यतः ।
ततो मुक्तात्मनभसः केन संगोऽस्ति वस्तुतः ॥ ७४ ॥
अनन्यभक्तिमालत्याः सौरभेण दिगंतरं ।
रम्यतां यातु किं तेन मुक्ताकाशे भविष्यति ॥ ७५ ॥
विविक्तदेशसेवित्वकुंदकुंजेन मंजुलं ।
स्फुरदप्यात्मगगनं क्व मंजुलममंजुलं ॥ ७६ ॥
संसद्प्रेमनैर्मल्यात् किं शुचित्वं चिदंबरे ।
स्वभावादेव यत्रास्ति मलाभावः स्वयंप्रभे ॥ ७७ ॥
अध्यात्मज्ञाननित्यत्वमल्लीपरिमलः क्वचित् ।
मुमुक्षुभ्रमरांस्तृप्तिं नयत्वद्वयखेऽस्ति किं ॥ ७८ ॥
तत्त्वसाक्षात्कृतिः स्फीतकस्तूरीमृगसंततिः ।
स्वोड्डानैः पोषयत्वाशाश्चिदाकाशस्य किं ततः ॥ ७९ ॥
अभयस्वर्द्रुमोद्यानं संतोषयतु वै जगत् ।
मुक्तव्योम्नः किमेतेन पुरुषार्थास्पदं भवेत् ॥ ८० ॥
करोतु निर्मलं दृश्य सत्वसंशुद्धिचंद्रिका ।
मुक्तविष्णुपदे को वातिशयस्तेन संभवेत् ॥ ८१ ॥
जीवन्मुक्तचिदाकाशे विशेषाद् ज्ञानभास्वतः ।
स्थितिर्यद्यपि योगेंदोऽपि तस्य ततोऽस्ति किं ॥ ८२ ॥
दानामोदः स्फुरतु वै सत्पात्रपवनेरितः ।
देशकालानुगुण्येन मुक्तानंते किमागतं ॥ ८३ ॥
दमदीपे न दीप्तेपि जीवन्मुक्तमत्यांबरे ।
स्वप्रकाशस्य तस्यातः कः प्रकाशोदयो भवेत् ॥ ८४ ॥
यज्ञकर्पूरकदली वाद्वाशांति व्रजंतु ते ।
पायास्तयापि कोऽर्थः स्यान्मुक्तव्योम्नि ततः खलु ॥ ८५ ॥
स्वाध्यायस्वर्धुनीपूरो वर्धतां विगतार्गलं ।
जीवन्मुक्तांबरे तेन किमायाति वदार्द्रता ॥ ८६ ॥
तपःप्रचंडमार्तंडस्तपतां स्वेच्छयाऽनिशं ।
मुक्तांतरिक्षे किं तेन महात्म्यस्य लवोपि हि ॥ ८७ ॥

गुणातीतनभः सत्यशब्दाख्यगुणयोगतः ।
गुणी वा भाष्यवाप्येषोऽन्यशब्देनैव तत् तनौ ॥ ८८ ॥
अकोधमिद्धगत्या तु भाति यद्यपि चित्रवत् ।
स्थितमत्रापिवत् तत्राप्येतस्मिन् कोऽस्ति विस्मयः ॥ ८९ ॥
स्यागौरविकरागेण रंजनांजनघट्टितः ।
विभातु विष्णुभक्ताख्यः खे ततस्तस्य किं भवेत् ॥ ९० ॥
शांत्यरुंधतिमालोक्य बालाः संतु कृते हिताः ।
ब्राह्मणव्योम्नि को लाभस्ततोऽस्ति स्यादथास वा ॥ ९१ ॥
अंशुनविमानेन मृदुध्वन्यादिभागिव ।
जातमप्यत्रमतितस्तत्राकाशं न गायति ॥ ९२ ॥
मार्दवप्रोल्लसत्पद्ममधुगंधिसुगंधिभृत् ।
तत्वज्ञाम्बरमाभाति तथाप्येतन्न तादृशं ॥ ९३ ॥
ह्रीकुमुद्वनवीथिश्चेद्विचारसकलेंदुना ।
विकासमागताथापि विज्ञखे किं ततो भवेत् ॥ ९४ ॥
अचापलैकमलयानिलो मन्दमुपैति चेत् ।
अद्वैतविद्विपस्यस्मात् को वा शीतलतोदयः ॥ ९५ ॥
तेजःप्राचुर्यतो मादो द्विजेंद्राणां सदास्त्वितः ।
तावता कः पुमर्थोऽभूदनंतस्याभयाकृतेः ॥ ९६ ॥
क्षमया श्लिष्ट इव चेद्भाति भातु यथासुखं ।
आकाशः प्रेक्षणे त्वेष निःसंगः किल सर्वदा ॥ ९७ ॥
धृतिदीधितितस्तज्ज्ञविहायः शैत्यमेति चेत् ।
बालदृष्ट्या तथाप्येतन्नैव रूपि कदाचन ॥ ९८ ॥
अद्रोहपाटलामोदसंदोहः साधुपुष्करं ।
सुरभीकुरुतां नाम किं ततस्तत्र वस्तुतः ॥ ९९ ॥
दयामयपुरीं प्राप्य मोदंतां सर्वजंतवः ।
कोवाऽतिवर्णाश्रमिखे पुमर्थस्तेन संभवेत् ॥ १०० ॥
अखंडमचलं शांतमसंगं शुचि केवलं ।
व्यापकं व्याप्यदृश्यैवानंतमद्वैतमस्म्यहं ॥ १०१ ॥
श्रीरघूत्तमगुर्वंघ्रीः स्वनेत्रशतपत्रवत् ।
दधावाकाशशतकं तद्गृहं समुदेऽच्युतः ॥ १०२ ॥

इत्यच्युतविरचितमाकाशशतकं संपूर्णं.

---

# अथ गोपालकविकृता तारावलिः

इयं कृष्णा मुष्णात्वनवरततृष्णामघमघं ।
सुधीमान्या धन्या शुभविभवविन्यासचतुरा ॥
फलानम्रा ताम्रासमविलसदाम्रागनिकटा ।
महापुण्यारण्याश्रममुनिशरण्या झटिति नः ॥ १ ॥
गुणोदीर्णा कर्णामृतचरितपूर्णामलजला ।
मिलत्पारावारा मिथिलतनयाराधिततटा ॥
त्रयीपद्याविद्या सुकविकृतपद्याङ्कितकथा ।
कृपाभिख्यं सौख्यं मम दिशतु सुख्यातिकचरा ॥ २ ॥
जगद्गूढा मूढावनकरणगाढादरवती ।
शुभारंभा जंभाहितनिरतसंभावितयशाः ॥
सविद्वर्याश्चर्यास्पदमिलदमर्यादमहिमा ।
मयि प्रीता माता भवतु भयभीतादरयुता ॥ ३ ॥
स्तुवद्वर्गा स्वर्गार्पणचणनिसर्गा मतिमतां ।
कुधीदुर्गा गर्गाद्यखिलमुनिवर्गाभिलषिता ॥
नुतक्रीडा पीडाद्दतिनिपुणचूडामणिरसौ ।
मुदे शस्ता नस्तादनुसृतिनिरस्ताखिलविपत् ॥ ४ ॥
सरोजालीपाली सविहृतमरालीकलरवा ।
मरुद्वाला खेलातरलकुचशैलाहततरा ॥
जगद्भूभाभाषापतिसरसभाषाविषयभू- ।
मम श्रेयो भूयो दिशतु सदुपायोदयभृतौ ॥ ५ ॥
सुधाभाधारायासुरभुवनसोपानतरणि- ।
मिलद्भृंगासंगामितकमलशृंगारवसतिः ॥
दलत्तृष्णा सिष्णास्यवनकृतिनिष्णातधिषणा ।
ममोत्तापं पापं शमयतु कृपापन्हुतभया ॥ ६ ॥
खलाभीलां नीलांबुजवनविशालां हृदि भजे ।
चलद्ग्राहां मोहांबुधिसदवगाहांकितराणि ॥
घृणालंबामंबां मदशिखरिशंबां भगवतीं ।
शुभोपांतां शांतां सलिलनिधिकांतां सुचरितां ॥ ७ ॥
मरुच्चेटीकोटीश्रितनिकटपाटीरविपिना ।
सदा गीता पूता तटपवनपोताहतकणा ॥

मिलद्वेणी वार्णापतिसरसवाणीषु मुदिता ।
महःसीमा सा मामवतु निजनामातिफलुकं ॥ ८ ॥
अहं मंदो मंदोदरि विगुणसंदोहभरितो ।
मृषा ज्ञानी मानी प्रकृतिकुटिलो नीतिरहितः ॥
तपोहीनो दीनो मलिनमतिरेनोनिवसतिः ।
न मे हित्वाहित्वा शरणमिति भवार्तमव मा ॥ ९ ॥
शुभाधारे तीरे तव भुवनसारे निवसतिः ।
गतापायं तोयं न तव भरितायं भजितवान् ॥
न ते श्रीमन्नाम प्रणुतममिरामाक्षरयुतं ।
महातृष्णे घोष्णे मयि तदपि कृष्णे कुरु कृपां ॥ १० ॥
न भूदेवान् देवान् हितफलदतावांसमभजं ।
बृहद्दानोर्मोनैर्बलिमथ च धेनोर्न कृतवान् ॥
मया त्यक्तं भक्तं ह्यतिथिषु न नक्तं दिवमहो ।
कृपामात्रं चित्रं नदवनचरित्रं जननि ते ॥ ११ ॥
अलब्धेष्टं दुष्टं ह्रदयमतिकष्टं जननि मे ।
भवापायः कायस्तटिनि विगताय. खलु मम ॥
मदाद्यानाथानां न करणहयानां स्ववशता ।
सदालंबो त्वां मां कथमनवलंबां न रचये ॥ १२ ॥
न देवा वासो वा मदभिरचितो वास्तु विधिना ।
मनोरामाऽरामा जननि न मया मार्गनिहिता ॥
कृपावद्भिः सद्भिः समजनि महद्भिर्न सखिता ।
विना त्राता नेता मम कुशलदाता न भवती ॥ १३ ॥
सुपृथ्वीशा देशा भरितधनलेशाः परिचिता ।
धनं धावधावं समयधृतभावं ह्युपचितं ॥
घृतासिक्तं भुक्तं हितसरसभक्तं प्रतिगृहं ।
तथाप्येतच्चेतः सुखमलभतालन्वदपि नः ॥ १४ ॥
बृहत्खेलः कालस्तटिनि सुविशालः परिगतो ।
व्ययावेशात् क्लेशाः कति गिरिनिकाशाः परिचिताः ॥
मिलद्रोहाः कूहारचितपरमोहाः कति कृता ।
न संसारेऽसारे जननि सविकारेस्ति कुशलं ॥ १५ ॥
क्व जातोहं कोहं कथमतिदशोहं नु क इमे ।
इति ज्ञानाद्दीना भ्रमति न निधाना मम मतिः ॥

अये मातर्नीतः किमपरमपेतस्त्वमहसा ।
भवाक्रांतं श्रांतं तमसि निपतंतं कलय मां ॥ १६ ॥
कदोदीर्णा पूर्णा भवति मयि कीर्णा तव कृपा ।
कदाधीतज्ञानस्थिरचिदभिमानात्तगतिमान् ॥
कदा सोहं सोहं मतिनिरसिताहंकृतिगुणः ।
कदा तत्वं तत्वं जननि गतमत्वं ह्यधिगमे ॥ १७ ॥
यदीक्षायाः सायात्वमपि विषयं याति स कृती ।
त्वया दृष्टो दृष्टो यदि जननि शिष्टोथ सुकृती ॥
मदाभोग्यं भाग्यं द्वितयमपि योग्यं सुघटितं ।
क्व मे श्रांतिः क्रांतिः क्व च कलुषशांतिः समजनि ॥ १८ ॥
अहो धन्यो मान्यो भवमय न मान्यो मदुपमः ।
सतामाशी राशीकृतशुभवदाशीघ्रफलिता ॥
महत्सेवा देवार्चनविधिकला वा फलयुता ।
यतः प्रीता माता त्वमसि मम जाताक्षिविषया ॥ १९ ॥
प्रसादात् ते चित्ते स्फुरति कृतनर्तेव कविता ।
विपज्जालं लोलं पवनहततूलं तदिव मे ॥
अहो देशाधीशा ददति धनमाशासमुचितं ।
न मे कस्यार्थस्याप्यलमवमता स्याद्जगपति ॥ २० ॥
अहो मायामेया जगदिदमजेया वृतवती ।
सविक्षेपारूपावृतिसहजरूपा द्विजनुभाक् ॥
तया क्रांतः स्वांतश्चरति बहिरंतर्भ्रमयुतो ।
भवत्स्वांतो भ्रांतो द्वितयविगतांतो भवति ना ॥ २१ ॥
किपद्यस्यास्तिस्रः सकलुषसहस्राः खलु दशा ।
स्तदावेशात् क्लेशाद् भ्रमति सुखलेशाच्च तनुभृत् ॥
सकर्मोज्ञश्चाज्ञः स्वविपदनभिज्ञश्चरति ना ।
स किं भावा ना वा सति भवदसेवाफलमिदं ॥ २२ ॥
द्विजः श्रीमान् धीमान् पतिरहमभीमान् विनयवा- ।
निति भ्रांत्यानंत्यादविदितनिजापायपदुदयः ॥
स निर्बंधश्चांधः पतति दृढबंधश्चिरमध- ।
स्तवोपेक्षावीक्षाकरणमयि साक्षाद्विपदि नुः ॥ २३ ॥
अहं देवि त्वाविर्भवदमलधीविस्फुटमहा- ।
रिपुं जित्वा हित्वा भ्रममुदिततत्वार्थविभवः ॥

अये दिव्ये भव्ये मनसि मुनिभाव्ये निदमलं ।
परं ज्यायो भूयो निरवधिविहायोभिकलये ॥ २४ ॥
अये पारावारप्रणयिनि विहारस्फुटगुणे ।
नमस्तुभ्यं सभ्यं जननि मदलभ्यं न जगति ॥
इदं याचे ते चेन्मनसि भव मे चेतसि सदा ।
सुधाप्रायं गेयं कुरु तदभिधेयं वचसि मे ॥ २५ ॥
महादेव्यै दिव्यैरभिनुतपदव्यै मम नमः ।
कृपारव्यै सत्यैरनवहितमत्यै मम नमः ॥
मिलद्वृष्ण्यै पुण्यैरविरलतरुण्यै मम नमः ।
प्रकाशिन्यै धन्यै त्रिभुवनजनन्यै मम नमः ॥ २६ ॥
दलत्तृष्णे कृष्णे लसदभयदोष्णे भवतु ते ।
सदाराध्ये बोध्ये बहुसुकृतसाध्ये भगवति ॥
स्फुरद्गात्रे मात्रे बहुविधचरित्रे त्रिभुवने ।
नमो भूयो भूयोऽविरलमपि भूयो मम नमः ॥ २७ ॥
इयं तारा तारावलिरमलतारासमपदा ।
मया न्यस्ता सास्तादधिधरणि शस्ता तव मुदे ॥
फलासक्त्या भक्त्यानवरतविरक्त्यापि पठतां ।
शुभं देहि त्राहि द्रुतमपि विधेहि प्रपशदः ॥ २८ ॥
श्रीकुदोत्पलगोपालकविना रचितानघा ।
तारावलिरियं भूयात् पठतां शृण्वता मुदे ॥ २९ ॥

समाप्ता

---

## आग्निवेश्यरामायणान्तर्गतम्

# श्रीरामचरितम्.

सीताविवाहाद् रावणवधानंतरं रामराज्याभिषेकपर्यन्तम्

रामः पंचदशे वर्षे षड्वर्षामपि मैथिलीम् ।

---

१. ऊन षोडशवर्षो मे रामो राजीवलोचनः ।
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥
२० सर्ग, बालकांड, वाल्मीकि रामायण.

प्रत्युवाच महाभागं विश्वामित्र महामुने ।
ऊनषोडशवर्षोयमकृतास्त्रश्च राघवः ॥ ६ ॥
सर्ग १९, अरण्यकांड, वा० रा०.

उपयेमे त्वयोध्यायां द्वादशाब्दानुवास सः ॥ १ ॥
सप्तविंशतिमे वर्षे वनवासमकल्पयत् ।
अष्टादश तु वर्षाणि सीतायास्तु तदाभवन् ॥ २ ॥
त्रिरात्रमुदकाहारश्चतुर्थेऽह्नि फलाशनः ।
पञ्चमे चित्रकूटे तु रामो वासमकारयत् ॥ ३ ॥
अथ त्रयोदशे वर्षे पञ्चवट्यां महामनाः ।
रामो विरूपयामास घोरां शूर्पणखां वने ॥ ४ ॥
ततो* माघे सिताष्टम्यां मुहूर्ते वृन्दसंज्ञके ।
राघवाभ्यां विना सीतां जहार दशकन्धरः ॥ ५ ॥
मार्गशुक्लदशम्यां तु वसन्तीं रावणालये ।
सम्पातिर्दशमे मासे आचख्यौ वानरेषु ताम् ॥ ६ ॥
एकादश्यां महेन्द्राग्रात् पुप्लुवे शतयोजनम् ।
तद्रात्रिशेषे सीताया दर्शनं हि हनूमतः ॥ ७ ॥
द्वादश्यां शिंशपावृक्षे हनूमान् पर्यवस्थितः ।
तस्या निशायां सीताया विश्वासालापसत्कथाः ॥ ८ ॥
अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्तत ।
वधो ह्यक्षकुमारस्य वनविध्वंसनं तथा ॥ ९ ॥
ब्रह्मास्त्रेण चतुर्दश्यां बद्धः शक्रजिता कपिः ।
वह्निना पुच्छयुक्तेन लङ्कायाः दहनं तथा ॥ १० ॥
पौर्णमास्यां महेन्द्राद्रौ पुनरागमनं कपेः ।
मार्गासितप्रतिपदः पञ्चभिः पथि वासरैः ॥ ११ ॥

---

२. उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ।
भुंजाना मानुषान् भोगान् सर्वकाम समृद्धिनी ॥ ३ ॥
१७ सर्ग, अरण्यकाण्ड, वाल्मीकि रामायण.

तत्र तयोदशे वर्षे राजामन्त्रयत प्रभुः ।
अभिषेचयितु रामं समेतो राजमन्त्रिभिः ॥ ५ ॥
१७ सर्ग, अरण्यकाण्ड, वा० रा०.

समा द्वादश तत्राहं राघवस्य निवेशने ।
भुंजाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥ १० ॥
ततस्त्रयोदशे वर्षे राज्ये चेक्ष्वाकुनन्दनं ।
अभिषेचयितुं राजा सोपाध्यायः प्रचक्रमे ॥ १८ ॥
सर्ग ३३, सुन्दरकाण्ड, वा० रा०.

१. अष्टादश हि वर्षाणि मम जन्मनि गण्यते ॥ ११ ॥
३० सर्ग, अरण्यकाण्ड, वा० रा०.

* माघे शुक्लचतुर्दश्याम् इति वा पाठः.

पुनरागम्य पञ्चेऽह्नि ध्वस्तं मधुवनं च तैः ।
सप्तम्यां प्रत्यभिज्ञानदानं शुद्धिनिवेदनम् ॥ १२ ॥
अष्टम्युत्तरफल्गुन्यां मुहूर्ते विजयाभिधे ।
मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य तु ॥ १३ ॥
वासरे सप्तभिर्भोधौ स्कन्धावारनिवेशनम् ।
पौषशुक्लप्रतिपदस्तृतीयायावदम्बुधेः ॥ १४ ॥
उपस्थानं ससैन्यस्य राघवस्य बभूव ह ।
विभीषणश्चतुर्थ्यां वै रामेण सह सङ्गतः ॥ १५ ॥
समुद्रतरणार्थाय पञ्चम्यां मन्त्रउद्गमः ।
प्रायोपवेशनं चक्रे रामो दिनचतुष्टयम् ॥ १६ ॥
समुद्रवरलाभश्च सेतूपायप्रकीर्तनम् ।
सेतोर्दशम्यामारम्भस्त्रयोदश्यां समापनम् ॥ १७ ॥
चतुर्दश्यां सुवेलाग्रे रामः सैन्य न्यवेशयत् ।
पौर्णमास्या द्वितीयान्तं त्रिदिनैः सैन्यतारणम् ॥ १८ ॥
तृतीयाया दशम्यन्तं मन्त्रो गुल्मनिवेशने ।
शुकसारणयोः सैन्यप्राप्तिरेकादशे दिने ॥ १९ ॥
पौषेऽसितायां द्वादश्यां सैन्यसङ्ख्या कृता तु वै ।
सारणेन कपीनां तु सारासारोपवर्णनम् ॥ २० ॥
त्रयोदश्याद्यमां यावल्लङ्कायां त्रिधसैस्त्रिभिः ।
रावणसैन्यसङ्ख्यानं रणायोत्साहनं तथा ॥ २१ ॥
यथावयाद्ङ्गदो दौत्यं माघशुक्लादिवासरे ।
माघशुक्लद्वितीयादिदिनैः सप्तभिरेव तु ॥ २२ ॥
रक्षसां वानराणां च युद्धमासीत् सुदारुणम् ।

---

१. अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचय ।
युक्तो मुहूर्तो विजयो प्राप्तो मध्यं दिवाकरः ॥ ३ ॥
उत्तरा फल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ५ ॥
सर्ग ४, युद्धकांड, वा० रा०.

* सुवेलं साधु शैलेन्द्रमिमं धातुशतैश्चितम् ।
अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ २ ॥
ततोऽस्तमगमत् सूर्यः संध्यया प्रतिरञ्जितः ।
पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्तत ॥ १२ ॥
सर्ग ३८, युद्धकाण्ड, वा. रा.

माघशुक्लनवम्यां तु रात्राविन्द्रजिता रणे ॥ २३ ॥
रामलक्ष्मणयोर्नागपाशैर्बन्धो बभूव ह ।
नागपाशविमोक्षार्थं दशम्यां गरुडोऽभ्यगात् ॥ २४ ॥
अवहारः कथितो दशम्यादिदिनद्वयम् ।
द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः ॥ २५ ॥
त्रयोदश्यां तु तेनैव निहतोऽकम्पनो रणे ।
माघशुक्लचतुर्दश्यां यावत् कृष्णादिवासरम् ॥ २६ ॥
त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः ।
माघासितद्वितीयायाश्चतुर्थ्यन्तं त्रिभिर्दिनैः ॥ २७ ॥
रामेण तुमुले युद्धे रावणो द्रावितो रणात् ।
पञ्चम्यास्त्वष्टमीयावद्रावणेन प्रबोधितः ॥ २८ ॥
कुम्भकर्णः प्रमुत्तस्यावत्रायुद्धं चतुर्दिनम् ।
कुम्भकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम् ॥ २९ ॥
रामेण निहतो युद्धे बहुवानरभक्षकः ।
अमावास्यादिने शोकादवहारो बभूव ह ॥ ३० ॥
फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तदिनैस्ततः ।
नरान्तकप्रभृतयो निहताः पञ्च राक्षसाः ॥ ३१ ॥
पञ्चम्याः सप्तमीयावदतिकायवधस्त्र्यहात् ।
अष्टम्या द्वादशीयावन्निहतौ दिनपञ्चकात् ॥ ३२ ॥
निकुम्भकुम्भावूर्ध्वं तु मकराक्षश्चतुर्दिनैः ।
फाल्गुनस्य द्वितीयायां कृष्णे शक्रजिता जितम् ॥ ३३ ॥
तृतीयायास्तु सप्तम्यां ह्रयः पञ्च वासरान् ।
ओषध्यानयने व्यग्रास्तदासीदवहारकः ॥ ३४ ॥
तत्र त्रयोदशीं यावद् दिनैः षड्भिस्तु शक्रजित् ।
लक्ष्मणेन हतो युद्धे विघ्नितोऽभिचरन् क्रमात् ॥ ३५ ॥
चतुर्दश्यां‡ दशग्रीवो रणदीक्षाविधिक्रमात् ।
अमावास्यां ययौ वीरो युद्धाय दशकन्धरः ॥ ३६ ॥
चैत्रशुक्लप्रतिपदः पञ्चमीदिनपञ्चकैः ।
रावणस्य प्रधानानां युध्यतामभवत् क्षयः ॥ ३७ ॥

---

‡ अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशी ।
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥ १२ ॥
सर्ग १२, युद्धकांड, वा. रा.

चैत्र पञ्चचष्टमीयावन्महापार्श्वादिमारणम् ।
चैत्रशुक्लनवम्यां तु सौमित्रेः शक्तिभेदनम् ॥ ३८ ॥
द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः ।
दशम्यामवहारोऽभूद् रात्रौ युद्धं नृरक्षसोः ॥ ३९ ॥
एकादश्यां तु रामाय रथो मातलिसारथिः ।
अष्टादशदिने रामो द्वैरथे रावणं वधीत् ॥ ४० ॥
द्वादश्याः शुक्लपक्षस्य यावत् कृष्णचतुर्दशीम् ।
माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम् ॥ ४१ ॥
अष्टाशीतिदिनं युद्धं मध्ये पञ्चदशाहकम् ।
युद्धावहारं सङ्ग्रामस्त्रिसप्ततिदिनान्यभूत् ॥ ४२ ॥
संस्कारो रावणादीनाममावास्यादिनेऽभवत् ।
वैशाखादितिथौ रामः सुवेलं पुनरागमत् ॥ ४३ ॥
अभिषिक्तो द्वितीयायां लङ्काराज्ये बिभीषणः ।
सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम् ॥ ४४ ॥
वैशाखस्य चतुर्थ्यां तु रामः पुष्पकमास्थितः ।
पूर्णे चतुर्दशे वर्षे पञ्चम्यां माधवस्य तु ॥ ४५ ॥
भरद्वाजाश्रमं रामः सगीतः पुनरागमत् ।
नन्दिग्रामे तु षष्ठ्यां वै भरतेन समागतः ॥ ४६ ॥
सप्तम्यामभिषिक्तोऽसावयोध्यायां रघूत्तमः ।
जानकी रामरहिता रावणस्य निवेशने ॥ ४७ ॥
मनुमासान् स्थिता पक्षं दशवासरसंयुतम् ।

समाप्तं.

---

## अष्टादशश्लोकी गीता.

### अर्जुन उवाच.

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविंद किं भोगैर्जीवितेन वा ॥ १ ॥

---

*. पूर्णे चतुर्दशे वर्षे पंचम्यां लक्ष्मणाग्रजः ।
भरद्वाजाश्रमं प्राप्य ववंदे नियतो मुनिम् ॥ १ ॥
सर्ग १२४, युद्धकांड, वा० रा०.

पूर्णे चतुर्दशे वर्षे पञ्चम्यां रघुनन्दन' ।
भरद्वाज मुनिं दृष्ट्वा ववंदे सानुज' प्रभुः ॥ १५ ॥
सर्ग १४, युद्धकांड, अध्यात्मरामायण.

श्रीभगवानुवाच.

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः
अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २ ॥
तत्ववित् तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तंत इति मत्वा न सज्जते ॥ ३ ॥
ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥ ४ ॥
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ ५ ॥
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥ ६ ॥
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ७ ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ ८ ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ९ ॥
अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ १० ॥

अर्जुन उवाच.

स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ११ ॥

श्रीभगवानुवाच.

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १२ ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ १३ ॥
प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ १४ ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधं ॥ १५ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ १६ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १७ ॥

अर्जुन उवाच,

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ १८ ॥

संजय उवाच,

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १९ ॥

समाप्ता

---

## वेदान्तसमासः

स्मर कृष्णं भज हरिं नम विष्णुं श्रयाच्युतम् ।
त्यज कामं जय क्रोधं जय मोहं भवालयम् ॥ १ ॥
शृणु शौरिकथां पुण्यां पश्य श्रीपतिविग्रहम् ।
जिघ्र श्रीपादतुलसीं स्पर्श वैकुण्ठवल्लभम् ॥ २ ॥
भुङ्क्ष्व केशवनैवेद्यं तिष्ठ माधवमन्दिरे ।
जप नारायणमनुं पठतां नाममङ्गलम् ॥ ३ ॥
पाहि प्रपन्नजनतां ब्रूहि तत्त्वहितं नृणाम् ।
देहि काङ्क्षितमार्तेभ्यो याहि सज्जनसङ्गतिम् ॥ ४ ॥
कुरु भूतदयां नित्यं चर धर्ममहर्निशं ।
जानीहि नित्यमात्मानं त्वदेहे सुजनवरं ॥ ५ ॥
पञ्च श्लोकानिमाञ्छ्रुत्वा पठ धारय चिन्तय ।
एतावान् सर्ववेदान्तः समासेन निरूपितः ॥ ६ ॥

समाप्तः

---

## नीलकंठदीक्षितकृतं कलिविडंबनं.

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः ।
झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥ १ ॥
असंभ्रमो विलज्जत्वमवज्ञा प्रतिवादिनि ।

हासो राज्ञस्तवश्चेति, पंचैते जयहेतवः ॥ २ ॥
उच्चैरुद्‌घोष्य जेतव्यं मध्यमश्चेदपंडितः ।
पंडितो यदि तत्रैव पक्षपातोऽधिरोप्यतां ॥ ३ ॥
लोभो हेतुर्धनं साध्यं, दृष्टांतस्तु पुरोहितः ।
आत्मोत्कर्षो निगमनमनुमानेष्वयं विधिः ॥ ४ ॥
अभ्यस्यं लज्जमानेन तत्वं जिज्ञासुना चिरं ।
जिगीषुणा ह्रियं त्यक्त्वा कार्यः कोलाहलो महान् ॥ ५ ॥
पाठनैर्ग्रंथनिर्माणैः प्रतिष्ठा यावदाप्यते ।
एवं सतस्तु व्युत्पत्तिरायुषोंतो भवेन्न वा ॥ ६ ॥
स्तोतारः के भविष्यंति मूर्खस्य जगतीतले ।
न स्तौति चेत् स्वयं च स्वं कदा तस्यास्तु निर्वृतिः ॥ ७ ॥
वाच्यता समयोतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतो ग्रंथे काठिन्यं कुत्र वर्तते ॥ ८ ॥
अगतित्वमतिश्रद्धा ज्ञानाभासेन तृप्तता ।
त्रयः शिष्यगुणा ह्येते मूर्खाचार्यस्य भाग्यजाः ॥ ९ ॥
यदि न क्वापि सर्वत्र विद्यायां क्रमते मतिः ।
मांत्रिकास्तु भविष्यामो योगिनो यतयोपि वा ॥ १० ॥
अविलंबेन संसिद्धौ मांत्रिकैराप्यते यशः ।
विलंबे कर्मबाहुल्यं व्याख्यायाप्यावाप्यते धनं ॥ ११ ॥
सुखं सुखिषु दुःखेपि जीवनं दुःखशालिषु ।
अनुगृह्यते येषां ते धन्याः खलु मांत्रिकाः ॥ १२ ॥
यावदज्ञानतो मौनमाचारो वा विलक्षणः ।
तावन्महात्म्यरूपेण पर्यवस्यति मांत्रिके ॥ १३ ॥
चारान् विचार्य दैवज्ञैर्वक्तव्यं भूभुजां फलं ।
गृहचारपरिज्ञानं तेषामावश्यकं यतः ॥ १४ ॥
पुत्र इत्येव पितरि कन्यकेत्येव मातरि ।
गर्भप्रश्नेषु कथयन् दैवज्ञो विजयी भवेत् ॥ १५ ॥
आयुःप्रश्ने दीर्घमायुर्वाच्यं मौहूर्तिकैर्गुणैः ।
जीवंतो बहुमन्यंते मृताः प्रक्ष्यंति के पुनः ॥ १६ ॥
सर्वं कोटिद्वयोपेतं सर्वं कालद्वयावधि ।
सर्वं व्यामिश्रमिव च वक्तव्यं दैवचिंतकैः ॥ १७ ॥
निर्धनानां धनावाप्तिर्धनिनामधिकं धनं ।

मृषाणाः सर्वथा माद्या लोकैर्ज्यौतिषिका जनाः ॥ १८ ॥
घातस्य लाभे तांबूलं सहस्रस्य तु भोजनं ।
दैवज्ञानामुपालंभो नित्यः कार्यविपर्यये ॥ १९ ॥
अपि सागरपर्यंतं विचेतव्या वसुंधरा ।
देशो ह्यरत्निमात्रोपि नास्ति दैवज्ञवर्जितः ॥ २० ॥
घारान् केचिद् महान् केचित् केचिदृक्षाणि जानते ।
त्रितयं ये विजानंति ते वाचस्पतयः स्वयं ॥ २१ ॥
नैमित्तिकाः स्वप्नकाशी देवतोपासका इति ।
निसर्गशत्रवः सृष्टा दैवज्ञानाममी त्रयः ॥ २२ ॥
स्वस्थैरसाध्यरोगैश्च जंतुभिर्नास्ति किंचन ।
कातरा दीर्घरोगाश्च भिषजां भाग्यहेतवः ॥ २३ ॥
नातिधियं प्रदातव्यं नातिर्भातिश्च रोगिणे ।
नैश्चिंत्याल्लाघिमे दानं नैराश्यादेव चातिमे ॥ २४ ॥
भैषज्यं तु यथाकामं पथ्यं तु कठिनं वदेत् ।
आरोग्यं वैद्यमाहात्म्यादन्यथा त्वपथ्यतः ॥ २५ ॥
निदानं रोगनामानि साध्यासाध्यचिकित्सितं ।
सर्वमप्युपदेक्ष्यंति रोगिणः सदने स्त्रियः ॥ २६ ॥
जृंभमाणेषु रोगेषु म्रियमाणेषु जंतुषु ।
रोगार्तेषु शनैर्व्युत्पद्यंते चिकित्सकाः ॥ २७ ॥
प्रवर्तनार्थमारंभे मध्ये स्वौषधहेतवे ।
बहुमानार्थमंते च जिहीर्षंति चिकित्सकाः ॥ २८ ॥
लिप्स्यमानेषु वैद्येषु चिरादासाद्य रोगिणं ।
वावादाः संप्रोहंति दैवज्ञा मांत्रिका अपि ॥ २९ ॥
रोगस्योपक्रमे सांत्वं मध्ये किंचिद्धनव्ययः ।
शनैरनादरः शांतौ स्नातो वैद्यं न पश्यति ॥ ३० ॥
दैवज्ञत्वं मांत्रिकता भैषज्यं चाटुकौशलं ।
एकैकमर्थलाभाय द्वित्रियोगस्तु दुर्लभः ॥ ३१ ॥
अनृतं चाटुवादश्च धनयोगो महानयं ।
सत्यं विदुष्यमित्येव योगो दारिद्र्यकारकः ॥ ३२ ॥
कातर्यं दुर्विनीतत्वं कार्पण्यमविवेकिता ।
सर्वमार्जंति कवयः शालिनीमुष्टिकिंकराः ॥ ३३ ॥
न कारणमपेक्षंते कवयः स्तोतुमुद्यताः ।

किंचिदस्तुवतां तेषां जिव्हा फुरफुरायते ॥ ३४ ॥
स्तुतं स्तुवंति कवयो न स्वतो गुणदर्शिनः ।
कीटः कश्चिदलिर्नाम कियती तत्र वर्णना ॥ ३५ ॥
एकैव कविता पुंसां ग्रामायाश्वाय हस्तिने ।
अंततोऽन्नाय वस्त्राय तांबूलाय च कल्पते ॥ ३६ ॥
शब्दाख्यमपरं ब्रह्म संदर्भेण परिष्कृतं ।
विक्रीयते कतिपयैर्वृथान्यैर्विनियुज्यते ॥ ३७ ॥
वर्णयंति नराभासान् वाणीं लब्ध्वापि ये जनाः ।
लब्ध्वापि कामधेनुं ते लांगले विनियुंजते ॥ ३८ ॥
प्रशंसंतो नराभासा प्रलपंतोन्यथान्यथा ।
कथं तरंतु कवयः काममारम्यवादिनः ॥ ३९ ॥
यत्संदर्भे यदुल्लेखे यद् व्यंगे निभृतं मनः ।
समाधेरपि तल्लाभः शंकरो यदि वर्ण्यते ॥ ४० ॥
गृहिणी भगिनी तस्याः श्वशुरौ श्याल इत्यपि ।
प्राणिनां कलिना सृष्टाः पंच प्राणा इमे परे ॥ ४१ ॥
जामातरो भागिनेया मातुला वारबांधवाः ।
अज्ञाता एव गृहिणां प्रक्षयंत्याखुवद्गृहे ॥ ४२ ॥
मातुलस्य बलं माता जामातुर्दुहिता बलं ।
श्वशुरस्य बलं भार्या स्वयमेवातिथेर्बलं ॥ ४३ ॥
जामातुर्वक्रता तावद्यावच्छालस्य बालता ।
प्रबुध्यमाने सारल्यं प्रबुद्धेस्मिन् पलायनं ॥ ४४ ॥
भार्या ज्येष्ठा शिशुः श्यालः श्वश्रूः स्वातंत्र्यशालिनी ।
श्वशुरस्तु प्रवासी च जामातुर्भाग्यधोरणा ॥ ४५ ॥
भूषणैर्वसनैः पात्रैः पुत्राणामुपलापनैः ।
सकृदागत्य गच्छंती कन्या निर्माष्टि मंदिरं ॥ ४६ ॥
गृहिणी स्वजनं वक्ति शुष्काहारं मिताशनं ।
पतिपक्ष्यांस्तु बव्हाशान् क्षीरपांस्तस्करानपि ॥ ४७ ॥
भार्ये द्वे पुत्रशालिन्यौ भगिनी पतिवर्जिता ।
अश्रांतकलहो नाम योगोयं गृहमेधिनां ॥ ४८ ॥
भार्ये द्वे बहवः पुत्रा दारिद्र्यं रोगसंभवः ।
जीर्णौ च मातापितरावेकैकं नरकाधिकं ॥ ४९ ॥
स्मृते सीदंति गात्राणि दृष्टे प्रज्ञा विनश्यति ।

अहो महदिदं भूतमुत्तमर्णाभिशब्दितं ॥ ५० ॥
अंतकोपि हि जंतूनामंतकालमपेक्षते ।
न कालनियमः कश्चिदुत्तमर्णस्य विद्यते ॥ ५१ ॥
न पश्यामो मुखे दंष्ट्रां न पाशं वा करांचले ।
उत्तमर्णमवेक्ष्यैव तथाप्युद्विजते मनः ॥ ५२ ॥
शास्त्री सांत्वं प्रतीकारः सर्वरोगेषु भेषजं ।
मृत्यौ मृत्युंजयध्यानं दारिद्र्ये तु न किंचन ॥ ५३ ॥
शक्तिं करोति संचारे शीतोष्णे मर्षयत्यपि ।
दीपयत्युदरे वन्हिं दारिद्र्यं परमौषधम् ॥ ५४ ॥
गिरं स्खलंती मीलंती दृष्टिपादौ विसंष्ठुलौ ।
प्रोत्पादयति यावृचापां राजन्निव दरिद्रता ॥ ५५ ॥
जीर्यंति राजविद्विषाज्जार्यत्यविहितान्यपि ।
आकिंचन्यबलाढ्यानामंततोऽश्मापि जीर्यति ॥ ५६ ॥
नास्य चौरा न पिशुना न दायादा न पार्थिवाः ।
दैन्यं राज्यादपि ज्यायो यदि तत्वं विबुद्ध्यते ॥ ५७ ॥
प्रकाशयत्यहंकारं प्रवर्तयति तस्करान् ।
प्रोत्साहयति दायादान् लक्ष्मीः किंचिदुपस्थिता ॥ ५८ ॥
विडंबयंति ये नित्यं विदग्धा धनिनो जनान् ।
त एव तु विडंब्यंते श्रिया किंचिदुपस्थितान् ॥ ५९ ॥
प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलं ॥ ६० ॥
शृण्वंत एव पृच्छंति पश्यंतोपि न जानते ।
विडंबनानि धनिकाः स्तोत्राणीत्येव मन्यते ॥ ६१ ॥
आवृत्य श्रीमदेनाधानन्योन्यकृतसंविदः ।
स्वैरं हसंति पार्श्वस्था बालोन्मत्तपिशाचवत् ॥ ६२ ॥
स्तोतव्यैः स्तूयते नित्यं सेवनीयैश्च सेव्यते ।
न बिभेति न जिन्हेति तथापि धनिको जनः ॥ ६३ ॥
क्षणमात्रं ग्रहावेशो याममात्रं सुरामदः ।
लक्ष्मीमदस्तु मूर्खाणामादेहमनुवर्तते ॥ ६४ ॥
श्रीर्मीसमर्धमासं वा चेष्टित्वा विनिवर्तते ।
विकारस्तु तदारब्धो नित्यो लशुनगंधवत् ॥ ६५ ॥
कंठे मदः कोद्रवजो हृदि तांबूलजो मदः ।

लक्ष्मीप्रदस्तु सर्वांगे पुत्रदारमुखेष्वपि ॥ ६६ ॥
यत्रासीदति वा लक्ष्मीस्तत्रोन्मादः प्रवर्तते ।
कुलेष्ववतरत्येष कुष्टापस्मारवत् कथं ॥ ६७ ॥
अध्यापयंति शास्त्राणि तृणीकुर्वंति पंडितान् ।
विस्मारयंति जातिं स्वां वराटाः पंचषाः करे ॥ ६८ ॥
बिभर्तुं भृत्यान् धनिको दत्तां वा देयमर्थिषु ।
यावद्याचकसाधर्म्यं तावल्लोको न मृष्यति ॥ ६९ ॥
धनभारो हि लोकस्य पिशुनैर्नैव धार्यते ।
कथं ते तल्लघूकर्तुं यतंते परया त्वतः ॥ ७० ॥
समानरूपं पिशुने किमुपक्रियते नरैः ।
द्विगुणं त्रिगुणं चैव कृतांतो लालयिष्यति ॥ ७१ ॥
गोकर्णे भद्रकर्णे च जपो दुष्कर्मनाशनः ।
राजकर्णे जपः सद्यः सर्वकर्मविनाशनः ॥ ७२ ॥
न स्वार्थं किंचिदिच्छति न प्रेर्यते च केनाचित् ।
पदार्थेषु प्रवर्तंते खलाः संतश्च तुल्यवत् ॥ ७३ ॥
कालांतरे ह्यनर्थाय गृध्रो गेहोपरि स्थितः ।
खलो गृहसमीपस्थः सद्योनर्थाय देहिनां ॥ ७४ ॥
शुष्कोपवासो धर्मेषु भैषज्येषु च लघनं ।
जपयज्ञश्च यज्ञेषु रोचते लोभशालिनां ॥ ७५ ॥
किं वक्ष्यतीति धनिकाद्यावदुद्विजते मनः ।
किं प्रक्ष्यतीति लुब्धोपि तावदुद्विजते ततः ॥ ७६ ॥
सर्वमातिथ्यशास्त्रार्थं साक्षात् कुर्वंति लोभिनः ।
भिक्षाकवलमेकैकं ये हि पश्यंति मेदवत् ॥ ७७ ॥
धनपालः पिशाचो हि दत्ते स्वामिन्युपस्थिते ।
धनलुब्धः पिशाचस्तु न कस्मैचन दित्सति ॥ ७८ ॥
दातारोर्थिभिरर्थ्यंते दातृभिः पुनरर्थिनः ।
कर्तृकर्मव्यतीहारादहोनिम्नोन्नतिः कियत् ॥ ७९ ॥
स्वस्मिन्नसति नार्थस्य रक्षकः संभवेदिति ।
निश्चित्यैवं स्वयमपि भुंक्ते लुब्धः कथंचन ॥ ८० ॥
प्रस्थास्यमानः प्रविशेत् प्रतिष्ठति दिने दिने ।
विचित्रानुल्लिखेद्द्विमारितप्रासुरनिर्यायिश्चिरं ॥ ८१ ॥
प्रदीयते विदुष्येक कवौ दश नटे शतं ।

सहस्रं दाम्भिके लोके श्रोत्रिये तु न किंचन ॥ ८२ ॥
षट्कं सन्न्यासराज्य वैराग्ये परमं वहेत् ।
तावद्दर्पाः प्रसिध्यंति यावद्यावन्नमादृतं ॥ ८३ ॥
एकतः सर्वशास्त्राणि तुलसीकाष्ठमेकतः ॥
वक्तव्यं किंचिदित्युक्तं वस्तुतस्तुलसी वरा ॥ ८४ ॥
विस्मृतं वा हठेनेदं तुलस्याः पठता गुणान् ।
विश्वसंमोहिनी वित्तदायिनीति गुणद्वयं ॥ ८५ ॥
कौपीनं भसितालेपो दर्भा रुद्राक्षमालिका ।
मौनमेकासिका चेति मूर्खसंजीवनानि षट् ॥ ८६ ॥
वासः पुण्येषु तीर्थेषु प्रसिद्धश्च मृतो गुरुः ।
अध्यापनवृत्तयश्च कीर्तनीया धनार्थिभिः ॥ ८७ ॥
मंत्रसंघो संप्रदायः परोक्षश्रुतसंस्कृती ।
देशधर्मस्त्वनाचारे पृच्छतां सिद्धमुत्तरं ॥ ८८ ॥
यथा जानंति बहवो यथा वक्ष्यति दातरि ।
तथा धर्मं चरेत् सर्वं न वृथा धर्ममाचरेत् ॥ ८९ ॥
सदा जपपटो हस्ते मध्ये मध्येक्षिमीलनं ।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्ययहेतवः ॥ ९० ॥
सा मध्यान्हं नदीवासः समाजे देवतार्चनं ।
सततं शुचिवेषश्चेत्येतद्दंभस्य लक्षणं ॥ ९१ ॥
तावद्दीर्घं नित्यकर्म यावत् स्याद् द्रष्टृमेलनं ।
तावत् संक्षिप्यते सर्वं यावद् द्रष्टा न विद्यते ॥ ९२ ॥
आनंदबाष्परोमांचौ यस्य स्वेच्छावशंवदौ ।
किं तस्य साधनैरन्यैः किंकराः सर्वपार्थिवाः ॥ ९३ ॥
दंड्यमाना विकुर्वंति लाड्यमानास्ततस्तरां ।
दुर्जनानामतो नान्यं दूरादेव विसर्जनं ॥ ९४ ॥
अदानमीषद्दानं च किंचित् कोपाय दुर्धियां ।
संपूर्णदानं प्रकृतिर्विरामो वैरकारणं ॥ ९५ ॥
व्याख्यानरसिको दुष्टैर्विवादे संस्तवः किल ।
अपत्यसंबंधविधिरनर्थायैव केवलं ॥ ९६ ॥
ज्ञातेयं ज्ञानहीनत्वं पिशुनत्वं दरिद्रता ।
मीलंति यदि चत्वारि तद्दिशोऽपि नमो नमः ॥ ९७ ॥
परच्छिद्रेषु हृदयं परवार्तासु च श्रवः ।

परमर्माणि वाचं च खलानामसृजद्विधिः ॥ ९८ ॥
विषेण पुच्छलग्नेन वृश्चिकः प्राणिनामिव ।
कलिना दशमांशेन कालः सर्वोपि दारुणः ॥ ९९ ॥
यत्र भार्यागिरो वेदा यत्र धर्मोर्थसाधनं ।
यत्र स्वप्रतिभानं च तस्मै श्रीकलये नमः ॥ १०० ॥
काममस्तु जगत् सर्वं कालस्यास्य वशंवद ।
कालकाल प्रपन्नानां कालः किं न करिष्यति ॥ १०१ ॥
कविना नीलकंठेन कलेरेतद्विडंबनं ।
रचितं विदुषां प्रीत्यै राजस्थानानुमोदनम् ॥ १०२ ॥
इति श्रीनीलकंठदीक्षितरचितं कलिविडंबनं समाप्तम्.

---

## शंकराचार्यकृतं नारायणस्तोत्रं.

घननीरदसंकाश कृतकलिकल्मषनाश नारायण नारायण जय गोविंद हरे १
यमुनातीरविहार धृतकौस्तुभमणिहार नारायण नारायण जय गोविंद हरे २
सरसिजदलनिभनेत्र जगदारंभकसूत्र नारायण नारायण जय गोविंद हरे ३
पीताम्बरपरिधान सुरमुनिअंतरध्यान नारायण नारायण जय गोविंद हरे ४
राधाधरमधुरसिक रजनीकरकुलतिलक नारायण नारायण जय गोविंद हरे ५
बर्हिणबर्हापीड नटनाटिफणिक्रीड नारायण नारायण जय गोविंद हरे ६
मंजुलगुंजाभूष मायामानवेष नारायण नारायण जय गोविंद हरे ७
मिलदलिकुलरनमाल आभासितवनमाल नारायण नारायण जय गोविंद हरे ८
मुरलीगानविनोद वेदस्तुतपाद नारायण नारायण जय गोविंद हरे ९
करुणापारावार वरुणालयगंभीर नारायण नारायण जय गोविंद हरे १०
उद्धृतभूधरभार हतधेनुकचाणूर नारायण नारायण जय गोविंद हरे ११
वारिजेभजकवरूण राजितरुक्माभरण नारायण नारायण जय गोविंद हरे १२
इति श्रीमच्छंकराचार्यविरचितं नारायणस्तोत्रं संपूर्णम्